# वेदपुराणेष्वैतिह्यसन्दर्भाः

## (इतिहासस्य मूलस्रोतांसि)

लेखक—

डा० कुँवरलाल जैन व्यासशिष्य

इतिहासविद्याप्रकाशन, दिल्ली (भारत)

"यह महाग्रन्थ मानवसंसाधनविकास मन्त्रालय भारत सरकार की आर्थिक सहायता से प्रकाशित हुआ ।"

इतिहास विद्या-प्रकाशन
बी-२६-धर्मकालोनी
नांगलोई, दिल्ली—११००४१

प्रकाशन-वर्ष—१९९०
मूल्य ११३ रुपयेमात्र

मुद्रक—आचार्य प्रिंटिंग प्रेस
दयानन्दमठ, गोहाना रोड
रोहतक—१२४००१
दूरभाष—७२८७४

(अभूतपूर्वसंकलनम्)

शोधार्थिनां कृतेऽनिवार्यो भागद्वयात्मको ग्रन्थः

(हिन्दी-अनुवाद सहितः)

# वेदपुराणेष्वैतिह्यसन्दर्भाः

तत्र प्रथमे भागे—"वैदिकग्रन्थेष्वैतिह्यसन्दर्भाः"

द्वितीये भागे—"पुराणेष्वैतिह्यसन्दर्भाः"

## पुराणेषु वंशपाठः, वंशानुचरितं, परिशिष्टानि च

संकलनकर्त्ता अनुवादकश्च—

डा० कुँवरलाल जैन 'व्यासशिष्य'

इतिहास विद्याप्रकाशन, दिल्ली

# आमुखम्

प्रायेण द्विशतीपूर्वं पाश्चात्याः भेदनीतिपद्धतिपद्धत्या भारतीयानां धर्मसम्प्रदायसाहित्यसंस्कृतिकलाविज्ञानादिषु सर्वत्र मिथ्याभेदं प्रवर्तयामासुः, यथा चोक्तं शास्त्रेषु—

असुर्या नाम ते लोका अन्धेन तमसावृत्ताः ।

(ईशोपनिषदि)

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।।
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद् गृहीत्वासद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ।।

(गीतायाम्)

तदनुसारेण ते मिथ्याभिमानिनो वेदवाङ्मये पुराणवाङ्मये च भेदं चक्रुः । तेषां मते प्राचीना ऋषयः, आचार्याः कवयश्च मिथ्यावादिनोऽभूवन्-परन्तु नीरजस्तमा ऋषयः किमर्थमसत्यमवादिषुरिति ज्ञातुं न शक्यते—

रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये ।
येषां त्रिकालममलं ज्ञानमव्याहतं सदा ।।
आप्ताः शिष्टा विबुधास्ते तेषां ज्ञानमसंशयम् ।
सत्यं वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमाः ।।

(चरकसंहितायाम्)

किन्तु पाश्चात्यानां तथा तेषामनुयायिभारतीयानां मते वैदिकग्रन्थेषु वर्णिता ऋषयो राजानश्चान्ये महापुरुषाः पुराणेषूल्लिखितेभ्यः पुरुषेभ्यः पृथक् चासन् । इयं मिथ्यादृष्टिः प्रचलितपाठ्यपुस्तकादिषु दरीदृश्यते । किन्तु पुरातनन्यायाचार्याणां सम्मतौ वेदानां पुराणानां च प्रणेतारः (कर्त्तारः) समाना एव ऋषयो बभूवुः, यथा चोक्तं न्यायाचार्येण भाष्यकारेण वात्स्यायनेन—''प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते—ते वा खल्वेते अथर्वा-

ङ्गिरस एतदितिहासपुराणमभ्यवदन्। इतिहासपुराणं पंचमं वेदानां वेदः।''
(न्यायभाष्यः ४।१।६२)

छान्दोग्यवचनेन च वात्स्यायनस्य वचनं परिपुष्यते—'एते अथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपन्। (३।४।१२)

वैदिकब्राह्मणग्रन्थेषु पुराणानां गाथाश्लोकाः समुदाहृता विद्यन्ते, यथा शतपथब्राह्मणे चेयं गाथा—

मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे।
आविक्षितस्याग्निः क्षत्ता विश्वेदेवाः सभासदः।।

(श० ब्रा० १३।१।१।१)
(तथा भागवतपुराणे १६।१२।२८)

एवं चान्या बह्व्यो गाथास्तत्र ब्राह्मणेषूपलभ्यन्ते। संकलनेऽस्मिन् प्रयत्नेन मया सर्वं तदैतिह्यं संग्रहीतम् विद्यते।

निश्चयेन हि संस्कृतज्ञा इतिहासशोधकाश्च विद्वांसोऽनेन संकलनेन लाभान्विता भविष्यन्ति तथा तेषां मिथ्यादृष्टिश्च दूरीभविष्यति। सत्यज्ञानेन च राष्ट्रियस्यैक्यस्य मार्गश्च प्रशस्तो भविष्यति।

मया तु यथासंभवं सर्वमितिवृत्तं यच्च, यत्र क्वचित् वैदिकग्रन्थेषूपलभ्यते तत्सर्वं संग्रहीतम्। अनेन संकलनेन वेदपुराणयोरैक्यं च पुष्टं भविष्यति-तथा चोक्तं शौनकाचार्येण—

''इतिहासः पुरावृत्तमृषिभिः परिकीर्त्यते'', (बृहद्देवतायाम् ४।४६) तथा चाह व्यासो भगवान्—

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः।
पुराणं चेन्न संविद्यान्न स स्याद् विचक्षणः।।
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति।।

लेखक—
डा० कुंवरलाल जैन 'व्यासशिष्य'
संकेत :—बी-२६-धर्मकालोनी
नांगलोई, दिल्ली-४१

१—६—१६६०

# आमुख

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः।
जङ्घन्यमानाः परियन्ति मूढा अन्धेनेव नीयमाना यथान्धाः ॥

यह उक्ति दासत्वकाल एवं स्वतन्त्र-भारत में पाश्चात्य तथा-कथित इतिहासकारों एवं तदनुयायी भारतीय इतिहासकारों पर पूर्णतः चरित्रार्थ होती है। अंग्रेजों या पाश्चात्यों का उद्देश्य भारतीय-इतिहास लिखना नहीं था, वे भारत को सदा-सदा गुलाम बनाये रखना चाहते थे एवं ईसाई-सम्प्रदाय में दीक्षित कर आंग्लसंस्कृति का दास बनाये रखना चाहते थे और वे इस उद्देश्य में पूर्ण सफल रहे हैं, इसका ज्वलन्त उदाहरण है कि मैकाले का भूत आज भी भारतीय विश्वविद्यालयों, महाविद्यालयों एवं राजकीय-संस्थानों पर शतसहस्रशः रूप में छाया हुआ है। दासता के समय से भी अधिक आज स्वतन्त्र-भारत में अंग्रेजीभाषा एवं आंग्लप्रभुता का वर्चस्व है। यह विडम्बना है कि अंग्रेजी के बिना प्रायः प्रत्येक भारतीय अपने को हीन समझता है। यही अंग्रेजों का उद्देश्य था।

भारत की एकता, अखण्डता, संस्कृति की प्रगति एवं वर्चस्व के लिए—मैकाले के भूत को मारने के लिए सच्चा इतिहास ही एकमात्र प्रमुख साधन है, क्योंकि इसी के आधार पर—झूठा (मिथ्या) इतिहास लिखकर भारत का विघटन किया गया और यह विघटन प्रक्रिया आज भी प्रवृद्धि पर है। सच्चे इतिहास से इसे बदला जा सकता है। अंग्रेजों द्वारा भारत का सच्चा इतिहास लिखना न उद्देश्य था और वह हो भी नहीं सकता था। उन्होंने वैदिक परम्परा को पुराण परम्परा से पृथक् सिद्ध करने की चेष्टा की—मैकडानल एवं कीथादि की ऐसी ही चेष्टा थी और वे इस कार्य में पर्याप्त सफल रहे। इस कथन को अधिक स्पष्ट करने की आवश्यकता नहीं है।

पुराण, आज भी अपनी अनेक विकृतियों के पश्चात् भी प्राचीनतम भारतीय एवं आदिम विश्वइतिहास के मूलस्रोत हैं, यह मैंने अपने अनेक शोधग्रन्थों में सिद्ध किया है। वेद या वैदिकवाङ्मय

मूलत: 'इतिहास-ग्रन्थ' नहीं है। पुराण सहित 'इतिहास' की २१ प्रकार की विद्यायें प्राचीन भारत में प्रचलित थीं और उनका विपुल वाङ्मय विद्यमान था। वेद और पुराण परस्पर एक-दूसरे के पूरक हैं, जैसा कि—"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" उक्ति से सिद्ध है।

वर्तमान पुराणपाठों में अनेक प्रकार की भ्रान्तियां हैं, जिनको शोध के द्वारा दूर किया जा सकता है और मैंने यह कार्य किया भी है। भ्रान्ति या विकृति के एक-दो उदाहरण द्रष्टव्य हैं। यथा 'दिव्य-मानुष' कालगणना एक ही थी, परन्तु पुराणों में 'परिवर्तयुग' को, उत्तरकाल में 'चतुर्युग' समझकर कालगणना में महती भ्रांति उत्पन्न होगई, इस भ्रांति से पोंगापन्थी अभी भी मुक्त नहीं हो पारहे हैं। वैदिकवाङ्मय मे भी अनेक भ्रांतियां दूर हो सकती हैं। पं० भगवद्दत्त, भ्रांतिवंश, द्रोणाचार्य को भरद्वाज वार्हस्पत्य का साक्षात् पुत्र मानते थे। महाभारत के यावक्रीतोपाख्यान (वनपर्व) में यवक्रीत के पिता का नाम भी भरद्वाज है, परन्तु, जैमिनीयब्राह्मण के उद्धरण से यह भ्रांति दूर होती है कि यवक्रीत के पिता भरद्वाजगोत्रीय सोमस्तम्ब थे। दोनों (पौराणिक एवं वैदिक) यावक्रीतोपाख्यान' में साम्य है, यदि कुछ भ्रांति है तो वह वैदिक-ग्रंथ से दूर हो जाती है। अत: ऐतिहासिकशोध हेतु इस संकलन का महत्त्व स्वयं प्रकट है।

डा० कुंवरलाल जैन 'व्यासशिष्य'

——

# प्रथमो भागः

## (वैदिकग्रन्थेष्वैतिह्यसन्दर्भाः)

विषयानुक्रमणी

# ग्रन्थस्य द्वितीयो भागः—

## तस्य पूर्वखण्डम्

## इतिहासपुराणेषु वंशपाठः

विषयसूची



— —

# द्वितीयभागस्य–उत्तरखण्डम्

## (हरिवंशपुराणे–वंशानुचरितम्)

### विषयसूची



——

# महाग्रन्थस्य परिशिष्टात्मको भाग:

## पुराणेष्वितिहासनिदर्शनम्

परिशिष्टम्—



—०—

## डॉ० कुँवरलाल जैन व्यासशिष्य
## रचित ग्रन्थ

| | | |
|---|---|---|
| १. | पुराणों में वंशानुक्रमिक कालक्रम | ८०-०० |
| २. | पुराणों में इतिहास | ७५-०० |
| ३. | पुराणों में भारतोत्तरवंश | ६०-०० |
| ४. | भारत का आदि इतिहास | १२५-०० |
| ५. | चतुर्दश मनुओं का इतिहास | ३०-०० |
| ६. | पुराणों में ऐतिहासिक परिवर्तयुग | ७५-०० |
| ७. | Indian Asuras Colonized Europe | ८०-०० |

प्राप्तिस्थान—
इतिहास विद्या प्रकाशन, बी–२६
धर्मकालोनी, नांगलोई
दिल्ली—४१

——

श्रीपरमात्मने नमः

# ऋग्वेदे ऐतिह्यसन्दर्भाः

## (इन्द्रसम्बन्धिसन्दर्भाः)

**कौशिक इन्द्रः-**

आ तू न इन्द्र कौशिक मन्दसानः सुतं पिब। (ऋ० १।१०।११)

**अर्थ**—हे इन्द्र कौशिक ! मदमस्त होकर सोमपान करो।

**बलवधः-**

त्वं बलस्य गोमतोऽपावरद्रिवो बिलम्। (१।११।५)

**अर्थ**—हे वज्रधारक इन्द्र ! आपने बल असुर के गोमान् बिल (दुर्ग) को तोड़ दिया।

**शुष्णवधः-**

मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः। (१।११।७)

**अर्थ**—हे इन्द्र ! आपने मायाओं द्वारा मायावी शुष्ण का संहार किया।

**अहि (वृत्र) वधः-**

काष्ठानां मध्ये निहितं शरीरम्।

वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः।

(१।३२।१०)

इन्द्रश्च यद् युयुधाते अहिश्चोतापरीभ्यो मघवा विजिग्ये।

अहेर्यातारं कमपश्य इन्द्र हृदि यत् ते जघ्नुषो भीरगच्छत्।

(१।३२।१३-१४)

**अर्थ**—"दिशाओं के मध्य में वृत्रासुर (अहिदानव) का शरीर पड़ा हुआ था। इन्द्रशत्रु वृत्र घोर अन्धकार में सोया हुआ था।"

इन्द्र और अहि (दानव) युद्ध कर रहे थे। इसमें मघवा (इन्द्र) की जीत हुई। हे इन्द्र ! जब तुमने युद्ध में जाते हुए उसको देखा तो मारने की इच्छा से तुम्हारे हृदय में भय समा गया।

**इलीबिशवध -**

न्याविध्यदिलीबिशस्य दृळ्हा।

वि शृङ्गिणमभिनच्छुष्णमिन्द्रः॥ (१।३३।१२)

**अर्थ**—हे इन्द्र ! आपने शोषक (हत्यारे) अति बलशाली इलीबिश असुर के दृढ़ दुर्गों का विनाश किया।

**वज्रनिर्माणम्—**

अहन्नहिं पर्वते शिश्रियाणं ।
त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।। (१।३२।२)

**अर्थ**—हे इन्द्र ! आपने पर्वत (दुर्ग) पर आश्रय लिए हुए अहिदानव को मारा । त्वष्टा (शिल्पी) ने तुम्हारे तेजस्वी वज्र का निर्माण किया ।

**इन्द्रकर्माणि—**

(ऋजिश्वकुत्सयोर्रक्षा)--विप्रुशम्बरार्बुदासुराणां पुरनाशः-
त्वं पिप्रोर्नृमणः प्रारुजः पुरः प्र ऋजिश्वानं दस्युहत्येष्वाविथ ।
त्वं कुत्सं शुष्णहत्येष्वाविथारन्धयोऽतिथिग्वाय शम्बरम् ।
महान्तं चिदर्बुदं नि क्रमीः पदा सनादेव दस्युहत्याय जज्ञिषे ।
(१।५१।५-६)

**अर्थ**—हे इन्द्र ! आपने नृमण (=नरमार=नरमारक) विप्रु (असुर) के पुर (दुर्ग) को ध्वस्त किया और दस्यु-संहार के अवसर पर ऋजिश्वा की रक्षा की ।

हे इन्द्र ! आपने दस्युहत्या के समय ही कुत्स (ऋषि) की रक्षा की और अतिथिगु (राजा) के लिये शम्बर (असुर) का वध किया ।

महान् (=अति बलशाली) अर्बुद असुर पर आक्रमण करके उसे पादप्रहार से मार डाला । हे इन्द्र ! आप सदा दस्यु संहार के लिये ही जन्मे हो ।

**कक्षीवते वृचयादानम्—**

अददा अर्भां महते वचस्यवे कक्षीवते वृचयामिन्द्र सुन्वते ।
मेनाभवो वृषणश्वस्य सुक्रतो । (१।५१।१३)

**अर्थ**—हे इन्द्र ! आपने ऋषि (वाग्मी) कक्षीवान् को वृचया (पत्नी) देकर बालकों को दिया ।

आप वृषणाश्व की मेना (स्त्री) होगये ।

**नमुचिवधः—**

नम्या यदिन्द्र सख्या परावति ।
निबर्हयो नमुचिं नाम मायिनम् । (१।५३।७)

हे इन्द्र ! आपने दूरदेशवासी, मायावी असुर नमुचि को उसका सखा बन कर (सन्धि करके) मारा ।

**करञ्जपर्णय वङ्गृदादीनामसुराणां वधः—**

त्वं करञ्जमुत पर्णयं वधीस्तेजिष्ठयातिथिग्वस्य वर्तनी ।
त्व शता वङ्गृदस्याभिनत् पुरोऽनानुदः परिषूता ऋजिश्वना ।
त्वमेत्ताञ्जनराज्ञो द्विर्दशाबन्धुना सुश्रवसोपजग्मुषः ।

षष्टिं सहस्रा नवतिं नव श्रुतो निचक्रेण रथ्या दुष्पदावृणक् ।
त्वमाविथ सुश्रवसं तवोतिभिस्तव त्रामभिरिन्द्र तूर्वयाणम् ।
त्वमस्मै कुत्समतिथिग्वमायुं महे राज्ञे यूने अरन्धनायः ।

(१।५३।८-१०)

**अर्थ**—हे इन्द्र ! आपने करञ्ज को मारा, पर्णय को अतिथिग्व की रक्षा के लिये मारा। आपने वृङ्गद के सौ पुरों को नष्ट किया। सुश्रवा के द्वारा आप इन बीस राजाओं के पास गये। आपने साठ हजार निन्यानवें असुरों का रथचक्र से वध किया। आपने सुश्रवा की रक्षा की। आपकी रक्षाओं के द्वारा आपने कुत्स (सौश्रवस) अतिथिग्व महान् राजा युवक की रक्षा की और उनके शत्रुओं का नाश किया।

**असुरवृन्दिवधः**—

यन्मायिनो व्रन्दिनो मन्दिना धृषच्छितां गभस्तिमशनिं पृतन्यसि ।
नि यद् वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद् व्रन्दिनो
रोरुवद् वना । (१।५४।४)

**अर्थ**—हे इन्द्र ! आपने मायावी वृन्दी असुर की पैनी, चमचमाती अशनि (वज्राश्म) को युद्ध में नष्ट कर दिया तथा श्वसन शुष्ण वृन्दी के सिर को काट डाला।

**यदुतुर्वसुप्रभृतीनां राज्ञामिन्द्रसाहाय्यम्**—

त्वमाविथ नर्यं तुर्वशं यदुं तुर्वीतिं वय्यं शतक्रतो ।
त्वं रथमैतशं कृत्व्ये धने त्वं पुरो नवतिं दम्भयो नव ।

(१।५४।५-६)

**अर्थ**—हे इन्द्र ! आपने नेतृशील राजा तुर्वश और वयःशील महान् यदु की रक्षा की। आपने धनहेतु ऐतश के रथ की रक्षा की और निन्यानवें असुरपुरों का ध्वंस किया।

**ऐतशरक्षा**—

प्रैतशं सूर्ये पस्पृधानं सौवश्ये सुष्विमावदिन्द्रः । (१।६१।१५)

**अर्थ**—हे इन्द्र ! आपने सूर्य के तेज से स्पर्धा करने वाले ऐतश की सौवश्य युद्ध में रक्षा की।

**इन्द्र आंगिरसः सरमा च**—

इन्द्रस्याङ्गिरसां चेष्टौ विदत् सरमा तनयाय धासिम् ।
बृहस्पतिर्भिनदद्रिं विदद्गाः समुस्रियाभिर्वावशन्त नरः ।

(१।६२।३)

**अर्थ**—इन्द्र और आंङ्गिरसों के यज्ञ में देवशुनी सरमा ने अपने पुत्र के लिये भोजन प्राप्त कर लिया। वृहस्पति ने पर्वत का भेदन करके गायें प्राप्त कर लीं।

**पुरुकुत्ससुदासपुरुराजान:-**

त्वं ह त्यदिन्द्र सप्त युध्यन् पुरो वज्रिन् पुरुकुत्साय दर्दः।
बर्हिर्न यत् सुदासे वृथा वर्गंहो राजन् वरिवः पूरवे कः॥

(१।६३।७)

**अर्थ**—हे इन्द्र आपने युद्ध करते हुए पुरुकुत्स की रक्षा हेतु सात पुरों को नष्ट कर दिया और सुदास तथा पुरु को महान् राजा बनाया।

**सोमपतिः व्यंसः (विदेहमाथवः)-**

अथा वह सोमपतिं हरिभ्यामातिथ्यमस्मै चकृमा सुदाव्ने।

(१।७६।३)

हे इन्द्र! आपने सोमपति व्यंस (विदेह माथव) की घोड़ों द्वारा रक्षा की, यह सोमपति विदेह बड़ा दानी था।

**दध्यङ्ङाथर्वण:-**

यामथर्वा मनुष्पिता दध्यङ् धियमत्नत। (१।८०।१६)
इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिकुतः। जघान नवतीर्नव।
इच्छन्नश्वस्य यच्छिरः पर्वतेष्वप्रतिश्रितम्॥
तद्विदच्छर्यणावति। (१।८४।१३-१४)

**अर्थ**—दध्यङ् ऋषि के मनस्वी पिता अथर्वा ने बुद्धि या यज्ञविद्या का विस्तार किया। यज्ञों द्वारा अथर्वा ने धर्ममार्ग का विस्तार किया।

इन्द्र ने दधीचि (दध्यङ्) ऋषि की हड्डियों से (वज्र बनाकर) निन्यानवें बार असुरों को मारा। अश्व का सिर पर्वत पर रखा हुआ था, उस पर्वत का नाम शर्यणावत था।

**इन्द्रवज्रम्-**

त्वष्टा यद् वज्रं सुकृतं हिरण्ययं सहस्रभृष्टिं स्वपा अवर्तयत्।
धत्त इन्द्रो नर्यपांसि कर्तवेऽहन् वृत्रं निरपामौब्जदर्णवम्॥

(१।८५।९)

**अर्थ**-त्वष्टा ने जिस सुवर्णमय वज्र को बनाया, जिसमें सहस्रों धारें कीं। इन्द्र ने उस वज्र को धारण किया, तदनन्तर उस वज्र से वृत्र को मारा, तब वह वृत्र समुद्र में चला गया या डूब गया।

**ऋज्राश्वाम्बरीषसहदेवभयमानसुराधसंज्ञकैः राजभिः इन्द्रस्तुतिः–**

रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्राश्वस्य ।
वृषण्वन्तं बिभ्रती धूर्षु रथं मन्द्रा चिकेत नाहुषीषु विक्षु ।
एतत् त्यत् त इन्द्र वृष्ण उक्थं वार्षागिरा अभिगृणन्ति राधः ।
ऋज्राश्वः प्रष्टिभिरम्बरीषः सहदेवो भयमानः सुराधाः ।
दस्यूञ्छिम्यूंश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा नि बर्हीत् ॥

(१।१००।१६-१८)

अर्थ–ऋजाश्व के घोड़े रोहित, श्यावा, तेजस्वी और ललाम हैं। वृषणशील (गतिशील) घोड़े मदमत्त होकर धुरों द्वारा रथ को धारण किए हुए हैं वे प्रजाओं में विख्यात हैं। हे वृष्ण ! हे इन्द्र ! आपकी स्तुति में यह उक्थ वार्षगिरि के वंशज गाते हैं। ऋज्राश्व, अम्बरीष, सहदेव, भयमान और सुराधस् अनुगामी अश्वों से जाते हैं। शिम्यु दस्युओं को इस प्रकार मारकर हे इन्द्र ! तुमने समस्त पृथ्वी को निष्कण्टक कर दिया।

**व्यंसशम्बरपिप्रूणां वधः–**

यो व्यंसं जाहृषाणेन मन्युना ।
यः शम्बरं यो अहन् पिप्रुमव्रतम् ।
इन्द्रो यः शुष्णमशुषं न्यावृणङ् । (१।१०१।२)

**अर्थ**—जिसने अति क्रोध से व्यंस को और जिसने शम्बर को मारा, जिसने अव्रत पिप्रु तथा बलशाली दस्यु अशुष को काटा वह इन्द्र···था।

**मानुषयुगं मघवा च–**

तदूचिषे मानुषेमा युगानि कीर्तेन्यं मघवा नाम बिभ्रत् (१।१०३।४)
शुष्णं पिप्रुं कुवयं वृत्रमिन्द्र यदावधीर्वि पुरः शम्बरस्य (१।१०३।८)

मघवा (धनवान् इन्द्र) के नाम कीर्तनीय (यशस्वी) हैं जिसने मानुषयुगों में शुष्ण, पिप्रु, कुवय और वृत्र को मारा तथा शम्बर के पुरों का विनाश किया।

**पुरुर्दिवोदासः (दिव्यदाता)–**

भिनत् पुरो नवतिमिन्द्र पूरवे दिवोदासाय···
···अतिथिग्वाय शम्बरं गिरेरुग्रो अवाभरत् ॥ (१।१३०।७)

**अर्थ**—दिव्यदाता पुरु के लिये इन्द्र ने नब्बे पुरों का भेदन किया। उग्र इन्द्र ने अतिथिगु दिवोदास (पुरु) के लिये शम्बर (असुर) के गिरि (पर्वत-दुर्ग) का अपहरण किया।

**कीकटप्रमगन्दवधार्थम् इन्द्रस्य स्तुतिः—**

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् ।
आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः ॥
(३।५३।१४)

**अर्थ**—कीकट (मगध) देश में वहां के कीकट म्लेच्छ (दस्यु) गण क्या करते हैं। वे न तो दूध दोहते हैं और न दूध (घर्म) गर्म करते हैं अर्थात् यज्ञ नहीं करते। हे मघवन्! प्रमगन्द (मगध) के धन सम्पत्ति को हमारे लिये लाओ और नीच कीकटों को हमारे लिये मारो।

**पञ्चाशत्सहस्राणि कृष्णानामसुराणां वधः—**

त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः ।
पञ्चाशत् कृष्णा नि वपः सहस्राऽत्कं न पुरो जरिमा वि दर्दः ॥
(४।१६।१३)

**अर्थ**—हे इन्द्र! आपने मृगयाशील (आक्रमणकारी) पिप्रु असुर का वैदथि ऋजिश्वा राजा के लिये वध किया; पचास सहस्र कृष्ण असुरों को मारा और उनके सुदृढ़ पुरों का विनाश किया, यह आपने अतिशय महान् कार्य किया।

**कौलितरदासशम्बरस्य वधः—**

उत दासं कौलितरं बृहतः पर्वतादधि ।
अवाहन्निन्द्र शम्बरम् ।
उत दासस्य वर्चिनः सहस्राणि शतावधीः ।
अधि पञ्च प्रधीरिव ।
उत त्या तुर्वशायदू अस्नातारा शचीपतिः ।
अर्णा चित्ररथावधीः ।
शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत् ।
दिवोदासाय दाशुषे ।
अस्वापयद् दभीतये सहस्रा त्रिंशतं हथैः ।
दासानामिन्द्रो मायया ॥ (४।३०।१४, १५, १७, १८, २०, २१)

**अर्थ**—हे इन्द्र! आपने बड़े पर्वत के नीचे कौलितर दास शम्बर को मारा। वर्ची दास (असुर) के शतसहस्र सैनिकों का वध किया जिस प्रकार पांच प्रधी घूमती हैं। शचीपति इन्द्र ने तुर्वस और यदु को (समुद्र के) पार किया। चित्ररथ के शत्रुओं को मारा। दानी दिवोदास के लिये (असुरों के) सैकड़ों अश्ममय पुरों (नगरों) को तोड़ा। दभीति (राजा) के लिये इन्द्र ने तीस सहस्र दासों (असुरों) को सुला दिया (मार दिया)।

**उशना इन्द्रश्च—**

उशना यत् सहस्यैरयातं गृहमिन्द्र जूजुवानेभिरश्वैः ।
वन्वानो अ्रज सरथं ययाथ कुत्सेन देवैरवनोर्ह शुष्णम् ।
प्राण्यच्चक्रमवृहः सूर्यस्य कुत्सायान्यद् वरिवो यातवेऽकः ।
अ्रनासो दस्यूंरमृणो वधेन नि दुर्योण आवृणङ् मृध्रवाचः ।
स्तोमासस्त्वा गौरिवीतेरवर्धन्नरन्धयो वैदथिनाय पिप्रुम् ।
आ त्वामृजिश्वा सख्याय चक्रे पचन् पक्तीरपिबः सोममस्य ।
नवग्वासः सुतसोमास इन्द्रं दशग्वासो अभ्यर्चन्त्यर्कैः ।।

(५।२९।९-१२)

**अर्थ**—उशना शीघ्रगामी अश्वों के द्वारा रथ से आपके पास पहुंचे । हे इन्द्र आपने कुत्स के लिये शुष्णदानव का वध किया और कुत्स को राजा बनाने के लिए सूर्य को काटा । आपने अनासिक और मृध्रवाक् (म्लेच्छ) असुरों का विनाश किया । गौरिवीति की स्तुतियों ने आपकी वृद्धि की । आपने वैदथि के लिये पिप्रु असुर को मारा । आपने ऋजिश्वा की मित्रता के कारण उसका सोमपान किया । नवग्वा और दशग्वा सोम सवन करके आपकी स्तुतियों द्वारा अर्चना करते हैं ।

**नमुचिवधः—**

अत्रा दासस्य नमुचेः शिरो यदवर्तयो मनवे गातुमिच्छन् ।
युजं हि मामकृथा आदिदिन्द्रः शिरो दासस्य नमुचेर्मथायन् ।
स्त्रियो हि दास आयुधानि चक्रे किं मा करन्नबला अस्य सेनाः ।

(५।३०।७-९)

**अर्थ**— मनुष्यमात्र के कल्याण के लिए, हे इन्द्र ! आपने दास (असुर) नमुचि का सिर काट दिया । यह मेरे (ऋषि के) लिये आपने अच्छा किया कि नमुचि का सिर मथ डाला । दस्यु (नमुचि) ने स्त्रियों की सेना बनाई, किन्तु आपने सोचा कि अबलाओं की सेना मेरा क्या बिगाड़ लेगी ।

**शम्बरचुमुरिवधः—**

अव गिरेर्दासं शम्बरं हन् प्रावो दिवोदासं चित्राभिरूती: ।
त्वं श्रद्धाभिर्मन्दासानः सोमैर्दभीतये चुमुरिमिन्द्र सिष्वप् ।
त्वं रजिं पिठीनसे दशस्यन् षष्टिं सहस्रा शच्या सचाहन् ।

(६।२६।५-६)

**अर्थ**—पर्वत के नीचे, हे इन्द्र ! आपने दस्यु शम्बर को मारा और विचित्र रक्षाविधि से दिवोदास (दिव्यदाता) की रक्षा की । सोमपान करते हुए श्रद्धावश दभीति की रक्षा के लिये चुमुरि को मारा । पिठीनस में रजि को मारते हुए आपने इन्द्राणी के साथ साठ सहस्र असुरों को मारा ।

**अभ्यावर्तीचायमानरक्षणम्–**

वधीदिन्द्रो वरशिखस्य शेषोऽभ्यावर्तिने चायमानाय शिक्षन् ।
वृचीवतो यद् हरियूपीयायां हन् पूर्वे अर्धे भियसापरो दर्त् ।
त्रिंशच्छतं वर्मिण इन्द्र साकं यव्यावत्यां पुरुहूत श्रवस्या ।
वृचीवन्तः शरवे पत्यमाना पात्रा भिन्दाना न्यर्थान्यायन् ।
स सृञ्जयाय तुर्वशं परादाद् वृचीवतो दैववाताय शिक्षन् ।
द्वयां अग्ने रथिनो विंशतिं गा वधूमतो मघवा मह्यं सम्राट् ।
अभ्यावर्ती चायमानो ददाति दूणाशेयं दक्षिणा पार्थिवानाम् ॥

(६।२७।५–८)

**अर्थ**—इन्द्र ने वारशिख को मारकर उसका धन अभ्यावर्ती चायमान राजा को दे दिया। हे इन्द्र ! आपने हरियूपीया (हड़प्पा) में वृचीवन्तों को मारा, और इससे पूर्व आधे असुरों को मारा जो तीस सहस्र कवचयुक्त असुर सैनिक यव्यवती में मारे गये। बाणों से मारे गये वृचीवन्त मिट्टी के पात्रों की भांति फूटकर गिरे। आपने वृचीवान् का प्रचुर धन दैववात (देववातपुत्र प्रस्तोक साञ्जय) को दिया। हे अग्ने (इन्द्र) ! मुझ (गर्गभारद्वाज) को सम्राट् अभ्यावर्ती चायमान ने दो रथ और बीस गायें वधूओं के साथ दीं। राजा की पार्थिव दक्षिणा अक्षुण्ण थी।

**बलपणिः–**

रुजदरुग्णं वि वलस्य सानुं पणीं वचोभिरभि योधयदिन्द्रः ।

(६।३९।२)

**अर्थ**—वल (पणिराज) के प्रासाद को भग्न करते हुए इन्द्र अक्षत रहा, वाणी और शस्त्र दोनों से इन्द्र ने पणियों से युद्ध किया।

**दाशराज्ञे युद्धे ऐक्ष्वाकस्य सुदासस्य इन्द्रसाहाय्यम्–**

अर्णांसि चित् पप्रथाना सुदास इन्द्रो गाधान्यकृणोत् सुपारा ।
शर्धन्तं शिम्युमुचथस्य नव्यः शापं सिन्धूनामकृणोदशस्तीः ।
पुरोडा इत् तुर्वसो यक्षुरासीद् राये मत्स्यासो निशिता अपीव ।
श्रुष्टिं चक्रुर्भृगवो द्रुह्यवश्च सखा सखायमतरद् विषूचीः ।
आ पक्थासो भलानसो भनन्तालिनासो विषाणिनः शिवासः ।
आ योऽनयत् सधमा आर्यस्य गव्या तृत्सुभ्यो अजगन् युधा नॄन् ।
दुराध्यो३ अदितिं स्रेवयन्तोऽचेतसो वि जगृभ्रे परुष्णीम् ।
मह्ना विव्यक् पृथिवीं पत्यमानः पशुष्कविरशयच्चायमानः ।
ईयुरर्थं न न्यर्थं परुष्णीमाशुश्चनेदभिपित्वं जगाम ।
सुदास इन्द्रः सुतुकाँ अमित्रानरन्धयन्मानुषे वध्रिवाचः ।

एकं च यो विंशतिं च श्रवस्या वैकर्णयोर्जनान् राजा न्यस्तः ।
दस्मो न सद्मन् नि शिशाति बर्हिः शूरः सर्गमकृणोदिन्द्र एषाम् ।
अध श्रुतं कवषं वृद्धमप्स्वनु द्रुह्युं निवृणग्वज्रबाहुः ।
वृणाना अत्र सख्याय संख्यं त्वायन्तो ये अमदन्ननु त्वा ।
वि सद्यो विश्वा दृंहितान्येषामिन्द्रः पुर सहसा सप्त दर्दः ।
व्यानवस्य तृत्सवे गयं भागजेष्म पूरुं विदथे मृध्रवाचम् ।
नि गव्यवोऽनवो द्रुह्यवश्च षष्टिः शता सुषुपुः षट् सहस्रा ।
षष्टिर्वीरासो अधि षड् दुवोयु विश्वेदिन्द्रस्य वीर्या कृतानि ।
इन्द्रेणैते तृत्सवो वेविषाणा आपो न सृष्टा अधवन्त नीचीः ।
दुर्मित्रासः प्रकलविन्मिमाना जुहुर्विश्वानि भोजनानि सुदासे ।
शश्वन्तो हि शत्रवो रारधुष्टे भेदस्य चिच्छर्धतो विन्द रन्धिम् ।
मर्ताँ एनः स्तुवतो यः कृणोति तिग्मं तस्मिन् निजहि वज्रमिन्द्र ।
आवदिन्द्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत् ।
अजासश्च शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरश्व्यानि ।
देवकं चिन्मान्यमानं जघन्थाऽव त्मना बृहतः शम्बरं भेत् ।
प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः ।
द्वे नप्तुर्देववतः शते गोर्द्वा रथा वधूमन्ता सुदासः ।
अर्हन्नग्ने पैजवनस्य दानं होतेव सद्म पर्येमि रेभन् ।
चत्वारो मा पैजवनस्य दानाः स्मद्दिष्टस्यः कृशनिनो निरेके ।
इमं नरो मरुतः सश्चतानु दिवोदासं न पितरं सुदासः ।
अविष्टना पैजवनस्य केतं दूणाशं क्षत्रमजरं दुवोयु ।।

(ऋग्वेदे सूक्तम् ७।१८।५-२५)

अर्थ—इन्द्र ने सुदास के लिए परुष्णी नदी के भारी बहाव को घटा दिया और इससे वह शीघ्र पार करने योग्य होगई। वह हमारे स्तुति करने योग्य है। इन्द्र ने दुष्ट शिम्यु और उसके अभिशप्त मित्रों को नदियों का बहता हुआ गन्द बनाया। अर्थात् वे मरे हुए नदी में बह रहे थे।

तुर्वस ने पुरोडाश की बलि दी, इसी प्रकार यक्षु और मत्स्यों ने किया। वे सम्पत्ति के योग्य अधिकारी थे। भृगुओं (भार्गवों) और द्रुह्यु ने उनका अनुसरण किया। विभिन्न बहाव के मार्गों में उन्होंने एक-दूसरे की सहायता की जैसी कि सच्चे मित्र करते हैं।

पक्थों (पठान), भलानसों, अलिनास, विषाणिन और शिवियों ने इन्द्र का प्रशस्ति गान किया। सहभोजी मित्रों ने सुदास (आर्य) के नेतृत्व में तृत्सुओं के पास गमन किया जिससे वे शत्रुओं और उनकी गायों को जीत सकें।

दुष्ट मूर्ख शत्रुओं ने घृणित कार्य किया कि उन्होंने परुष्णी के बहाव को विभक्त कर दिया जिससे नदी में ठीक से आवागमन हो सके। परन्तु राजा सुदास ने अपना बल विस्तार किया और पुरोहित कवि ने पुरोडाश रखते हुए भय अनुभव किया।

सुदास के बल परुष्णी को पार करते ही चले गये जो शत्रुओं के लिए महान् संकट था। वे इसी प्रकार बढ़ते गये, जैसे अश्व तेजी से अपने लक्ष्य पर पहुंचता है। इन्द्र ने सुदास के हितार्थ उसके शत्रुओं को जो भागे जा रहे थे, नष्ट कर दिया।

सुदास ने अपने शत्रुओं को उसी प्रकार नष्ट किया जैसे कि ऋत्विक् यज्ञ-स्थली की घास काटता है। सुदास ने यशःप्राप्ति की कामना से इक्कीस और दो वकर्ण राजाओं को बुरी तरह परास्त कर दिया।

इन्द्र ने शस्त्र में पेच के द्वारा वृद्ध और विद्वान् कवष को मार डाला और द्रुह्यु को नष्ट कर दिया। दूसरी ओर जो तुम्हारे भक्त थे, वे प्रसन्न हुए और आपसे मैत्री बनाये रखने का निश्चय किया।

इन्द्र ने एक ही क्षण में शत्रुओं के सात दुर्गों को नष्ट कर दिया तथा अन्य दुर्गम स्थानों को भी नष्ट कर दिया। इन्द्र ने अनु की सम्पत्ति को तृत्सु को दे दिया और पुरु (पौरव राजा) को जीत लिया जो यज्ञ में अशुद्ध वाणी बोलते थे।

अनु और द्रुह्यु के वंशज छियासठ हजार थे, जो परास्त हो गये या समाप्त हो गये। अन्य छियासठ महावीरों का भी यही हाल हुआ। ये इन्द्र के महान् प्रशंसनीय कार्य थे।

इन्द्र की सहायता से तृत्सुओं ने शत्रुओं को नष्ट कर दिया, जिस प्रकार बहने वाला पानी शीघ्रता से बह जाता है। शत्रुओं ने अपनी समस्त धन सम्पत्ति सुदास के हवाले कर दी। उन्होंने छोटी-छोटी वस्तुओं की गणना की।

हे इन्द्र! आपके अनेक शत्रुओं ने आत्मसमर्पण किया। भेद की पराजय आपके कारण ही हुई। अपने तीव्र वज्र को हे इन्द्र छोड़ो जिससे शत्रुनाश हो। अपनी स्तुति करने वाले मनुष्य का नाश मत करो।

यमुना और तृत्सुओं ने इन्द्र को प्रसन्न किया और भेद का सर्वनाश किया। अजास, शिग्रव और यक्षु आपके लिये बलि (कर) लाये, विशेष घोड़ों को लाये।

पराशर, शतयातु और वसिष्ठ जो अपने आश्रमों से दूर आगये, उन्होंने प्रसन्नतापूर्वक आपकी स्तुति की और आपकी उपेक्षा नहीं की। अतः सुखकारक दिन हमारे रक्षकों (राजाओं) के आगये।

दो सौ गायें तथा दो रथ, श्रेष्ठ घोड़ियो के साथ, पिजवन (ऐक्ष्वाक) और देववात के नाती सुदास ने दी। हे अग्ने (इन्द्र) ! मैं होता के समान उसकी प्रशंसा करता हूं। पैजवन के दान की प्रशंसा करता हूं।

हमारे दिव्यदाता (दिवोदास=दिव्यदाता) पिता के समान हे मरुतो ! सुदास की सहायता और समर्थन करते रहो। जिससे उसका एकछत्रराज्य चिर-काल पर्यन्त रह सके।

**इन्द्रकृतं कुत्सादीनां रक्षणम्—**

त्वं ह त्यदिन्द्र कुत्समावः शुश्रूषमाणस्तन्वा समर्ये।
दासं यच्छुष्णं कुयवं न्यस्मा अरन्धय आर्जुनेयाय शिक्षन्।
त्वं धृष्णो धृषता वीतहव्यं प्रावो विश्वाभिरूतिभिः सुदासम्।
प्र पौरुकुत्सिं त्रसदस्युमावः क्षेत्रसाता वृत्रहत्येषु पूरुम्।
त्वं नृभिर्नृमणो देववीतौ भूरीणि वृत्रा हर्यश्व हंसि।
त्वं नि दस्युं चुमुरिं धुनिं चास्वापयो दभीतये सुहन्तु।
तव च्यौत्नानि वज्रहस्त तानि नव यत् पुरो नवतिं च सद्यः।
निवेशने शतमाविवेषीरहञ्च वृत्रं नमुचिमुताहन्॥ (७-१९।२-५)

**अर्थ**—हे इन्द्र ! आपने कुत्स की रक्षा की, जिसने अपने शरीर से युद्ध में आपकी सेवा की। हे धृष्णो ! आर्जुनेय (सहस्रार्जुनपुत्र) सुदाता (सुदास) वीतहव्य की रक्षा के लिये दास प्रतापी कुयव को मारा ! हे भूमि के दाता इन्द्र ! आपने महापुरुष (=पुरु) ऐक्ष्वाक राजा पौरुकुत्सि त्रसदस्यु की, दस्युहत्या के समय, रक्षा की। हे इन्द्र ! आप नरसंहारक (शत्रुसंहारक=नृमण) हैं। देववीति के पुत्र दभीति की रक्षा में आपने दस्युराज (असुरराज) चुमुरि और धुनि को मार डाला। आपके महान् पराक्रमों से हे वज्रहस्त ! शीघ्र ही निन्यानवें असुरपुर नष्ट होगये। आपने नगर बसाते हुए सैकड़ों असुरों के साथ वृत्रासुर और नमुचि को मारा।

व्यास इन्द्र—ऋग्वेद (७।२०।३) में उल्लिखित।

**दाशराज्ञे सुदासरक्षणम्—वशिष्ठागस्त्ययोर्जन्मकथा च—**

एवेन्नु कं सिन्धुमेभिस्ततारेवेन्नु कं भेदमेभिर्जघान।
एवेन्नु कं दाशराज्ञे सुदासं प्रावदिन्द्रो ब्रह्मणा वो वसिष्ठाः।
अभवच्च पुर एता वसिष्ठ आदित् तृत्सूनां विशो अप्रथन्त।
सूर्यस्य वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः।
वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः।
विद्युतो ज्योतिः परि संजिहानं मित्रावरुणा यदपश्यतां त्वा।

तत् ते जन्मोतैकं वसिष्ठागस्त्यो यत् त्वा विश आजभार।
उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन् मनसोऽधि जातः।
द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त।
स प्रकेत उभयस्य प्रविद्वान्त्सहस्रदान उत वा सदानः।
यमेन ततं परिधिं वयिष्यन्नप्सरसः परि जज्ञे वसिष्ठः।
सत्रे ह जाताविषिता नमोभिः कुम्भे रेतः सिषिचतुः समानम्।
ततो ह मान उदियाय मध्यात् ततो जातमृषिमाहुर्वसिष्ठम्॥

(७।३३।३, ६, ८, १२-१३)

**अर्थ**—इस प्रकार हे इन्द्र ! आपने सुदास को सिन्धु पार कराया, इस प्रकार भेद को मारा, इस प्रकार दाशराज्ञयुद्ध में सुदास की रक्षा की। यह सब कुछ वसिष्ठ (अज्ञातनामा वसिष्ठवंशज वासिष्ठ) के वेदमन्त्रों (स्तुतियों) से सम्पन्न हुआ। तृत्सुओं (ऐक्ष्वाकवंशजों) के पुरोहित वसिष्ठ थे, वसिष्ठों द्वारा उनके यश का विस्तार हुआ।

**वसिष्ठजन्म**—ये वासिष्ठगण (ऋषि) सूर्य की ज्योति और समुद्र की गम्भीर महिमा को धारण करते हैं। वायुगति के समान तीव्र प्रभावशाली वसिष्ठों के मन्त्रस्तोम हैं। मित्र और वरुण-उभयदेवों ने एक उठती हुई विद्युत्ज्योति (उर्वशी अप्सरा) को देखा। तब वसिष्ठ और अगस्त्य का जन्म हुआ। प्रजाओं ने वसिष्ठ और अगस्त्य का भरणपोषण किया। ब्रह्मन् हे वसिष्ठ ! तुम मित्र और वरुण द्वारा मन से उर्वशी द्वारा उत्पन्न हुए। देव वरुण के स्खलित वीर्य को विश्वेदेवों ने पुष्करपर्ण (पृथिवीकमल) पर ग्रहण किया। वसिष्ठ (आदिम=मैत्रावरुण) दोनों के जन्म को जानते हैं। यम द्वारा परिधि की रक्षा करते हुए, अप्सरा से वसिष्ठ हुए। यज्ञ (वरुणक्रतु) में नमस्कार करते हुए वरुण और मित्र ने वीर्यसिंचन किया, तब कुम्भमध्य से एक मान (आकृति) उदित हुई, जिसको वसिष्ठ ऋषि कहते हैं। (तदनन्तर उसी से अगस्त्य उत्पन्न हुए।)

**दाशराज्ञयुद्धम्**—

यत्र राजभिदशभिर्निबाधितं प्र सुदासमावतं तृत्सुभिः सह।
दश राजानः समिता अयज्यवः सुदासमिन्द्रावरुणा न युयुधुः।
दाशराज्ञे परियन्ता विश्वतः सुदास इन्द्रावरुणावशिक्षतम्॥

(७।८३।६-८)

**अर्थ**—इन्द्र और वरुण ने दस राजाओं से घिरे हुए (ऐक्ष्वाक) सुदास की तृत्सुओं के साथ रक्षा की। दश (म्लेच्छ) अयज्ञशील राजा इकट्ठे होकर सुदास से लड़े। दाशराज्ञयुद्ध में सुदास को पूरी तरह घेर लिया। इन्द्र और वरुण ने सुदास की रक्षा की।

**इन्द्ररूपी पराशरः (वासिष्ठः शक्तिपुत्रः)—**

इन्द्रो यातूनामभवत् पराशरः। (ऋ० ७।१०४।२१)

**अर्थ**—(सौदास कल्माषपाद के समय) पराशर इन्द्ररूप में राक्षसों के हन्ता (मारनेवाले) हुए।

**इन्द्रेण अपालायाश्चर्मरोगस्य चिकित्सा—**

असौ च या न उर्वरादिमां तन्वं मम।
अथो ततस्य यच्छिरः सर्वा ता रोमशा कृधि।
खे रथस्य खेऽनसः खे युगस्य शतक्रतो।
अपालामिन्द्र त्रिष्पूत्व्यकृणोः सूर्यत्वचम्॥ (८।९१।६-७)

**अर्थ**—हे देव इन्द्र! मेरा शरीर उर्वर (रोमयुक्त) नहीं है। अतः मेरे शरीर और शिर को बालयुक्त कर दीजिये। इन्द्र (शतक्रतु) ने रथ के छिद्र में शकट के छिद्र में, युग के छिद्र में तीन बार डालकर अपाला (आत्रेयी) को पवित्र किया और उसको सूर्यसदृश त्वचा (और बालों से) युक्त कर दिया।

**सुपर्णेन इन्द्रस्य सोमाहरणम्**

मनोजवा अयमान आयसीमतरत् पुरम्।
दिवं सुपर्णो गत्वाय सोमं वज्रिण आभरत्॥ (८।१००।८)

**अर्थ**—सुपर्ण (गरुड़ वैनतेय) ने लौहे के पुर (दुर्ग) को भेदकर मनोजवगति से जाकर इन्द्र का सोम अपहरण कर लिया।

**वैकुण्ठ इन्द्रः**

अहमिन्द्रो रोधो वक्षो अथर्वणस्त्रिताय गा अजनयमहेरधि।
अहं दस्युभ्यः परिनृम्णमाददे गोत्रा शिक्षन् दधीचे मातरिश्वने।
मह्यं त्वष्टा वज्रमतक्षदायसम्। (१०।४८।२-३)
अहं रन्धयं मृगयं श्रुतर्वणे···।
अहं वेशं नम्रमायवेऽकरमहं सव्याय पड्गृभिमरन्धयम्।
अहं स यो नववास्त्वं बृहद्रथं संवृत्रेव दासं वृत्रहारुजम्।
यद् वर्धयन्तं प्रथमन्तमानुषग् दूरे पारे रजसो रोचनाकरम्।
अहं सप्तहा नहुषो नहुष्टरः प्राश्रावयं शवसा तुर्वशं यदुम्।
(१०।४९।५, ८)

**अर्थ**—मैं विकुण्ठा का पुत्र इन्द्र हूं; मैंने रुद्ध त्रित आथर्वण के लिये गायों की सृष्टि की। मैं अहिदानव का दमनकर्त्ता हूं। मैंने दस्युओं का वध किया। दधीचि आंगिरस को दान दिया। मेरे लिये त्वष्टा ने लोहमय (कठोर) वज्र बनाया।

मैंने श्रुतर्वा के लिये मृगय (असुर) का वध किया। मैंने आयु (राजा) के लिये नम्रवेश बनाया, मैंने सव्य के लिये पङ्गृभि को मारा। मैंने वृत्रहा इन्द्र के समान नवगु बृहद्रथ दास को मारा। प्रदीप्त दूर देश में जो बढ़ता ही जा रहा था, उसके तेजस्वी दस्यु का तेज नष्ट किया। मैंने नहुष, तुर्वसु और यदु की रक्षा की।

## अश्विनौ—तयोरैतिह्यसन्दर्भाः

याभिस्त्रिमन्तुरभवद् विचक्षणस्ताभिरु षु ऊतिभिरश्विना गतम्।
याभी रेभं निवृतं सितमद्भ्य उद् वन्दनमैरयतं स्वर्दृशे।
याभिः कण्वं प्र सिषान्तमावतं ताभि॰॰॰॥
याभिरन्तकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुः।
याभिः कर्कंधुं वय्यं च जिन्वथः।
याभिः शुचन्ति धनसां सुषं सदं तप्तं घर्ममोम्यावन्तमत्रये।
याभिः पृश्निगुं पुरु कुत्समावतं ताभिः॰॰॰॥
याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथः।
याभिर्वर्तिकां ग्रसितामम़ुञ्चतं ताभिः॰॰॰॥
याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम्।
याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिः॰॰॰॥
याभिर्विश्पलां धनसामथर्व्यं सहस्रमीळ्ह आजावजिन्वतम्।
याभिर्वशमश्व्यं प्रेणिमावतं ताभिः॥
याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत्।
कक्षीवन्तं स्तोतारं याभिरावतं ताभिः॰॰॰॥
याभी रसां क्षोदसोद्गः पिपिन्वथुरनश्वं याभी रथमावतं जिषे।
याभिस्त्रिशोक उस्रिया उदाजत ताभिः॰॰॰॥
याभिः सूर्यं परियाथः परावति मान्धातारं क्षैत्रपत्येष्वावतम्।
याभिर्विप्रं प्र भरद्वाजमावतं ताभिः॰॰॰॥
याभिर्महामतिमतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम्।
याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिः॰॰॰॥
याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः।
याभिर्व्यश्वमुत पृथिवीमावतं ताभिः॰॰॰।
याभिर्नरा शंयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः।
याभिः शारीराजतं स्यूमरश्मये ताभिः।
याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मना।

याभिः शर्यातमवथो महाधने ताभिः ।।१७।।
याभिरङ्गिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गो अर्णसः ।
याभिर्मनुं शूरमिषा समावतं ताभिः ।।१८।।
याभिः पत्नीर्विमदाय न्यूहथूरा घ वा याभिररुणीरशिक्षतम् ।
याभिः सुदासं ऊहथुः सुदेव्यं ताभिः···।।१९।।
× × ×
याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम् ।
याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिः·· ।।२३।।

(१।११२।४-१९, २३)

यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन ।१।
वीडुपत्यभिराशुहेमभिर्वा देवानां वा जूतिभिः शाशदाना ।
तद्रासभो नासत्या सहस्रमाजा यमस्य प्रधने जिगाय ।२।
तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवां अवाहाः ।
तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः ।३।
जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात् ।
प्रातिरतं जहितस्यायुर्दस्रादित् पतिमकृणुतं कनीनाम् ।१०।

(१।११६।१-३, १०)

ऋषिं नरावंहसः पांचजन्यमृबीसादत्रिं मुञ्चथो गणेन ।

(१।११७।३)

युवं रेभं परिषूतेरुरुष्यथो हिमेन घर्मं परितप्तमत्रये ।।

(१।११९।६)

तिस्रः क्षपास्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः ।।
समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षडश्वैः ।४।
अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे ।
यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम् ।५।
यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित् स्वस्ति ।
तद् वां दात्रं महि कीर्तेन्यं भूत् पैद्वो वाजी सदमिद्धव्यो अर्यः ।६।
युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंधिम् ।
कारोतराच्छफादश्वस्य वृष्णः शतं कुंभां असिञ्चतं सुरायाः ।

(१।११६।१-७)

दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच ।
अजोहवीन्नासत्या करा वां महे यामन् पुरुभुजा पुरंधिः ।

(१।११६।१२-१३)

चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायाम् ।
सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् ।
शतं मेषान् वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार ।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥

(१।११६।१५-१६)

यदयातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयन्ता ।
रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता: ॥

(१।११६।१८)

दश रात्रीरशिवेन नव द्यूनवनद्धं श्नथितमप्स्वन्त: ।
विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथु: सोममिव स्रुवेण ॥

(१।११६।२४)

युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय ।
घोषायै चित् पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम् ॥
युवं श्यावाय रुशतीमदत्तं मह: क्षोणस्याश्विना कण्वाय ।
प्रवाच्यं तद् वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ।

(१।११७।७-८)

सूनोर्मानेनाश्विना गृणाना वाजं विप्राय भुरणा रदन्ता ।
अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतम् ॥११॥
युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथु: शचीभि: ।
युवो रथं दुहिता सूर्यस्य सह श्रिया नासत्यावृणीत ॥१३॥
अधेनुं दस्रा स्तर्यं विषक्तामपिन्वतं शयवे अश्विना गाम् ।
युवं शचीभिर्विमदाय जायां न्यूहथु: पुरुमित्रस्य योषाम् ॥२०॥
त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक् ॥

(१।११८।२)

## अश्विनौ सम्बन्धी ऐतिहासिक सन्दर्भ

**अर्थ**—जिन रक्षणों के द्वारा आप त्रिबन्धुर (तीन आसनों वाले) हुए अश्विनौ ! उनके द्वारा आइये ।

जिनके द्वारा आपने रेभ को बन्धनमुक्त किया और वन्दन को स्वर्ग देखने के लिये प्रेरित किया ।

जिनके द्वारा कण्व को शिक्षा दी ।

जिनके द्वारा अन्तसमीपवाले तेजी से जानेवाले भुज्यु की निर्यथित रक्षाओं द्वारा रक्षा की, जिनके द्वारा वयशील ककर्धु को जीवित किया । जिनके द्वारा शोक

करते हुए निषण्ण एवं तप्त अत्रि की रक्षा की और पृश्निगु पुरुकुत्स की रक्षा की, जिनके द्वारा···

जिन बुद्धियों द्वारा आपने दूर गये हुए अन्ध श्रोण को चक्षुयुक्त कर दिया। जिसके द्वारा वर्तिका ग्रसित को छुड़ाया···उनके द्वारा···हे अजर अश्विनौ ! आपने जिस प्रकार मधुमान् समुद्र में वसिष्ठ का उद्धार किया, जिनके द्वारा आपने श्रुतर्य (सौश्रवस) कुत्स की रक्षा की · आपने विश्पला की, कांपती हुई शरीरवाली की युद्ध में रक्षा की · । जिनके द्वारा वश अश्व्य की रक्षा की उनके द्वारा · आप सुदाता हैं, आपने औशिज वणिक् दीर्घअना के लिये मधुकोश का क्षरण किया··· आपने काक्षीवत स्तोता की रक्षा की।

जिस बुद्धि से आपने रसा नदी जो सूखी थी, उसको जलपूर्ण कर दिया और अनश्व रथ को विजयशील बनाया, जिनके द्वारा त्रिशोक के नदी बहाई··· उन बुद्धियों द्वारा ।

जिनके द्वारा दूर सूर्य के पास जाते हुए मान्धाता की क्षेत्रों (युद्धों) में रक्षा की, जिनके द्वारा विप्र भरद्वाज की रक्षा की।

जिन रक्षणों के द्वारा महामति अतिथिगु कशासेवी दिवोदास की शम्बरवध के समय रक्षा की···। जिनके द्वारा पुरभेत्ता त्रसदस्यु की रक्षा की।

जिसके द्वारा वम्र और जिनके द्वारा कन्ति की सेवा की, जिनके द्वारा व्यश्व की रक्षा की।

हे नरो (अश्वियो) ! आपने जिन बुद्धियों के द्वारा शंयु को, अत्रि को तथा पूर्वकाल में मनु को मार्ग दिखाया।

हे अश्वियो ! जिनके द्वारा आप स्यूमरश्मि के हितार्थ शारी (पक्षी) के पास गये।

जिनके द्वारा हे अश्वियो ! आपने पठर्वा के जठर की अग्नि को प्रदीप्त किया।

हे नरो ! आपने पज्रिय कक्षीवान् की बुद्धि को तेज किया, जिससे उसने वर्षणशील (वेगवान्) अश्व की शफा से कारोतर बनाकर सुरा के सौ कुम्भ निकाले (सींचे)।

हे अश्विनौ आपको दध्यङ्ङाथर्वण ऋषि ने अश्व सिर से मधुविद्या प्रदान की। आप अभिमत फल के कर्त्ता हैं, अतः हमारी बुद्धि बारम्बार बुलाती है आपने बहुतों की प्रतिरक्षा की है।

हे अश्विनो ! आपने खेल नामक राजा की पत्नी विश्पला का पैर कट जाने,

जैसे किसी पक्षी का पक्ष कट गया हो, आपने आयसी (लोहे) की जांघ उसी समय लगादी, जिससे वह चल सके।

पिता ने ऋज्राश्व को अन्धा बना दिया, जबकि उसने भेड़ियों को सौ भेड़ें खिला दीं। आपने कृपा करके उसकी आंखें लगा दीं क्योंकि आप नासत्य और दस्र नाम के देवभिषक् हैं।

हे अश्विद्वय ! जब आप दिवोदास (काशिराज) और भरद्वाज के पास गये, तब आपका सेवक धनयुक्त प्रशात्र रथ लाया, जिसमें वृषभ और शिशुमार नियुक्त थे।

आपने महायुद्ध में शर्यात की रक्षा की।

आपने अङ्गिरा और मनु की रक्षा की।

जिसके द्वारा आपने विमद की पत्नी की रक्षा की और जिसके द्वारा सुदेव्य की रक्षा की।

हे शतक्रतु ! आपने आर्जुनेय कुत्स, दभीति की ऊर्ध्वसन्ति और पुरुषन्ति की रक्षा की।

हे अश्विद्वय ! आपने सैन्यहन्ता रथ के द्वारा पत्नी के पास बालक विमद को पहुंचाया। आपने हे नासत्यो ! अतिशीघ्रगामी और बलशाली घोड़ों द्वारा देवों के उत्साह से प्रेरित होकर, आपके रासभ ने युद्ध में सहस्रों वीरों को जीता।

कोई मरणशील मनुष्य जैसे धन को त्यागता है, उसी प्रकार आपने तुग्र के पुत्र भुज्यु को समुद्र में युद्धार्थ भेजे गये की प्रयत्नशील पुरुषों की नावों के द्वारा रक्षा की, वे आपकी नावें अन्तरिक्ष में जल के ऊपर चल रही थी।

हे नासत्यो ! आपने च्यवन ऋषि की वृद्धावस्था को उसी प्रकार दूर कर दिया जैसे कवच को पहिनकर कोई उतार देता है। पुनः आपने पुत्रों द्वारा त्यक्त च्यवन की आयु भी बढ़ाई और उसे युवती कन्या का पति बना दिया।

पांचजन्य ऋषि अत्रि को आपने पापगणों से मुक्त किया।

आपने रेभ की रक्षा की और परितप्त अत्रि को घर्म से बचाया। हे नासत्यो ! समुद्र में डूबे हुए तुग्रपुत्र भुज्यु को आपने तीन रथों के द्वारा गहन समुद्र के पार कर दिया और लगातार तीन रात और तीन दिन तक पक्षी के समान उड़ने वाले सौ पैरों वाले छः घोड़े आपके रथ में थे। हे अश्वियो ! आपने समुद्र में वीरतायुक्त महान् कार्य किया, क्योंकि आपने शतारित्रों से युक्त नाव पर बैठे भुज्यु को बिना किसी आलम्बन के पार लगा दिया।

हे अश्विद्वय ! आपने पेदु नाम के राजा को सफेद घोड़ा दिया। उसका शाश्वत कल्याण किया। आपका कर्म और दान सदा महान् और कीर्तनीय है। हे अर्य आप सदा पूजनीय हैं।

हे अश्वियो ! आपने दशरात्रि और नौ दिन तक जल में बहते हुए रक्षकों रहित रेभ ऋषि को उसी प्रकार कूप में से निकाला जिस प्रकार स्रुवा से सोम को उठाते हैं।

रक्षा के लिये पुकारने वाले कृष्णीय विश्वक ऋषि को आपने आश्चर्ययुक्त कर्म द्वारा विनष्ट विष्णाप्व पुत्र दे दिया, जैसे नष्टपशु को कोई धर्मात्मा पुरुष उसके स्वामी के पास पहुंचा दे।

हे अश्वियो ! आपने पति की कामना करनेवाली घोषा को पिता के घर रह रही को पति दिया।

आपने कण्व के लिये शोण अश्व के बदले रुशती दी। आपने नार्षद कण्व के लिये महान् यश दिया जो कीर्तनीय है।

हे अश्वियो ! आपने मान (कुम्भ) के पुत्र ब्राह्मण अगस्त्य को, उसके द्वारा स्तुति करने पर बल प्रदान किया। विश्पला की चिकित्सा की। आपने वृद्ध च्यवन को अपनी चिकित्सा से युवा बना दिया। हे अश्विद्वय ! आपने थके हुए शंभु ऋषि को स्तरी गाय दूध के लिये दी। आपने उसकी बिना दूध देनेवाली गाय को दूध देनेवाली बनाया।

हे अश्विद्वय ! आपने अपनी प्रतिभा से पुरुमित्र राजा की पत्नी को उसका बालक विमद लाकर दिया। आप त्रिबन्धुर, त्रिवृत्, त्रिचक्र रथ द्वारा शीघ्र नीचे आओ।

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्या अधत्तम्।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥८॥
परावतं नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारम्।
क्षरन्नापो न पायनाय राये सहस्राय तृष्यते गोतमस्य।
तद्वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथम्।
यद्विद्वांसा निधिमिवापगूढमुद्दर्शतादूपथुर्वन्दनाय ।११।
आस्नो वृकस्य वर्तिकामभीके युवं नरा नासत्यामुमुक्तम्।
उतो कविं पुरुभुजा युवं ह कृपमाणमकृणुतं विचक्षे ।१४।
आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयन्ती।
विश्वे देवा अन्वमन्यन्त हृद्भिः समु श्रिया नासत्या सचेथे ।१७।
रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यं नासत्या वहन्ता।

आजह्नावीं समनसोप वाजै स्त्रिरह्नो भागं दधतीमयातम् ।१९।
परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः ।
विभिन्दुना नासत्या रथेन वि पर्वतां अजरयू अयातम् ।२०।
एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा ।
निरहतं दुच्छुना इन्द्रवन्ता पृथुश्रवसो वृषणावरातीः ।२१।
(ऋ० १।११६।८, ९, ११, १४, १७, १९, २०, २१)

**सप्तवध्रिऋर्षिः—**

श्रुतं मे अश्विना हवं सप्तवध्रिं च मुंचतम् ।
भीताय नाधमानाय ऋषये सप्तवध्रये ।
मायाभिरश्विना युवं वृक्षं सं च वि चाचथः । ५-७८-६
जिह्मं नुनुद्रेऽवतं तया दिशासिञ्चन्नुत्सं गोतमाय तृष्णजे ।
आगच्छन्तीमवसा चित्रभानवः कामं विप्रस्य तर्पयन्तः धामभिः ।
(१।८५।११)

**अर्थ**—हे अश्विद्वय ! आपने बर्फ के समान शीतल जल से अत्रि ऋषि की प्रज्वलित अग्निज्वाला को निवारित किया और उसके लिये अन्न प्रदान किया । ऋबीस में से हे अश्विनो आपने अत्रि को भली-भांति निकाल दिया ।

हे नासत्यो ! आपने गोतम ऋषि के पास जलपूर्ण कूप पहुंचाया । उस कूप के ऊपर पानी था और द्वार नीचे था, जिससे उसमें से सदा पानी गिरता रहा और इस प्रकार सहस्रों धनहेतु पानी निकलता रहा ।

हे भिषग्वर नासत्यो ! आपका वह कर्म प्रशंसनीय, आराधनीय और कल्याणयुक्त था, जब आपने पृथिवी के अन्दर छिपे हुए निधि के समान वन्दन ऋषि को कूप में से निकाला ।

हे नासत्यो ! पुरुभोज युद्ध में वर्तिका को भेड़िये के मुख से आपने निकाल दिया । आप स्तुति करने योग्य हैं अतः मुझे दर्शन देकर कृतार्थ करें ।

हे अश्विद्वय ! आपके रथ पर सूर्य (सविता) की पुत्री आ बैठी जो आपकी रक्षा द्वारा सदा जयन्ती (विजयशीला) थी । कार्ष्म काष्ठ के पास वह जयन्ती सर्वप्रथम पहुंची । तब समस्त देवों ने इस (विजय) का हृदय से अनुमोदन किया । उस समय आप श्री से सम्पन्न थे ।

हे नासत्यो ! आप धन, श्रेष्ठ बल, श्रेष्ठ सन्तान, आयु, सुवीर्य आदि समस्त पदार्थों को भक्तों तक पहुंचाते हैं । आप उदारचित्त हैं । आपने जह्नु की सन्तान को ये समस्त वस्तुएं प्राप्त कराईं । आपने दिन को तीन भागों में विभक्त किया है । हे अश्विद्वय ! आपने युद्ध में सहस्रों की प्राप्ति के लिये वश ऋषि की रक्षा

की। हे वीर्यवान् अश्विद्वय! आपने पृथुश्रवा के शत्रुओं को निःशेष (समाप्त) कर दिया।

## विष्णुसम्बन्धिन ऐतिह्यसन्दर्भाः

**विष्णुत्रिविक्रमः**—

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। (१।२२।१७)

**अर्थ**—विष्णु ने विक्रमण किया और तीन (लोकों) में तीन पद रखे।

**वराहो विष्णुः**—

मुषायद् विष्णुः पचतं सहीयान् विध्यद् वराहं तिरो अद्रिमस्ता॥

(१।६१।७)

**अर्थ**—

**वरुणः**—

बिभ्रद् द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम्।
परि स्पशो निषेदिरे॥ (१।२५।१३)

**अर्थ**—धवल वस्त्र धारण किये हुए वरुण हिरण्यमय कवच पहिने हुए हैं। उनके गुप्तचर चारों ओर हैं।

**वरुणस्य शुनःशेपकृता स्तुतिः**—

शुनःशेपो यमह्वाद् गृभीतः। सोऽस्मान् राजा वरुणो मुमोक्तु।
क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि॥

(१।२४।१२, १४)

**अर्थ**—मैं शुनःशेप गृहीत हूं और वरुण को मुक्ति के लिए पुकारता हूं, वह राजा वरुण मुझे अपने पाश से मुक्त करे।

हे राजन्! हे असुर (बलवान्) वरुण! आप प्रचेता हो, हमारे किये हुए पापों को नष्ट करो।

**वरुणप्रासादे वसिष्ठगमनम्**—

पृच्छे तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छम्।
किमाग आस वरुण ज्येष्ठं यत् स्तोतारं जिघांससि सखायम्॥

(७।८६।३-४)

गृत्सो राजा वरुणश्चक्र एतं दिवि प्रेंखं हिरण्ययं शुभे कम्।
अव सिन्धु वरुणो द्यौरिव स्थाद्॥ (७।८७।५)

**अर्थ**—हे पिता वरुण! मैं आपसे अपना पाप पूछता हूं, जिस कारण तुम मुझ (अपने पुत्र एवं) ज्येष्ठ स्तोता को दण्ड देना चाहते हो ॰॰। स्तुत वरुण ने मुझे मुक्त कर दिया और मैं नाव में समुद्र के मध्य अन्तरिक्ष में, सुखकारक झूले

की तरह झूल रहा हूं। समुद्र में भी वरुणदेव (सहस्रस्तम्भ महल में) इस प्रकार रहते हैं, जैसे स्वर्ग (आकाश) में हो।

## ऋभवः=तेषाम् ऐतिह्यसन्दर्भाः

**ऋभुभिः-चमत्काराः कृताः-**

उतं त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम्।
अकर्त चतुरः पुनः। (१ २०।६)
य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी। (१।२०।२)
तक्षन् नासत्याभ्यां परिज्मानं सुखं रथम्। (१।२०।३)
तक्षन् धेनुं सबर्दुघाम्॥ (१। ।)

**अर्थ**—हे ऋभुदेव! आपने त्वष्टा देव के लिये नया चमस बनाया और पुनः उसके चार चमस कर दिये।

इन्द्र के लिये ध्वनिमय दो घोड़े बनाये और अश्विनीकुमारों के लिये विशाल सुखमय रथ (विमान) बनाया तथा सबर्दुघा (अमृतदुग्धा) धेनु का निर्माण किया।

**सौधन्वना ऋभव—**

तत् सविता वोऽमृतत्वमासुवद्गोह्यं यच्छ्रवयन्त ऐतन।
त्यं चिच्चमसमसुरस्य भक्षणमेकं सन्तमकृणुता चतुर्वयम्।
विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः।
सौधन्वना ऋभवः सूरचक्षसः॥ (१।११०।३-४)

**अर्थ**—हे ऋभुओ आपको सविता ने अमृत पद प्रदान किया, जिसे सुनकर आप उनके पास आये। आपने असुर (त्वष्टा) के लिये एक चमस के चार चमस किये। युवा होने से आप कर्मों के साधक हो। आप बुद्धिमान् होने के कारण आप मरणधर्मा होने पर भी अमर हो। हे सुधन्वा (आंगिरस) के पुत्र ऋभुगण आप सूरचक्षु (अतिविद्वान्) हो।

**ऋभवः—ऋभुर्विभ्वा वाजश्च—**

इन्द्रो हरी युयुजे अश्विना रथं बृहस्पतिर्विश्वरूपमुपाजत।
ऋभुर्विभ्वा वाजो देवां अगच्छत स्वपसो यज्ञियं भागमैतन।
निश्चर्मणो गामरिणीत धीतिभिर्या जरन्ता युवशा ता कृणोतन।
सौधन्वना अश्वादश्वमतक्षत युक्त्वा रथमुप देवां अयातन॥
(१।१६१।६-७)

अर्थ—इन्द्र के लिये हरी (दो घोड़े) बनाये, अश्विनीकुमारों का रथ बनाया और बृहस्पति के लिये सवर्दुघा धेनु (या विश्वरूप) बनाई, ऋभु, बिभ्वा और वाज—जो सुधन्वा आंगिरस के पुत्र थे, वे अपने कर्म द्वारा यज्ञ में भाग पाने के अधिकारी हुए, वे दोनों के पास आये। उन्होंने अपने कौशल से गाय (सवर्दुघा) का निर्माण किया। जो बूढ़ी गायें थीं, उन्हें जवान बनाया। सौधन्वन ऋभुओं ने घोड़े से घोड़े को बनाया और उन्हें रथ में जोतकर देवों के पास आये।

## मरुतः (मर्त्याः देवाः मरुद्गणः)

**रुद्रस्य गणाः—**
**(सैनिकाः)—**

रुद्रस्य मर्या अरेपसः।
सत्वानो न द्रप्सिनो घोरवपसः।
वक्षःसु रुक्मां अधि येतिरे शुभे।
अंसेष्वेषां निमिमृक्षुर्ऋष्टयः॥ (१।६४।२, ४)
शूरा इव इत् युयुधयः न जग्मयः श्रवस्यवः न पृतनासु येतिरे।
भयन्ते विश्वा भुवना मरुद्भ्यः राजान इव त्वेषसंदृशो नरः॥
(१।८५।८)
ते अज्येष्ठा अकनिष्ठास उद्भिदोऽमध्यमासो महसा विवावृधुः।
सुजातासो जनुषा पृश्निमातरो दिवो मर्या आ नो अच्छा जिगातन॥
(५।५९।६)
वाशीमन्तो ऋष्टिमन्तो मनीषिणः सुधन्वान इषुमन्तो निषंगिणः।
स्वश्वाः स्थ सुरथाः पृश्निमातरः स्वायुधा मरुतो याथना शुभम्।२।
ऋष्टयो वो मरुतो अंसयोरधि सह ओजो बाह्वोर्वो बलं हितम्।
नृम्णा शीर्षस्वायुधा रथेषु वो विश्वा वः श्रीरधि तनुषु पिपिशे।७।
(५।५७।२, ७)
आ विद्युन्मद्भिः मरुतः स्वर्कैः रथेभिः यात ऋष्टिमद्भिरश्वपर्णैः।
आ वर्षिष्ठया न इषा वयः न पप्तत सुमायाः॥ १।८८।१
वयो न ये श्रेणीः पप्तुरोजसा अन्तान् दिवो बृहतः सानुनस्परि।
(५।५९।७)

अर्थ—रुद्र के गण (सैनिक) मरुत मरणधर्मा और निष्पाप हैं। गले में स्वर्णमाला पहने हुए हैं। इनके कन्धों पर भाले हैं। शूरों के समान योद्धा, युद्धों में यशःकामना से युद्ध करते हैं। मरुद्गणों से सारा संसार भयभीत होता है। ये राजाओं के समान तेजस्वी हैं। इनमें कोई बड़ा नहीं, कोई मध्यम नहीं और न

कोई छोटा है। अपने बल से वृद्ध (बड़े) हैं। ये जन्म से कुलीन हैं। पृश्नि इनकी माता है। दिव्यलोक से मर्त्यलोक में आये हैं।

बर्छियां धारण करने वाले, भाले धारण करने वाले, उत्तम धनुषों के धारक, बाण चलानेवाले और तूणीर रखते हैं। इनकी माता पृश्नि है, इनके अश्व श्रेष्ठ हैं और रथ उत्तम हैं। अस्त्र-शस्त्र धारण करते ये युद्धों में जाते हैं। मरुतों के कन्धों पर भाले होते हैं। बाहुओं में ओज (तेज) और बल है। वे नरसंहारक (शत्रु-संहारक) और शिरों पर भी आयुध रखते हैं। रथों में आयुध रखते हैं और शोभा से इनका शरीर प्रदीप्त है। आकाशयान या पंखयुक्त शरीर ?—वे निष्पाप नरवीर हमारे पास पक्षीसदृश पंख लगाकर आते हैं। इनको देखते ही इनकी स्तुति करो। वे बिजली के समान तेजस्वी चमकीले शस्त्रों से युक्त और पर्ण (पंख) लगाकर रथों से आते हैं। हे मरुतो! आप पक्षियों के समान पंखों से उड़कर हमारे पास आते हो। तुम्हारी सुमाया (कौशल = शिल्पविज्ञान) अद्भुत है।

हे वीरो! पक्षियों के समान श्रेणीबद्ध होकर वेगपूर्वक आकाश मार्ग से विशाल पर्वत शिखरों पर उड़कर पहुंचते हो। इनके पंखयुक्त घोड़े पर्वतों के टुकड़े वहां से जल को नीचे गिराते हैं।

(मरुद्गण दिन-रात पृथिवी, आकाश और अन्तरिक्ष में विचरण करते थे)—'यत् अक्तून् व्यहानि व्यन्तरिक्षं विरजांसि व्यजथ यथा नावः। दुर्गाणि वि मरुतो न रिष्यथ। (ऋ० ५।५४।४)

## दानस्तुतिष्वैतिह्यम्

**स्वनयस्य भाव्यस्य दानम्–**

अमन्दान्त्स्तोमान् अंभरे मनीषा सिन्धावधि क्षियतो भाव्यस्य।
यो मे सहस्रमभिमिमीत सवानतूर्तो राजा श्रव इच्छमानः।
शतं राज्ञो नाधमानस्य निष्कञ्छतमश्वान् प्रयतान्त्सद्य आदम्।
शतं कक्षीवां असुरस्य गोनां दिवि श्रवोऽजरमाततान।
उप मा श्यावाः स्वनयेन दत्ता वधूमन्तो दश रथासो अस्थुः॥
षष्टिः सहस्रमनुगव्यमागात् सनत् कक्षीवां अभिपित्वे अह्नाम्।
चत्वारिंशद् दशरथस्य शोणा सहस्रस्याग्रे श्रेणिं नयन्ति।
मदच्युतः कृशनावतो अत्यान् कक्षीवन्त उदमृक्षन्त पज्राः।

(१।१२६।१-४)

अर्थ—मैं सिन्धु के तटवासी राजा स्वानय भावयव्य की स्तुति श्रेष्ठ स्तोत्रों और बुद्धि से करता हूं। जिसने अपने यश की इच्छा से मुझे सहस्रों सवों का दान दिया। मैंने राजा से स्तूयमान सौ निष्क स्वर्णकण्ठाभरण) और श्रेष्ठ सौ

अश्व ग्रहण दिये। कक्षीवान् (मैंने) असुरराज स्वनय भावयव्य की सौ गायें ग्रहण की। राजा का यश स्वर्ग तक छा गया। स्वनय राजा ने मुझे वधूयुक्त दश रथ श्याम घोड़ों के साथ दिये। राजा ने साठ हजार गायों के साथ यह दान दिया। दशरथों के ४० शोणाश्व सहस्रों के आगे पंक्ति बनाते हैं। मद बहानेवाले, हिरण्यवर्ण अश्वों को पज्रा और कक्षीवन्तों ने प्राप्त किया।

**त्रैवृष्णस्त्र्यरुणः पौरुकुत्स्यस्त्रसदस्युः, भारतोऽश्वमेधश्च (राजानः)–**

त्रैवृष्णो अग्ने दशभिः सहस्रैर्वैश्वानर त्र्यरुणश्चिकेत।
यो मे शता च विंशतिं च गोनां हरी च युक्ता सुधुरा ददाति।
—•••नविष्ठाय नवमं त्रसदस्युः।
अश्वमेधस्य दानाः सोमा इव त्र्याशिरः। (५।२७।१, ३, ६)

**अर्थ**– त्रैवृष्ण (त्रिवृष्णपुत्र) त्र्यरुण ने हे अग्ने हे वैश्वानर ! मुझे (भौम आत्रेय ऋषि को) दशसहस्र गायों का दान दिया। बीस सौ बैल घोड़ों से युक्त (रथों में) दिये।

त्रसदस्यु ने नविष्ठ को……।

अश्वमेध भारत (भरतवंशज) ने त्र्याशिर सोम के समान दान (दिये)।

**रुशमान ऋणंचय–**

औच्छत् सा रावी परितक्म्यायां ऋणंचये राजनि रुशमानाम्।
अत्यो न वाजी रघुरज्यमानो बभ्रुश्चत्वार्यसनत् सहस्रा।
चतुःसहस्रं गव्यस्य पश्वः प्रत्यग्रहीष्म रुशमेष्वग्ने।
(५।३०।१४-१५)

**अर्थ**—वह परितक्म्या रात्रि बीत गई ऋणंचय राजा जो रुशमानों का स्वामी था, उसने शीघ्रगामी वेगवान् भूरे घोड़े चार सहस्र और चार सहस्र अन्य पशु दान में दिये, हे अग्ने ! हमने रुशम जनों में यह दान ग्रहण किया।

**वव्रः दानवः–**

त्यं चिदर्णं मधुपं शयानमसिन्वं वव्रं मह्यमाददुग्रः। (५।३२।८)

**अर्थ**—वव्र ने मुझे शयनशील मधुप के समान धन का दान दिया।

**गरिक्षितः पौरुकुत्स्यस्त्रसदस्युः–**

उत त्ये मा पौरुकुत्स्यस्य सूरेस्त्रसदस्योर्हिरणिनो रराण।
वहन्तु मा दश श्वेतासो अस्य गैरिक्षितस्य क्रतुभिर्नु सश्चे।
उत त्ये मा मारुताश्वस्य शोणा क्रत्वामघासो विदथस्य रातौ।
सहस्रा मे च्यवतानो ददान आनूकमर्यो वपुषे नार्चत्।
उत त्ये मा ध्वन्यस्य जुष्टा लक्ष्मण्यस्य सुरुचो यतानाः।

मह्ना रायः संवरणस्य ऋषेर्व्रजं नः गावः प्रयता अपि ग्मन् ।

(५।३३।८-१०)

**अर्थ**—पौरुकुत्स्य त्रसदस्यु विद्वान् ने अनेक श्रेष्ठ दान दिये। गैरिक्षित (पर्वतवासी) त्रसदस्यु ने यज्ञों में दश श्वेत अश्व और शोणाश्व दिये। उसने मुझे वायु के समान दौड़ने वाले घोड़े यज्ञ में दान दिये। गतिमान् सहस्रों अश्व देकर श्रेष्ठ स्वामी ने मेरी अर्चना की। उन सुचिपूर्ण दानों का मैंने सेवन किया। महान् धन उसी प्रकार संवरण ऋषि के घर गया, जिस प्रकार गायें व्रज (घोष) में जाती हैं।

**शाण्डस्य दानम्**—

उत म ऋज्रे पुर यस्य रघ्वी सुमीलहे शतं पेरुके च पक्वा ।
शण्डो दाद्धिरणिनः स्मद्दिष्टीन् दश वशासो अभिषा च ऋष्वान् ।
सं वां शता नासत्या सहस्राऽश्वानां पुरुपन्था गिरेदात् ।

**अर्थ**—शाण्ड ने मुझको जिस पुर छोटा साथा सौ येरुक और पशु दान में दिये। उसने दश सहस्र वशायें दान में दी और सैकड़ों हजारों अश्व हे नासत्य मेरी स्तुति पर दिये।

**पाकस्थामा कौरयाणः**—

यं मे दुरिन्द्रो मरुतः पाकस्थामा कौरयाणः । (८।३।२१)

**अर्थ**—मुझे हे मरुतो ! कौरयाण पाकस्थामा ने जो दान दिया।

**कुरुङ्गः**—

स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ।
राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि ।
धीभिः सातानि काण्वस्य वाजिनः प्रियमेधैरभिद्युभिः ।
षष्टिं सहस्रानु निर्मजामजे निर्यूथानि गवामृषिः ।।

(८।४।१९-२०)

**अर्थ** कुरुङ्ग राजा के दिव्य यज्ञों में मुझे विशाल दान मिला। मैं (ऋषि) उस तुर्वसु राजा को तेजस्वी और भाग्यशाली मानता हूं, जिसने अपनी बुद्धि से काण्व प्रियमेध ऋषि को यूथश साठ हजार घोड़े और गाय दान में दीं।

**चैद्यकशुदानम्**—

यथा चिच्चैद्यः कशुः शतमुष्ट्रानां ददत् सहस्रा दश गोनाम् ।
यो मे हिरण्यसंदृशो दश राज्ञो अमंहत । (८।५।३७)

**अर्थ**—चैद्यकशु राजा ने मुझ (ब्रह्मातिथि काण्व) को सौ उष्ट्र और दश

सहस्र गायें दान में दी। दश हिरण्यमय गायों (या वृषभों) से राजा ने मेरा सम्मान किया।

**तिरिन्दरः पार्शव्यः (यादवः)–**

शतमहं तिरिन्दरे सहस्र पर्शावा ददे। राधांसि याद्वानाम्।
त्रीणि शतान्यर्वतां सहस्र दश गोनाम्। ददुष्पज्राय साम्ने।
उदानट् ककुहो दिवमुष्ट्राञ्चतुर्युजो ददत्।
श्रवसा याद्वं जनम्। (८।६।४६-४८)

**अर्थ**—यादवजनों के यश के लिए यदुराज तिरिन्दर पार्शव्य ने मुझे (वत्स काण्व ऋषि को) एक लाख का दान दिया। तीन सौ घोड़े और दशसहस्र गायें पज्र सामगान के लिये दिये। ककुभवाले चार चार जोड़ों के ऊंट दान में दिये, यादवों के यश हेतु।

**सोभरिः, त्रसदस्युश्च**—

तत्रागन्म सोभरयः सहस्रमुष्कं स्वभिष्टमवसे।
सम्राजं त्रासदस्यवम्।
अदान्मे पौरुकुत्स्यः पञ्चाशतं त्रसदस्युर्वधूनाम्।
मंहिष्ठो अर्यः सत्पतिः।
उत मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि।
तिसृणां सप्ततीनां श्यावः प्रणेता वसुर्दियानां पतिः॥
(८।१९।३२, ३६, ३७)

**अर्थ**—सोभरिगणों ने सहस्रों साण्डों को प्राप्त किया, सम्राट् त्रसदस्यु से। पौरुकुत्स्य सम्राट् पुरुकुत्स ने मुझे पचास वधुयें दीं। वह महनीय आर्य और सत्पति (श्रेष्ठ राजा) है। उसने मुझे तेज दौड़नेवाले तीन सप्तक श्याम अश्व दान में दिये। वह महान् वसुपति और दानपति था। उसने मुझे यह दान सुवास्तु नदी के तट पर तुग्व तीर्थ में दिया।

**कानीतस्य पृथुश्रवसो दानम्**—

यथा चिद्वशो अश्व्यः पृथुश्रवसि कानीतेऽस्या व्युष्यादेय।
षष्टिं सहस्राश्वकस्यायुतासनमुष्ट्राणां विंशतिं शता।
दश श्यावीनां शता दश त्र्यरुषीणां दश गवां सहस्रा।
दश श्यावा ऋधद्रयो वीत वारास आशवः।
मथ्रा नेमिं निवावृतुः। दानासः पृथुश्रवसः कानीतस्य सुराधसः।
रथं हिण्ययं ददन्मंहिष्ठः सूरिरभूद्वर्षिष्ठमक्रत श्रवः॥
(८।४६।२१-२४)

अर्थ—पृथुश्रवा कानीत राजा ने अश्वपुत्र अश्व्य वश ऋषि को साठ हजार ऊंट और बीस सौ गायें दान दीं। दशसहस्र श्यावी और दशसहस्र त्र्यरुषी गाय। दश श्यामाश्व श्रेष्ठ एवं विना बालों वाले दान दिये। पृथुश्रवा कानीत, जो महान् राजा विद्वान् सूरि था, उसने एक सोने का रथ मुझे दान दिया।

**कुरुश्रवणस्त्रासदस्यवः (कवषः एलूष ऋषिः)—**

कुरुश्रवणमावृणि राजानं त्रासदस्यवम्। मंहिष्ठं वाघतामृषिः।
यस्य या हरितो रथे तिस्रो वहन्ति साधुया।
स्तवे सहस्रदक्षिणे। (१०।३३।४-५)

अर्थ—मैं कवष एलूष ऋषि त्रसदस्युपुत्र कुरुश्रवण की स्तुति करता हूं। स्तुतिकर्ताओं में महान् में कवष श्रेष्ठ राजा की स्तुति करता हूं। जिसके द्वारा दान की हुई तीन हरी घोड़ियां मेरे रथ को चला रही हैं।

**मनोः सावर्णेर्दानम्—(अस्य भ्रातृव्यो नाभानेदिष्ठो मानव ऋषिः)—**

सहस्रं मे ददतो अष्टकर्ण्यः श्रुवो देवेष्वक्रत।
प्र नूनं जायतामयं मनुस्तोकमेव रोहतु।
यः सहस्रं शताश्वं सद्यो दानाय मंहते।
सावर्ण्यस्य दक्षिणा वि सिन्धुरिव पप्रथे।
सहस्रदा ग्रामणीर्मा रिषन्मनुः सूर्येणास्य यतमानैतु दक्षिणा।
सावर्णे देवाः प्रतिरन्त्वायुः ॥ (१०।६२।७-११)

अर्थ—सावर्ण मनु ने मुझे सहस्र अष्टकर्णी गायें दान में दीं, जिससे मनु का यश देवों में फैल गया। हमारी प्रार्थना है कि मनु के पुत्र पौत्रों की सृष्टि हो, जो हजारों सैकड़ों घोड़े एकदम दान में देते हैं। सावर्ण्यमनु की दक्षिणा सिन्धु (समुद्र) के समान फैल गई। सहस्रों का दान देनेवाले ग्रामणी मनु की दक्षिणा सूर्य से प्रतिस्पर्धा करने लगी। देवगण मनु को अमित आयु प्रदान करें।

**प्लायोगिरासङ्गः—(कण्वाय घोराय दानम्)—**

अध प्लायोगिरति दासदन्यानासङ्गो अग्ने दशभिः सहस्रैः।
अधो क्षणो दश मह्यं रुशन्तो नडा सरसो निरतिष्ठन्।
(८।१।३३)

अर्थ—हे अग्ने ! प्लायोगि आसंग राजा ने मुझ (घोरपुत्र कण्व) को दश सहस्र वृषभ दान में दिये, जो तालाब में बेत (नड=नल) के समान (असंख्य रूप) में खड़े थे।

# ऋग्वेदे प्रकीर्णका ऐतिह्यसन्दर्भाः

**आयुर्नहुषो इला च—**

त्वामग्ने प्रथममायुमायवे देवा अकृण्वन् नहुषस्य विश्पतिम् ।
इलामकृण्वन् मनुषस्य शासतीम् । (१।३१।११)

**अर्थ**—हे अग्ने ! देवों ने मनुष्यों के लिए आयु और नहुष को विश्पति—या सम्राट् बनाया और आपने इला को मनुष्यों की शासिका बनाया ।

**त्रित आप्त्यः— (आप्ति का पुत्र त्रित)—**

त्रितस्तद् वेद आप्त्यो···। (१।१०५।६)
त्रितः कूपेऽवहितो देवान् हवत ऊतये । (१।१०५।१७)

**अर्थ**—आप्ति का पुत्र त्रित जानता है ।···

कूप (कुए) में पड़े त्रित ने रक्षा के लिए देवों को बुलाया ।

**आयवः नहुषः—**

चत्वारो मा मशशरिस्य शिश्वस्त्रयो
राज्ञ आयवसस्य जिष्णोः । (१।१२२।१५)

**अर्थ**—चार मशशरि के और तीन आयुः पुत्र नहुष के शिशु···।

**रोमशा—**

उपोप मे परामृश मा मे दभ्राणि मन्यथा ।
सर्वाहमस्मि रोमशा गन्धारीणामिवाविका । (१।१२६।७)

**अर्थ**—हे इन्द्र ! मेरे को स्पर्श करो ।···मेरे को···मत समझो । मेरा सम्पूर्ण शरीर गन्धार देश की भेड़ के समान ऊर्णावान् है ।

**दीर्घतमा मामतेयः—**

न मा गरन् नद्यो मातृतमा दासा यदीं सुसमुब्धमवाधुः ।
शिरो यदस्य त्रैतनो वितक्षत् स्वयं दास उरो अंसावपिग्ध ।
दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे ।। (१।१५८।४-६)

**अर्थ**—मातृसम नदियों ने मुझे गलाया या बहाया नहीं, मुझे दासों ने बुरी तरह बांध रखा था । त्रैतन नाम के दास ने मेरा शिर काटना चाहा, तब स्वयं उसका पेट और कन्धे काट लिये ।

दीर्घतमा मामतेय दश (मानुष युग=१००० वर्ष) युग जीवित रहा ।

**देवश्रवा देववातश्च भारतौ—**

अमन्थिष्टां भारता रेवदग्निं देवश्रवा देववातः सुदक्षम् ।।
(३।२३।२)

अर्थ—देवश्रवा और देववात—भारत क्षत्रियों ने रक्षा करनेवाली अग्नि को मथा।

**विपाट्छुतुद्री—**

विपाट्छुतुद्री पयसा जवेते ॥ (३।३३।१)

अर्थ—विपाशा और शुतुद्रु नदी वेग से बहती है।

**भरताः—**

अतारिषुर्भरता गव्यवः समभक्त विप्रः सुमतिं नदीनाम्।
(३।३।१२)

अर्थ—गायों की इच्छा वाले भरत नदियों को पार कर गये।

**वामदेवः गौतमः—**

अहं मनुरहमभवं सूर्यश्चाहं कक्षीवां ऋषिरस्मि विप्रः।
अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा।
(४।२६।१)

अर्थ—मैं ही मनु हूं, मैं ही विवस्वान् सूर्य हूं। मैं ही ऋषि कक्षीवान् हूं। मैंने (इन्द्र रूप में) अर्जुनपुत्र कुत्स को मारा था, मैं ही कवि (ऋषि) उशना हूं। मुझे देखो।

**पौरुकुत्स्यः त्रसदस्युः—**

अस्माकमत्र पितरस्त आसन्त्सप्त ऋषयो दौर्गहे बध्यमाने।
त आयजन्त त्रसदस्युमस्या इन्द्रं न वृत्रतुरमर्धदेवम्।
पुरुकुत्सानी हि वां दाशत्। (४।४२।८-९)

अर्थ—दौर्गहबन्धन में सप्त ऋषि हमारे पिता (रक्षक) थे। उन्होंने मुझ त्रसदस्यु के लिए अर्चनीय देव इन्द्र का यज्ञ किया। पुरुकुत्सानी (मेरी पत्नी) ने आपको दान दिया।

**स्वर्भानुः (राहुः सैंहिकेयः)—**

अत्रिः सूर्यस्य दिवि चक्षुरा धात् स्वर्भानोरप माया अधुक्षत्।
यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः ॥
अत्रयस्तमन्वविन्दन् न ह्यन्ये अशक्नुवन्। (५।४०।८-९)

अर्थ—अत्रि ने स्वर्ग (आकाश) में सूर्य का नेत्र लगाया, स्वर्भानु (राहु) की माया दुही।

जिस सूर्य को स्वर्भानु असुर अन्धेरे से ढक लेता है, अत्रिवंशीय ऋषियों ने सर्वप्रथम इस तथ्य को जाना, दूसरे विद्वान् यह जानने में असमर्थ रहे।

**प्रातर्दनी क्षत्रश्रीः—**

प्रातर्दनिः क्षत्रश्रीरस्तु श्रेष्ठो घने वृत्राणां सनये धनानाम् ॥
(६।२६।८)

अर्थ—प्रतर्दन का पुत्र क्षत्रश्रीः (प्रथमदाशराज्ञ युद्ध का विजेता) दस्युओं के वध में और दान देने में सर्वश्रेष्ठ था।

**पूषा—**

आ रिख किकिरा कृणु पणीनां हृदयाकवे।
अथेमस्मभ्यं रन्धय ॥ (६।५३।७)
यास्ते पूषन्नावो अन्तःसमुद्रे हिरण्ययीरन्तरिक्षे चरन्ति।
(६।५८।३)

अर्थ—हे पूषन् ! हे केव ! पणियों के हृदयों को अपने शस्त्र से काट दो।

हे पूषन् ! आपकी जो नावें या पनडुब्बियां अन्तःसमुद्र (भीतर) और अन्तरिक्ष में (विमान) चलते हैं।

**दिवोदास बाध्रयश्वः**

इयमददाद् रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ॥
(६।६१।१)

अर्थ—वध्र्यश्व के पुत्र, दानी दिवोदास को आपने यह तीव्र अच्युत ऋण (धन) दिया, दान के लिये।

**मेधातिथिः काण्वः—**

काण्वं मेध्यातिथिम्। मेषो भूतोऽभि यन्नयः।
शिक्षा विभिन्नो अस्मै चत्वार्ययुता ददत्। अष्टाः परः सहस्रा ॥
(८।२।४०-४१)

अर्थ—मेध्यातिथि काण्व को, हे इन्द्र ! आप मेष बनकर ले गये और बिभिन्दु के अड़तालीस हजार (पशु) दान में दिये।

**ऋषिरक्षणम्—**

यथा चित् कण्वमावतं प्रियमेधमुपस्तुतम्।
अत्रिं शिञ्जाररमश्विना। यथोत कृत्व्ये धनेऽशुं गोष्वगस्त्यम्।
यथा वाजेषु सोभरिम् ॥ (८।५।२५-२६)

अर्थ—हे अश्विनौ ! आदने प्रियमेध काण्व की स्तुत होकर रक्षा की। अत्रि—अगस्त्य की—रक्षा की। वाजियों में सोभरि की रक्षा की।

**तुर्वशयदू—**

येनाव तुर्वशं यदुं येन कण्वं धनस्पृतम् ॥ (८।७।१८)

अर्थ—हे इन्द्र ! आपने तुर्वस और यदु तथा धनस्पृही कण्व की रक्षा की।

**पृथी वैन्यः—**

पृथी यद् वां वैन्यः सादनेष्वेवदेतो अश्विना चेतयेथाम् ॥
(८।९।१०)

**अर्थ—**

**आदित्य मनुष्य—**

ये चिद्धि मृत्युबन्धवः आदित्या मनवः स्मसि । (८।१८।१८)

**अर्थ**—ये आदित्य मनुष्य और मरणधर्मा हैं। (अदिति के बारहपुत्र)

**चित्रः (आखुराजः)—**

चित्र इद् राजा राजका इदन्यके यके सरस्वतीमनु ।
पर्जन्य इव ततनद्धि वृष्ट्या सहस्रमयुता ददत् ॥ (८।२१।१८)

**अर्थ**—चित्र ही राजा है, और तो केवल राजक (छोटे राजा) हैं, चित्र ने सरस्वती के किनारे मेघ के समान सहस्र अयुत धन की वर्षा की।

| | |
|---|---|
| यम-यमी-संवादः (ऋग्वेद १०।१० सूक्त) | यमयमीसंवाद । |
| शंखः यामायनः (१०।१५ सूक्तस्य द्रष्टा) | शंख यामायन । |
| दमनो यामायनः (१०।१६ — ) | दमन यामायन । |
| देवश्रवा यामायनः (१०।१७ — ) | देवश्रवा यामायन । |

**सरण्यूः—**

त्वष्टा दुहित्रे वहतुं कृणोतीदं विश्वं भुवनं समेति ।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ।
अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामदर्दुर्विवस्वते ।
उताश्विनावभरद्यत् तदासीज्जहादु द्वा मिथुना सरण्यूः ।
(१०।१७।१-२)

**अर्थ**—त्वष्टा ने अपनी पुत्री सरण्यू के लिये दहेज दिया। समस्त विश्व भुवन उसे देखने एकत्रित हुआ। यम की माता विवाह के पश्चात् छिप गई जो महान विवस्वान् की पत्नी थी। अमृता सरण्यू को छिपाया गया मर्त्यों से और उसी के समान बनाकर सुवर्णा (नाम की स्त्री) विवस्वान् को देदी गई। विवस्वान् ने अश्विनों को ले लिया। सरण्यू ने दो पुत्रों को छोड़ दिया।

| | |
|---|---|
| संकुसुको यामायनः (१०।१८) | संकुसुक यामायन । |
| मथितो यामायनः (१०।१९) | मथित यामायन । |
| ऐन्द्रो विमदः (१०।२०) | विमद ऐन्द्र । |
| ऐन्द्रो वासुकः (१०।२७) | वसुक ऐन्द्र । |

**उपमश्रवा मैत्रातिथिः—**

अधि पुत्रोपमश्रवो नपान्मित्रातिथेरिहि । (१०।३३।८)

**अर्थ** – मित्रातिथि का पुत्र उपमश्रवा।

**अगस्त्यः**—

अगस्त्यस्य नद्भ्यः सप्ती युनक्षि रोहिताः ।
पणीन् न्यक्रमीरभि विश्वान् राजन्नराधसः । (१०।६०।६)

अर्थ—अगस्त्य की शोर करनेवाली लाल घोड़ियों ने पणियों की ओर प्रस्थान किया, जो सब धनवान् थे ।

असमातिः रथप्रोष्ठः (ऐक्ष्वाकः)—(१०।६०।४, ५)—असमाति रथप्रोष्ठ ।

गयः प्लातः (१०।६३)—गय प्लात ।

**अष्टौ आदित्याः**—

अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि ।
देवां उप प्रैत् सप्तभिः परा मार्तण्डमास्यत् ॥ (१०।७२।८)

अर्थ—अदिति के आठ पुत्र उत्पन्न हुए, वह अदिति सात पुत्रों के साथ देवों के पास चली गई, परन्तु आठवें मार्तण्ड (मृताण्ड =विवस्वान्) सूर्य को फेंक दिया ।

**पुरुरवोर्वशीसंवादः**—

यद्विरूपाचरं मर्त्येष्ववसं रात्रीः शरदश्चतस्रः ।
घृतस्य स्तोकं सकृदह्न आश्नां तादेवेदं तातृपाणा चरामि ॥
(१०।९५।१६)

अर्थ—मैं वेश बदलकर चार वर्षों तक मनुष्यलोक (भारतवर्ष) में रही । मैं (उर्वशी) केवल, उस समय दिन में थोड़ासा घी खाकर तृप्त होकर विचरण करती थी ।

**आर्ष्टिषेणो देवापिः शन्तनुश्च**—

आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देवसुमतिं चिकित्वान् ।
यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् ॥
(१०।९८।५, ७)

अर्थ—आर्ष्टिषेण देवापि ऋषि देवों की सुमति को जानकर (अपने भ्राता) शन्तनु के पुरोहित बने और वर्षा के लिए यज्ञ कराया ।

**मुद्गलः, मुद्गलानी च**—

तेन सूभर्वं शतवत् सहस्रं गवां मुद्गलः प्रधने जिगाय ।
ककर्दवे वृषभो युक्त आसीदवावचीत् सारथिरस्य केशी ।
दुधेर्युक्तस्य द्रवतः सहानस ऋच्छन्ति ष्मा मुद्गलानीम् ॥
इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम् ।
येन जिगाय शतवत् सहस्रं गवां मुद्गलः पृतनाज्येषु ॥
(१०।१०२।५, ६, ९)

अर्थ—

———

## [ २ ]

# अथर्ववेदसंहितायामैतिह्यसन्दर्भाः

**दाक्षायणाः शतानीकस्य—**

यदाबध्नन् दाक्षायणा हिरण्यं शतानीकस्य सुमनस्यमानाः।

(१।३५।१)

अर्थ—दाक्षायण ऋषियों ने जब प्रसन्नचित्त होकर शतानीक (के यहा में, उसके शरीर से) स्वर्ण बांधा।

**सालावृकाः (असुराः) इन्द्रश्च—**

तयाहं शत्रून्साक्ष इन्द्रः सालावृकां इव। (२।२७।५)

अर्थ—उसके द्वारा मैंने शत्रुओं का वध किया, जिस प्रकार इन्द्र ने सालावृक असुरों का किया था।

**भृगुः (भार्गवः जमदग्निः), वैतहव्याश्च—**

ते ब्राह्मणस्य गां जग्ध्वा वैतहव्याः पराभवन्।
गौरेव तान् हन्यमाना वैतहव्यां अवातिरत्॥ (५।१८।१०, ११)

अर्थ—वे (सहस्रार्जुन अर्जुन के वंशज) वैतहव्य क्षत्रिय ब्राह्मण (जमदग्नि) की गाय भोगकर पराजित हुए। गाय ने ही उनको (वैतहव्यों) को मारा और नष्ट कर दिया।

**परिक्षित् (परीक्षित्)—**

राज्ञो विश्वजनीनस्य यो देवो मर्त्यां अति।
वैश्वानरस्य सुष्टुतिमा सुनोता परिक्षितः।
परिच्छिन्नः क्षेममकरोत् तम आसनमाचरन्।
कुलायन् कृण्वन् कौरव्यः पतिर्वदति जायया।
कतरत् ते आहराणि दधि मन्थाम् परिश्रुतम्।
जाया पतिं विपृच्छति राष्ट्रे राज्ञः परिक्षितः।
अभीव स्वः प्रजिहीते यवः पस्वः पथोबिलम्॥
जनः स भद्रमेधति राष्ट्रे राज्ञः परिक्षितः। (२०।१२७।७-१०)

**अर्थ**—विश्वजनीन (सार्वभौम) सम्राट् परीक्षित् देव (तुल्य) है, जो मर्त्यों का शासन करते हैं। राजा परीक्षित् अग्नि की स्तुति (यज्ञ) करते हैं। सिंहासनारूढ़ राजा सबका कल्याण करता है। उसने राज्य को अपना कुटुम्ब (परिवार) बनाया है। (परीक्षित् के राज्य में) स्त्रियां अपने पति से पूछती हैं—हे पतिदेव ! मैं आपके लिये क्या लाऊं, दही, परिस्रुत (सुरा-पेय) या मन्थ ?

जिस प्रकार आकाश व्याप्त है, उसी प्रकार राजा परीक्षित् के राष्ट्र में प्रजा का कल्याण होता है और वह धन्यधान्य से सम्पन्न है।

**सृञ्जयानां वैतहव्यानां च पराभवः**—

अतिमात्रमवर्धन्त नोदिव दिवमस्पृशन्।
भृगुं हिंसित्वा सृञ्जया वैतहव्याः पराभवन्॥ (५।१९।१)

**अर्थ**—वैतहव्यों और सृञ्जयों की कीर्ति ने आकाश को छू लिया था, वे बहुत बढ़े चढ़े हुए थे, परन्तु भृगु (जमदग्नि, भार्गव) को मारकर वे नष्ट होगये।

**जमदग्निः, वीतहव्यः, असितः (काश्यपश्च)**—

यां जमदग्निरखनद्दुहित्रे केशवर्धनीम्।
तां वीतहव्य आभरदसितस्य गृहेभ्यः॥ (६।१३७।१)

**अर्थ**—जिस केशवर्धनी गाय की दोहन (या यज्ञ) के लिए जमदग्नि ने रक्षा की, उसको वीतहव्य (सहस्रार्जुनपुत्र) ने (जमदग्नि के गुरु) असित (काश्यप) ऋषि के घर से अपहरण कर लिया।

## पञ्चजनाः पृथ्वीदोहनञ्च

**असुरा आसुरीमाया च**—

सोदक्रामत्सासुरानागच्छत्तामसुरा उपाह्वयन्त माय एहीति।
तस्य विरोचनः प्राह्लर्वत्स आसीदयस्पात्रं पात्रम्।
तां द्विमूर्धा त्वधोक्तां मायामेवाधोक्।
तां मायामसुरा उपजीवन्त्युपजीवनीयो भवति एवं वेद।

**अर्थ**—वह (     ) चला और असुरों के पास आया, असुरों ने उसे बुलाया—हे माये ! आओ। उस पृथ्वीदोहन=मन्थन) का वत्स प्राह्लादि विरोचन वत्स था, लोहे का बर्तन दोहनपात्र था। उस माया का दोहनकर्त्ता द्विमूर्धा असुरराज था, जिसने माया का दोहन किया। उस माया के आधार पर जीवन धारणा करते हैं।

**पितृजनाः**—

सोदक्रामत्स पितॄनागच्छत्तां पितर उपाह्वयन्त स्वध एहीति।

तस्या यमो राजा वत्स आसीद्रजूतपात्रं पात्रम् ।
तामन्तको मार्त्यवोऽधोक्तां स्वधामेवाधोक् ।
तां स्वधां पितर उपजीवन्त्युपजीवनीयो भवति एवं वेद ।

**अर्थ**—वह चला और पितरों के पास आया। पितरों ने उसे बुलाया हे स्वधे ! हमारे पास आओ। उसका यमराज वत्स था, दोहनपात्र चांदी का था, उसको अन्तक मार्त्यव (यमपुत्र) ने दोहा, स्वधा को दोहा, उसी स्वधा (अन्न) के ऊपर पितर जीवित रहते हैं, वह उनका उपजीवनीय है, यह जाना।

**मनुष्याः—**

सोदक्रामत्सा मनुष्यानागच्छत्तां मनुष्या उपाह्वयन्तेरावत्येहीति ।
तस्या मनुर्वैवस्वतो वत्स आसीत्पृथिवी पात्रम् ।।
तां पृथी वैन्योऽधोक्तां कृषिं च सस्यं चाधोक् ।
कृषिं च सस्यं मनुष्या उपजीवन्ति । कृष्टिराधिरुपजीवनीयो भवति एवं वेद ।

**अर्थ**—वह चला और मनुष्यों के पास आया, मनुष्यों ने उसे बुलाया। मनु वैवस्वत वत्स था, पृथिवी पात्र थी। पृथु वैन्य ने उसका दोहन (पृथ्वीमन्थन) किया। उसने कृषि और सस्य का दोहन किया। कृषि और सस्य से ही मनुष्य जीविका चलाते हैं, यह सर्वविदित तथ्य है।

**सप्तऋषयः (सन्ततिश्च)—**

सोदक्रामत्सा सप्त ऋषीनागच्छत्तां सप्त ऋषय उपाह्वयन्त ब्रह्मण्वत्येहीति ।
तस्या सोमो राजा वत्स आसीच्छन्दः पात्रम् ।
तां बृहस्पतिरांगिरसोऽधोक्तां ब्रह्म च तपश्चाधोक् ।
ब्रह्म च तपश्च सप्त ऋषय उपजीवन्ति···।

**अर्थ**—वह चला और सप्तर्षियों के पास आया। सप्तर्षियों ने उसको बुलाया—हे ब्रह्मण्वती आओ। उसका सोम राजा वत्स था और छन्द ही पात्र था। बृहस्पति आंगिरस ने उसका दोहन किया और ब्रह्म (वेद) और तप का दोहन किया। ब्रह्म और तप पर ही सप्तर्षि और (उनकी सन्तति) जीवित रहती है।

**देवजाति—**

सोदक्रामत्सा देवानागच्छत्तां देवा उपाह्वयन्तोर्ज एहीति ।
तस्या इन्द्र वत्स आसीच्चमसः पात्रम् ।
तां देवः सविताधोक् तामूर्जामेवाधोक् ।
तामूर्जां देवा उपजीवन्ति···।।

अर्थ—वह चली और वह देवों के पास आई, देवों ने उसका आह्वान किया हे ऊर्क् आओ ! उसका इन्द्र वत्स था, चमस पात्र था। उसको सविता देव ने दोहा, उस ऊर्जा (शक्ति) को दोहा, उसी ऊर्जा से देव जीवित रहते हैं।

**गन्धर्वाप्सरसः—**

सोदक्रामत्सा गन्धर्वाप्सरस आगच्छत्तां गन्धर्वाप्सरस उपाह्वयन्त 'पुण्यगन्ध' एहीति।
तस्याश्चित्र रथो सौर्यवर्चसो वत्स आसीत्पुष्करपर्णं पात्रम्।
तां वसुरुचिः सौर्यवर्चसोऽधोक्तां पुण्यमेव गन्धमधोक्।

अर्थ—वह चली और गन्धर्वों और अप्सराओं के पास आई। गन्धर्वों और अप्सराओं ने बुलाया—हे पुण्यगन्ध आओ। उसका सौर्यवर्चस (सूर्यवर्चागन्धर्व का पुत्र) चित्ररथ वत्स था और वसुरुचि सौर्यवर्चा (द्वितीय भ्राता) ने उसको दुहा। पुण्यगन्ध को ही उसने दोहा।

**यक्षराक्षसाः (इतरजनाः)—**

सोदक्रामत्सेतरजनानागच्छत्तामितरजना उपाह्वयन्त तिरोध एहीति।
तस्याः कुबेरो वैश्रवणो वत्स आसीदामपात्रं पात्रम्।
तां रजतनाभिः काबेरकोऽधोक्तां तिरोधामेवाधोक्।
तां तिरोधामितरजना उपजीवन्ति···।

अर्थ—वह चली और इतरजन (यक्षराक्षसों) के पास आई। इतरजनों ने उसे बुलाया हे 'तिरोधान' (माया—गुप्तमाया) आओ। उसका कुबेर वैश्रवण वत्स था और आमपात्र (कच्चा बर्तन) पात्र था। उसको रजतनाभि काबेरक (कुबेर पुत्र) ने दोहा, उसने तिरोधान (माया) को दोहा। यक्षराक्षस माया से ही अपना जीवन चलाते हैं।

**नाग—**

सोदक्रामत्सा सर्पानागच्छत्तां सर्पा उपाह्वयन्त विषवत्येहीति।
तस्यास्तक्षको वैशालेयो वत्स आसीदलाबुपात्रं पात्रम्।
तां धृतराष्ट्र ऐरावतोऽधोक्तां विषमेवाधोक्।

अर्थ—वह आई और सर्पों के पास गई, उसको सर्पों ने बुलाया। हे 'विषवती' आओ। विशाला का पुत्र वैशालेय तक्षक (नाग) उसका वत्स था। अलाबुपात्र था। ऐरावत धृतराष्ट्र नाग ने उसका दोहन किया और विष का ही दोहन किया।

**वशा कलिगन्धर्वश्च—**

वशा समुद्रमध्यष्ठाद् गन्धर्वैः कलिभिस्सह। (१०।१०।१३)

**अर्थं**—कलि गन्धर्वों के साथ वशा समुद्र में ठहर गई ।

**द्वादश आदित्याः**—

इन्द्रं बृहस्पतिं सूर्यं ते नो मुञ्चन्त्वंहसः ।
ब्रूमो राजानं वरुणं मित्रं विष्णुमथो भगम् ।
अंशं विवस्वन्तं ब्रूमस्ते नो मुञ्चन्त्वंहसः ।
ब्रूमो देवं सवितारं धातारमुत पूषणम् ।
त्वष्टारमग्रियं ब्रूमस्ते नो मुञ्चन्त्वंहसः ।। (११।२४।३६)

**अर्थ**—इन्द्र, बृहस्पति, सूर्य, वरुण, मित्र, विष्णु, भग, अंश, विवस्वान्, सविता, धाता, पूषा और त्वष्टा—हमारे पापों को दूर करें। यह हमारी प्रार्थना है ।

(टिप्पणी—बृहस्पति को छोड़कर शेष बारह अदिति के पुत्र द्वादश आदित्य देव थे)

———

## [ ३ ]

# तैत्तिरीयसंहितायामैतिह्यसन्दर्भाः

**देवासुराः—**

देवासुराः संयत्ता आसन्, ते देवा विजयमुपयन्तोऽग्नौ वायं वसु सन्यदधत···।
तं पूषाऽऽधत्त तेन पूषाऽऽर्ध्नोत्···।
तं त्वष्टाऽऽधत्त तेन त्वष्टाऽऽर्ध्नोत्···।
तं मनुराधत्त तेन मनुरार्ध्नोत्···।
तं धाताऽऽधत्त तेन धाताऽऽर्ध्नोत्। (१।५।१)

**अर्थ**—देव और असुर युद्ध के लिए सन्नद्ध थे। देवगण ने विजय प्राप्त करते हुए अग्नि में इच्छित धन (वाम वसु) को रखा।···(सर्वप्रथम) वाम वसु को पूषा ने अग्नि में रखा, इससे पूषा की समृद्धि हुई···। तदनन्तर, उसको त्वष्टा ने रखा, इससे उसकी वृद्धि हुई। तदनन्तर मनु ने अग्नि में वामनीय वसु को डाला, इससे उनकी समृद्धि हुई। तदनन्तर धाता ने वह रखा, इससे धाता की ऋद्धि हुई।

**कसर्णीरः काद्रवेयः—**

सर्पा वै जीर्यन्तोऽमन्यन्त, स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत्, ततो वै जीर्णस्तनूपाघ्नत। (१।५।४।१)

**अर्थ**—सर्प जीर्ण (नष्ट) होते जा रहे थे, ऐसी अवस्था में कसर्णीर काद्रवेय ने इस मन्त्र को देखा। तब उन्होंने (नागों ने) अपने जीर्णतनु की रक्षा की।

**परमेष्ठी प्रजापतिः—**

परमेष्ठिनो वा एष यज्ञोऽग्र आसीत् तेन स परमां काष्ठामगच्छत्, तेन प्रजापतिं निरवासयत्, तेन प्रजापतिः परमां काष्ठामगच्छत्, तेनेन्द्रो निरवासयत्, तेनेन्द्रः परमां काष्ठामगच्छत्॥ (१।६।९।२)

**अर्थ**—यह यज्ञ पहिले परमेष्ठी (प्रजापति कश्यप) ने किया, जिससे वह

परमावस्था (श्रेष्ठतम अवस्था) को प्राप्त हुए, तदनन्तर इन्द्र ने यज्ञ किया, तब वह परम श्रेष्ठ अवस्था को प्राप्त हुआ।

**असुरपराभवः–**

यज्ञं वै देवा अदुह्नन्, यज्ञोऽसुरां अदुह्नत्,
ते असुरा यज्ञदुग्धा पराभवन् (४।१।७।१)

**अर्थ**—देवों ने यज्ञ को दुहा। (अर्थात् यजन किया) और यज्ञ ने असुरों को दुहा, वे यज्ञदुग्ध असुरगण पराजित हुए।

**इडा–**

पाकयज्ञेन मनुरश्राम्यत्, सेडा मनुमुपावर्तत, तां देवासुरा व्यह्वयन्त,
प्रतीचीं देवाः पराचीमसुराः, सा देवानुपावर्तत। (१।७।१।३)

**अर्थ**—पाकयज्ञ करने के पश्चात् मनु ने विश्राम किया, इडा मनु के पास आई। देवों और असुरों ने इडा को विविध प्रकार से बुलाया। पश्चिम में देवों ने और पूर्व में असुरों ने, तब वह इडा देवों के पास आई।

**संश्रवस्तुमिञ्जौ –**

संश्रवा ह सौवर्चनस्तुमिञ्जमौपोदितिमुवाच—यत्सत्रिणां
होताऽभूः। (१।७।२।१)

**अर्थ**—सुवर्चनस् का पुत्र संश्रव उपदिति के पुत्र से बोला—तुम सत्रियों के होता हो जाओ।

**वामनो विष्णुः—**

देवासुरा एषु लोकेष्वस्पर्धन्त, स एतं विष्णुर्वामनमश्यत्।
ततो वै स इमांल्लोकानभ्यजयत्। (२।१।३।१)

**अर्थ**—देवों और असुरों में विश्व विजय की होड़ थी। इस बात को विष्णु वामन ने देखा। उस विष्णु ने इन लोकों को जीत लिया।

**यमः—**

देवाश्च वै यमश्चास्मिंल्लोकेऽस्पर्धन्त।
स यमो देवानामिन्द्रियं वीर्यमयुवत···। (२।१।४।१)

**अर्थ**—देव और यम इस लोक में प्रतिस्पर्धा करने लगे। उस यम ने देवों के ऐन्द्रियक बल को अलग कर दिया।

**बलस्य पशवः–**

इन्द्रो बलस्य बिलमपौर्णोत्, स य उत्तमः पशुरासीत्,
तं पृष्ठं प्रति संगृह्योदाकखिदत्,
तं सहस्रं पशवोऽनूदायन्त्स उन्नतोऽभवत्। (२।१।५।१)

**अर्थ**—इन्द्र बल के बिल (गुहा) में गया, जो उत्तम पशु वहां था, उसको पीठ पीछे संग्रह करके'''। इन्द्र के पास सहस्र पशु आगये, वह इन्द्र उन्नत (समृद्ध) होगया।

**इन्द्रः—**

इन्द्रो वै सदृङ्देवताभिरासीत्, स न व्यावृत्तिमगच्छत्, स प्रजापतिमुपाधावत्। (२।२।८।५)

**अर्थ**—इन्द्र अन्य देवताओं के समान ही था। वह व्यावृति को प्राप्त नहीं हुआ। तब वह प्रजापति (पिता कश्यप) के पास दौड़ा गया।

**देवाक्रमणम्**—

देवासुराः संयत्ता आसन् ते देवा मिथो विप्रिया आसन्,
तेऽन्योऽन्यस्मै ज्यैष्ठायातिष्ठमानाश्चतुर्धा व्यक्रामन्नग्निर्वसुभिः
सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैः स इन्द्रः प्रजापतिमुपाधावत्
(२।२।११।५)

**अर्थ**—देवासुरगण युद्ध के लिए तैयार थे। देवगण परस्पर एक दूसरे का अप्रिय सोचते थे। वे परस्पर किसी को बड़ा न मानकर, उन्होंने चार प्रकार से आक्रमण किया, वसु ने अग्नि के साथ, सोम ने रुद्रों के साथ, इन्द्र ने मरुतों के साथ, वरुण ने आदित्यों के साथ विप्रिय किया। तब इन्द्र प्रजापति के पास दौड़ा गया।

**आनुजावर इन्द्रः—**

इन्द्रो वै देवानामानुजावर आसीत्, स प्रजापतिमुपाधावत्।
(२।३।७।१)

**अर्थ**—इन्द्र देवों में छोटा (अनुज) था। वह प्रजापति के पास दौड़ा गया।

**असुराणां विजयः—**

देवासुराः संयता आसन्, तान् देवानसुरा अजयन्,
ते देवाः पराजिग्याना असुराणां वैश्यमुपायन्। (२।३।७।१)

अर्थ—देव और असुर युद्धार्थ सन्नद्ध थे। असुरों ने देवों को जीत लिया। पराजित देवगण असुरों के वश में होगये।

**रजनः—**

रजनो वै कौणेयः क्रतुजितं जानकिं चक्षुर्वन्यमयात्।
तस्मा एताभिष्टिं निरवपद्। तयैवास्मिन् चक्षुरधात्। (२।३।८।१)

**अर्थ**—कुणि के पुत्र रजन जानकि क्रतुजित् के चक्षु की कामना की। रजन ने यह इष्टि सम्पन्न की और उसके द्वारा क्रतुजित् की आंखें ठीक कर दीं।

**देवानामसुराणां च पक्षधराः**—

देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षांसि पिशाचास्तेऽन्यत-स्तेषां देवानामुत अल्पं लोहितमकुर्वन् तद्रक्षांसि रात्रीभिरसुम्नन्। तान्त्सुब्धान् मृतानभि व्यौच्छत्, ते देवा अविदुर्यो नोऽयं रक्षांसि वा इमं घ्नन्तीति। ते रक्षांस्युपामन्त्रयत, तान्यब्रुवन् वरं वृणामहे यदसुरान् जयाम तन्नः सहासदिति, ततो वै देवा असुरानजयन्। तेऽसुरान् जित्वा रक्षांस्यापानुदन्त तानि रक्षांस्यनृतमकर्त्तेति समन्तं देवान् पर्यविशन्॥ (२।४।१।१-८)

**अर्थ**—देव, मनुष्य और पितर एक ओर थे और असुर, राक्षस तथा पिशाच दूसरी ओर थे। वे (असुरगण) देवों को घायल कर देते थे। तब राक्षस उन घायल देवों को अलग करके मार देते थे। देवों को यह पता चल गया कि राक्षस (देवों को छिपकर) मार देते हैं। देवों ने राक्षसों को बुलाया कि हम वर वरण करें या सन्धि करें। जब हम असुरों को जीत लें तब आप लोग हमारा साथ दो। देवों ने असुरों को जीत लिया। तदनन्तर देवों ने राक्षसों को भी समाप्त कर दिया। तब राक्षसों ने कहा—देवो आप अनृत और दुष्कर्मकर्त्ता हो और वे ऐसा कहकर देवों में घुस गये।

**वीर्यवत्तम इन्द्रः**—

देवासुराः संयता आसन्। ते देवा अब्रुवन्, यो नो वीर्यवत्तमस्तमनु समारभामहा इति इन्द्रमब्रुवन् त्वं वै नो वीर्यवत्तमोऽसि।…

(२।४।२।१)

**अर्थ**—देव और असुर युद्धार्थ सन्नद्ध थे। देवों ने विचारा जो हममें से सर्वाधिक बलवान् हो, वही हमारा नेतृत्व करे। उन्होंने इन्द्र से कहा—तुम ही हम सबमें वीर्यवत्तम हो…।

**सोमरोहिण्यौ राजयक्ष्मस्य जन्म च**—

प्रजापतेस्त्रयस्त्रिंशद् दुहितर आसन्। ताः सोमाय राज्ञेऽददात्। तासां रोहिणीमुपैत् ता ईर्ष्यन्ती पुनरगच्छन्, ता अन्वैत, ता पुनरयाचत ता अस्मै न पुनरददात्। सोऽब्रवीदृतुमीष्व यथा समागच्छ उपैष्याम्यथ ते पुनर्दास्यामि इति। स ऋतुममीत् ता अस्मै पुनरददात्। तासां रोहिणीमेवोपैत्। तां यक्ष्म आर्च्छद् राजयक्ष्म आरदिति, तद् राजयक्ष्मस्य जन्म यत् पापीयानभवत् पापयक्ष्मस्य

यज्जायाभ्योऽविन्दत् । तज्जायेन्यस्य य एतमेतेषां यक्ष्माणां जन्म ।
(२।३।५।१-२)

अर्थ—प्रजापति (दक्ष-प्राचेतस) की तेतीस पुत्रियां थीं, जो राजा सोम को व्याही थी। सोम केवल रोहिणी के पास जाता था। शेष ईर्ष्या करती हुई सोम के पास आई। उन्होंने सोम से कामयाचना की। लेकिन सोम ने अन्य पत्नियों की इच्छा पूरी नहीं की। वह बोला—आप लोग ऋतुमती होओ, तब आना तब मैं आपकी इच्छा पूरी करूंगा। अन्य पत्नियां जब ऋतुमती हुई और सोम के पास आई, लेकिन सोम ने केवल रोहिणी का अनुगमन किया। अतः सोम को यक्ष्मा होगया। वह राजयक्ष्मा का मरीज होगया। इस प्रकार राजयक्ष्मा का जन्म हुआ। जो पापी होता है, वह पापयक्ष्मा पत्नियों (अधिक कामुकता) से प्राप्त करता है। जो पुरुष स्त्रैण (कामी) होता है, उसको यक्ष्मा घेर लेती है।

**विश्वरूपस्त्वाष्ट्रः, इन्द्रेण ब्रह्महत्या—**

विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्रीयोऽसुराणां तस्य त्रीणि शीर्षाण्यासन्त्सोमपानं सुरापानमन्नादनं; स प्रत्यक्षं देवेभ्यो भागमवदत्, परोक्षमसुरेभ्यः, सर्वस्मै वै प्रत्यक्षं भागं वदन्ति, यस्मा एवं परोक्षं तस्य भाग उदितस्तस्मादिन्द्रोऽबिभेदीदृङ् वै राष्ट्रं विपर्यावर्तयतीति तस्य वज्रमादाय शीर्षाण्यच्छिनद्यत् सोमपानमासीत् स कपिञ्जलोऽभवत् यत् सुरापानं स कलविङ्को यदन्नादनं स तित्तिरिस्तस्याञ्जलिना ब्रह्महत्यामुपागृह्णत् तां संवत्सरमबिभस्तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति···॥
(२।५।१।१-२)

अर्थ—त्वष्टा का पुत्र देवों का पुरोहित था। वह असुरों की बहिन का पुत्र था। विश्वरूप के तीन शिर (और मुख) थे। एक मुख सोमपान करता था, दूसरा सुरापान और तीसरा मुख भोजन करता था। वह देवों से प्रत्यक्ष भाग मांगता था, असुरों से छिपकर मांगता था। वह सबको केवल प्रत्यक्ष भाग बताता था। जो उसका परोक्ष भाग था, वह भी प्रकट होगया। इन्द्र को भय हुआ कि यह विश्वरूप राष्ट्र की हानि कर रहा है, अतः इन्द्र ने विश्वरूप के तीनों शिर वज्र से काट दिये। जो सोमपान मुख था, वह कपिञ्जल (पक्षी) होगया, जो सुरापान-मुख था, वह कलविंक (पक्षी) बन गया। जो अनादमुख था वह तीतर बन गया।

इन्द्र को ब्रह्महत्या लगी, वह एक वर्षपर्यन्त भय के मारे छिपा रहा क्योंकि सभी प्राणी कहते थे—'यह ब्रह्महत्यारा' है।

**इन्द्रशत्रुः (वृत्रः त्वाष्ट्रः)—**

त्वष्टा हतपुत्रो वीन्द्रं सोममाहरत्, तस्मिन्निन्द्र उपहवमैच्छत, तं नोपाह्वयत, पुत्रं मेऽवधीरिति, स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् तस्य यदत्यशिष्यत, तत् त्वष्टाऽऽहवनीयमुप प्रावर्तयत् स्वाहा 'इन्द्रशत्रुवर्धस्वेति'…। तस्मादस्येन्द्रशत्रुरभवत् स इषुमात्र-मिषुमात्रं विष्वङ्वर्धत स इमांल्लोकानवृणोद्यदिमांल्लोकानवृणोत् तद् वृत्रस्य वृत्रत्वं तस्मादिन्द्रोऽबिभेत्, स प्रजापतिमुपाधावच्छ-त्रुर्मेऽजनीति। तस्मै वज्रं सिक्त्वा प्रायच्छदेतेन जहीति…। इन्द्रो वृत्रमहन्। (२।५।३।१-६)

इन्द्रो वृत्रं हत्वा देवताभिश्चेन्द्रियेण च व्यार्ध्यत…इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यं पृथिवीमनु व्यारत…। (२।५।३।१–२)

इन्द्रो वृत्रं हत्वा परा परावतमगच्छत्। (२।५।३।६)

अर्थ—(विश्वरूप) पुत्र के मारे जाने पर त्वष्टा ने इन्द्र के लिए सोम नहीं दिया। इन्द्र चाहता था कि उसको बुलाया जाए, परन्तु त्वष्टा ने इन्द्र का आह्वान नहीं किया। क्योंकि वह जानता था कि इसने मेरे (ज्येष्ठ) पुत्र को मारा है। इन्द्र ने यज्ञपात्र के बहाने जबरदस्ती सोमपान किया, जो अवशिष्ट सोम बचा, उसको त्वष्टा ने आहवनीयाग्नि में डालकर कहा—स्वाहा—'इन्द्रशत्रु ही बढ़े, इसलिए इन्द्र का शत्रु (वृत्रासुर) उत्पन्न होगया। वह वृत्र शनैः शनैः बहुत बढ़ गया और उसने समस्त लोकों पर अधिकार कर लिया, समस्त लोकों को आवृत करने के कारण उसका नाम 'वृत्र' होगया। इन्द्र उससे डरने लगा, तब इन्द्र भागकर (कश्यप) के पास गया—हे पिताजी ! मेरा शत्रु उत्पन्न होगया है। प्रजापति ने वज्र का सिंचन (निर्माण) करके इन्द्र को दिया और कहा— इस वज्र से वृत्र को मारो।…इन्द्र ने वृत्रासुर को मार दिया। वृत्र को मारने से इन्द्र का बलवीर्य नष्ट होगया और देवता विमुख होगये…।

वृत्र को मारनेवाले इन्द्र का बलवीर्य पृथिवी पर बिखर गया।

वृत्र को मारकर (ब्रह्महत्या के भय से) इन्द्र दूर भाग गया।

**नृमेधः परुच्छेपश्च—**

नृमेधश्च परुच्छेपश्च ब्रह्मवाद्यमवदेतामस्मिन् दारावाद्रेऽग्निं जनयाव यतरो नो ब्रह्मीयानिति नृमेधोऽभ्यवदत् स धूममजनयत्। परुच्छेपोऽभ्यवदत् सोऽग्निमजयदृष इत्यब्रवीत्। (२।५।८।३)

अर्थ—नृमेध और परुच्छेप (ऋषियों) ने ब्रह्मवाद्य बोला (और सोचा) हम दोनों में से आर्द्र लकड़ी में अग्नि उत्पन्न कर सके वही 'ब्रह्मीयान्' (अधिक वेद-

वेत्ता) है। नृमेध ने ब्रह्मवाद्य द्वारा धूम उत्पन्न किया और परुच्छेप ने अग्नि उत्पन्न की…।

**बृहस्पतेरेवापरनाम 'अग्निरिति'—**

अग्निर्देवानां दूत आसीदुशना काव्योऽसुराणां तौ प्रजापतिं प्रश्नमैताम्। (२।५।८।५)

अर्थ—अग्नि (अंगिरा=आंगिरस बृहस्पति) ही देवों का दूत (पुरोहित) था और उशना काव्य (शुक्राचार्य) असुरों के दूत थे। वे प्रश्न पूछने प्रजापति के पास गये।

**मनुवचनं भेषजम्—**

मनुरवदत् तद् भेषजम्। (२।२।१०।२)

अर्थ—मनु ने (मूल मानव धर्मशास्त्र में जो कुछ कहा है और जो अप्राप्य है) जो वचन कहे हैं वे भेषज (औषधितुल्य) हैं।

**विष्णुना इन्द्रस्य साहाय्यम्—**

इन्द्रोऽबिभेदपि त्वष्टा तस्मै वज्रमसिञ्चत्…।
तमुद्यन्तु नाकशनोदथ वै विष्णुरन्या देवताऽऽसीत्।
सोऽब्रवीद्विष्णवेहीदमा हरिष्यावो येनायमिदमिदमिति स विष्णुस्त्रेधाऽऽत्मानं विन्यधत्त पृथिव्यां तृतीयमन्तरिक्षे, तृतीयं दिवि, तृतीयमभिपर्यावर्ताद् ह बिभेद्यत् तेनेन्द्रो वज्रमुदयच्छद् विष्णवनुस्थितः सोऽब्रवीन्मो मे प्रहार्येनाहमिदिमस्मि तत्ते प्रदास्यामि॥ (२।४।१२।३-५)

अर्थ—इन्द्र डर रहा था, यद्यपि त्वष्टा ने उसके लिए वज्र का निर्माण किया। इन्द्र वज्र को चलाने में समर्थ नहीं हुआ, तब विष्णु दूसरा देवता था, (जो इन्द्र के साथ खड़ा था)। (इन्द्र ने) विष्णु से कहा—इस (वज्र) को हरण करें (उठायें)। विष्णु ने तीन बार अपने को रखा—पृथिवी में, अन्तरिक्ष में और आकाश में… तब इन्द्र ने वज्र को ग्रहण किया, विष्णु ने कहा—वज्र को इधर मत चलाओ, मैं यहां हूं यह मैं तुम्हें ही दूंगा।

**केशी दार्भ्यः—केशी सात्यकामिश्च—**

केशिनं ह दार्भ्यं केशी सात्यकामिरुवाच। (२।६।२।३)

अर्थ—केशी दार्भ्य से केशी सात्यकामि बोला।

**इडा—**

मनुः पृथिव्या यज्ञियमैच्छत् तावब्रूतां मित्रावरुणौ गौरेवाऽऽवामीश्वरौ तौ ततो गां समैरयताम् वसिष्ठ इडामुपह्वयते। मानवीत्याह—मनुर्ह्येतामग्रेऽपश्यत्। (२।६।७। )

**अर्थ**—मनु पृथिवी पर यज्ञ करना चाहते थे, मित्रावरुण ने (मनु से) कहा—गाय ही हमारा ईश्वर (सम्पत्ति) है। तब मित्र और वरुण ने गाय को प्रेरित किया।···वसिष्ठ ने इडा को बुलाया। मानवी इला बोली। मनु ने इन दोनों (मित्र और वरुण) को आगे देखा।

**रुद्रेण यज्ञवेधनम्**—

देवा वै यज्ञाद् रुद्रयन्तरायन्त्स यज्ञमविध्यत्। (२।६।८।३)

**अर्थ**—देवों ने यज्ञ में रुद्र का बहिष्कार किया, उसने यज्ञ का विध्वंस किया।

**अदन्तकः पूषा**—

पूषा प्राश्य दतोऽरुणत् तस्माद् पूषा प्रपिष्टभागकोऽदन्तकः। (२।६।८।५)

अर्थ—पूषा के खाकर दांत टूट गये, इसलिए पूषा को यज्ञ में पिष्ट भाग मिलता है, क्योंकि पूषा बिना दांत वाला है।

**शंयुबार्हस्पत्यः**—

देवा वै यज्ञस्य स्वगाकर्त्तारं नाविन्दन्, ते शंयुबार्हस्पत्यमब्रुवन्। (२।६।१०।१)

**अर्थ**—देवों को यज्ञ के स्वगाकर्त्ता की उपलब्धि नहीं हुई। उन्होंने बृहस्पति के पुत्र शंयु को बोला।

(वह स्वगाकर्त्ता=शान्तिकारक बनाया)

**विश्वामित्रजमदग्नी वसिष्ठश्च**—

विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेतां स एतज्जमदग्निर्विहव्यमपश्यत्। तेन वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्तः। (३।१।७।३)

**अर्थ**—विश्वामित्र और जमदग्नि वसिष्ठ (वासिष्ठ) से स्पर्धा करते थे। जमदग्नि ने विहव्य मन्त्र का दर्शन किया, जिससे ऋषि ने वसिष्ठ के तेजोबल को काटा।

**नाभानेदिष्ठो मानवः**—

मनुः पुत्रेभ्यो दायं व्यभजत्। स नाभानेदिष्ठं ब्रह्मचर्यं वसन्तं निरभजत् स आगच्छत्। सोऽब्रवीत्—कथा का निरभागिति। न त्वा निरभक्षमित्यब्रवीदङ्गिरस इमे सत्रमासते। ते सुवर्गं लोकं न प्रजानन्ति, तेभ्यं इदं ब्राह्मणं ब्रूहि। ते सुवर्गं लोकं यन्तो य एषां पशवस्तांस्ते दास्यन्तीति। तदेभ्योऽब्रवीत्—ते सुवर्गं लोकं यन्तो य एषां पशव आसन् तानस्मा अददुस्तं पशुभिश्चरन्तं यज्ञवास्तौ

रुद्र आगच्छत् । सोऽब्रवीन्मम वा इमे पशव इत्यदुर्वै मह्यमिमा-
नित्यब्रवीन्न वै तस्य त ईशत इत्यब्रवीद्यद्यज्ञवास्तौ हीयते मम
वै तदिति, तस्माद्यज्ञवास्तु नाभ्यवेत्यं सोऽब्रवीद्यज्ञे माऽऽभजाथ ते
पशून् नाभिमंस्य इति । तस्मा एतं मन्थिनः संस्रावमजुहोत् ततो
वै तस्य रुद्रः पशून् नाभ्यमन्यत । यत्रैतमेव विद्वान् मन्थिनः
संस्रावं जुहोति न तत्र रुद्रः पशूनभिमन्यते ।। (३।१।९। )

अर्थ—मनु (वैवस्वत) ने अपने पुत्रों को दायभाग दिया । दायविभाजन के समय (मनु का कनिष्ठपुत्र) नाभानेदिष्ठ ब्रह्मचर्य (वेदाध्ययन) में रत था । (ब्रह्मचर्य की समाप्ति पर) नाभानेदिष्ठ (पिता के पास) आया । हे पिताजी ! आपने किस (भाई) को क्या बांटा । (मनु ने उत्तर दिया)—(हे पुत्र) मैंने तुमको कोई भाग नहीं दिया । (परन्तु आङ्गिरस ऋषिगण सत्र का अनुष्ठान कर रहे हैं, वे स्वर्गलोक को नहीं जानते । तुम जाकर उनको यह ब्राह्मण (वेदव्याख्या) सुनाओ । वे स्वर्गलोक में जाते हुए तुमको उनके जो पशु हैं, वे तुम्हें दे देंगे । (तदुपरान्त नाभानेदिष्ठ ने वहां आंगिरसों के पास जाकर) ब्राह्मण सुनाया और उनके जो पशु (तथा सम्पत्ति थी) वह आंगिरसों ने स्वर्गलोक जाते समय उसे दे दी । पशुओं के साथ उसको देखकर यज्ञशाला में रुद्रदेव आये । नाभानेदिष्ठ ने रुद्र से कहा—हे रुद्रदेव ! ये मेरे ही पशु हैं, इनको मुझे (आंगिरसों ने) दिया है । (रुद्र ने कहा)—वे आंगिरस ही इन पशुओं के स्वामी हैं । जो पशु यज्ञशाला को छोड़ देगा वही मेरा है । तदनन्तर यज्ञशाला में कोई पशु नहीं आया । नाभानेदिष्ठ ने कहा—यज्ञशाला में मुझे प्राप्त करो, पशुओं की अवमानना मत करो । तब उसने मन्थी संस्राव यज्ञ किया, तब रुद्र ने उसके पशुओं को नहीं सताया, अतः जो वेदज्ञ मन्थी संस्राव करता है उसके पशु रुद्र के शिकार नहीं होते ।

**यज्ञसृष्टिः—**

प्रजापतिर्देवासुरानसृजत तदनु यज्ञोऽसृज्यत । यज्ञं छन्दांसि ते
विश्वञ्चो व्यक्रामन्त्सोऽसुराननु यज्ञोऽपाक्रामद्यज्ञं छन्दांसि ते देवा
अमन्यन्तामी वा इदमभूवन्, यद्वयं स्म इति ते प्रजापतिमुपाधा-
वन्त्सोऽब्रवीत् । प्रजापतिश्छन्दसां वीर्यमादाय तद्वः प्रदास्यामि ।
स छन्दसां वीर्यमादाय तदेभ्यः प्रायच्छत् । तदनु छन्दांस्यपाक्रमन् ।
छन्दांसि यज्ञस्ततो देवा अभवन् पराऽसुराः (३।३।७। )

**अर्थ**—प्रजापति ने देवों और असुरों की सृष्टि करने के पश्चात् यज्ञ का आविष्कार किया । छन्दों ने यज्ञ को चारों ओर से आक्रमण किया, यज्ञ ने असुरों का अतिक्रमण किया—असुरों को छोड़ दिया । देवों ने माना छन्द ही यज्ञ है । तब

देवगण प्रजापति के पास दौड़े गये। प्रजापति ने कहा—मैं छन्दों के बलवीर्य (पराक्रम) को लेकर तुमको दे दूंगा। और प्रजापति ने छन्दों का तेज लेकर देवों को दे दिया। तब छन्द भाग गये। छन्द ही यज्ञ है, ऐसा समझकर देव जीत गये और असुर पराजित हुए।

**वसिष्ठः—**

ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यन्। तं वसिष्ठः प्रत्यक्षमपश्यत्। सोऽब्रवीद् ब्राह्मणं ते वक्ष्यामि। यथा त्वत्पुरोहिताः प्रजाः प्रजनयिष्यन्तेऽथ मेतरेभ्य ऋषिभ्यो मा प्रवोच इति। तस्मा एतान् स्तोमान् भागानब्रवीत्। ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्त। तस्माद्वासिष्ठो ब्रह्मा कार्यः॥ (३।५।२।१)

**अर्थ**—(दूसरे) ऋषियों ने इन्द्र को प्रत्यक्ष नहीं देखा। केवल वसिष्ठ ने इन्द्र को प्रत्यक्ष देखा। उसने वसिष्ठ से कहा—मैं तुम्हारे लिये ब्राह्मण (वेद व्याख्यान) कहूंगा।

क्योंकि, आपके पौरोहित्य में प्रजा प्रजाओं (और यज्ञों) की सृष्टि करेगी। इसको आप दूसरे ऋषियों को न बतायें। इस प्रकार इन्द्र ने स्तोमों (ऋचाओं) का व्याख्यान किया। इसलिये वसिष्ठ पुरोहित थे ऐसी प्रजा उत्पन्न हुई। इसलिए वसिष्ठ वंशज को ही यज्ञ में पुरोहित बनाना चाहिए।

**अधिपतयः (इन्द्राः)=प्रजाध्यक्षा वा—**

प्रजापतिरधिपतिरासीत्···सप्तर्षयीऽसृजन्त। धाताऽधिपतिरासीत् ···आदित्यो अधिपतिरासीत् क्षत्रसृज्यन्त इन्द्रोऽधिपतिरासीत्··· ब्रह्मणस्पतिरधिपतिरासीत् वरुणोऽधिपतिरासीत्·· पूषाऽधिपतिरासीत् वायुरधिपतिरासीत्। प्रजापतिः परमेष्ठी अधिपतिरासीत्॥ (४।३।१०। )

**अर्थ**—प्रजापति (दक्ष) अधिपति था। सप्तर्षियों की सृष्टि हुई। धाता अधिपति था। आदित्य अधिपति था। ब्रह्मणस्पति (बृहस्पति आंगिरस) अधिपति था।···वरुण अधिपति था···। पूषा अधिपति था। वायु अधिपति था। ···प्रजापति परमेष्ठी (कश्यप) अधिपति था।

**शुनःशेपः—**

शुनःशेपमाजीगर्तिं वरुणोऽगृह्णात्। स एतां वारुणीमपश्यत्। (५।२।१।३)

**अर्थ**—अजीगर्त के पुत्र शुनःशेप को वरुणदेव ने पकड़ा, तब उससे इस वारुणी ऋचा का दर्शन किया।

**वत्सप्री:—**

वत्सप्रीर्भालान्दनोऽग्नेः प्रियं धामावरुन्धः । (५।२।१।६) ।

अर्थ—भलन्दन का पुत्र वत्सप्री (वत्सप्रि) अग्नि के प्रिय धाम को गया ।

**विश्वामित्र–**

विश्वामित्रोऽग्नेः प्रियं धामावरुन्ध । (५।२।३।४)

अर्थ— विश्वामित्र अग्नि के प्रिय धाम को गया ।

**समकालिका ऋषयः—**

याः प्राचीस्ताभिर्वसिष्ठ आर्ध्नोद्या दक्षिणा ताभिर्भरद्वाजो याः प्रतीचीस्ताभिर्विश्वामित्रो या उदीचीस्ताभिर्जमदग्निर्या ऊर्ध्वास्ताभिर्विश्वकर्मा ॥ (५।२।१०।५)

अर्थ—प्राची दिशा के द्वारा वसिष्ठ समृद्ध हुए, दक्षिण दिशा के द्वारा भरद्वाज समृद्ध हुए, पश्चिम दिशा द्वारा विश्वामित्र और उत्तरदिशा द्वारा जमदग्नि तथा ऊर्ध्वदिशा द्वारा विश्वकर्मा समृद्ध हुए ।

**कनीयांसः देवाः—**

देवासुराः संयत्ता आसन् । कनीयांसो देवा भूयांसोऽसुराः ।

(५।३।११।१)

अर्थ—देव और असुर युद्ध के लिये सन्नद्ध थे । देवता छोटे (और थोड़े थे) तथा असुर अधिक (तथा बड़े) थे ।

**सहस्रपुत्रवन्तो राजानः–**

पर आट्णारः, कक्षीवां औशिजो वीतहव्यः श्रायसः, त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वत ततो वै ते सहस्रं सहस्रं पुत्रानविन्दत । (५।६।५।३)

अर्थ—अट्णार (हिरण्यनाभकौसल्य) का पुत्र सम्राट् पर, उशिज् का पुत्र कक्षीवान् ऋषि, श्रयस् का पुत्र वीतहव्य (हैहय), पुरुकुत्स (ऐक्ष्वाक) पुत्र त्रसदस्यु ने प्रजा उत्पन्न करने की इच्छा से अभिचयन (यज्ञ) किया, तदनन्तर उनके एक-एक सहस्र पुत्र उत्पन्न हुए ।

**अथर्वा (=अग्निः=अङ्गिराः)–**

प्रजापतिर्वा अथर्वाऽग्निरेव दध्यङ्ङाथर्वणस्तस्येष्टका अस्थान्येतं ह वाव । (५।६।६।३)

अर्थ—प्रजापति अथर्वा अथवा अग्नि (अंगिरा) अथवा उसके पुत्र दध्यङ् आथर्वण (दधीचि) की अस्थियां ही इष्टकायें हैं…॥

**कद्रूसुपर्ण्यौ—**

कद्रूर्वै सुपर्णी चात्मरूपयोरस्पर्धेताम् । सा कद्रूः सुपर्णीमजयत् । साऽब्रवीत् । तृतीयस्यामितो दिवि सोमस्तमाहर । तेनाऽऽत्मानं निष्क्रीणीष्वेतीयं वं कद्रूरसौ सुपर्णी छन्दांसि सौपर्णेयाः । साऽब्रवीदस्मै वै पितरौ पुत्रान् बिभृतस्तृतीयस्यामितो दिवि··· । गायत्री कनिष्ठा छन्दसां सती । सुपर्णः सोममाहरत् तं सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात् । स तिस्रो रात्रीः परिमुषितोऽवसत् । ते देवा अब्रुवन्त्स्त्रीकामा वै गन्धर्वाः । स्त्रिया निष्क्रीणामेति । ते वाचं स्त्रियमेकहायनीं कृत्वा तया निरक्रीन्त्सा रोहिद् रूपं कृत्वा गन्धर्वेभ्योऽपाक्रम्यातिष्ठत् तद्रोहितो जन्म गन्धर्वा अवदन्नगायन् देवाः । सा देवान् गायत उपावर्तत; तस्माद् गायन्तं स्त्रियः कामयन्ते । (६।१।६)

**अर्थ**—(नागमाता) कद्रू और सुपर्णी (विनता) आत्मरूप (अभिमानवश) में होड़ करने लगी (शर्त लगाने लगी) । कद्रू ने (छल से) सुपर्णी को जीत लिया । वह (कद्रू) बोली—तृतीय दिव्यलोक (देवधाम हिमालय त्रिविष्टिप तिब्बत) में सोम (अमृतघर) है उसको (तुम्हारा पुत्र गरुड़) लाये । तुम अपने को बेच दो (मेरी दासी हो) । छन्द ही सौपर्णेय (गरुड़ादि) हैं । वह (सुपर्णी-विनता) बोली—(गरुड़ से)—माता-पिता-पुत्रों का भरण-पोषण करते (और पुत्र बड़े होकर माता-पिता की सेवा करते हैं ।) दिव्य तृतीयलोक में अमृतघर है । गायत्री छन्दों में सबसे छोटी है ।···सुपर्ण (गरुड़) ने सोम (घर) का अपहरण कर लिया । गरुड़ द्वारा सोम अपहरण करते हुए गन्धर्व विश्वावसु ने उस सोमघर को चुराकर छिपा दिया । सोम छिपाये जाने पर गरुड़ तीन दिन तक (गन्धर्वलोक में) वहीं रहा । देवों ने कहा—गन्धर्व स्त्री-काम होते हैं । उन्हें स्त्री द्वारा खरीदें । उन्होंने वाक् को एक वर्ष की स्त्री बनाकर गन्धर्वों से सौदा किया । वह रोहित रूप (घोड़ी) बनाकर भाग गई, इस प्रकार रोहित (घोड़ी) का जन्म हुआ । गन्धर्वों ने कहा—हे देवो गाना गाओ । वह गाना सुनकर खड़ी रही । इसलिये स्त्री गाना सुनना या गाते हुए पुरुष को चाहती है ।

**आसुर्यः त्रिपुरः रुद्रश्च—**

तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाऽथ रजताऽथ हरिणी ता देवा जेतुं नाशक्नुवन् । ता उपसदैवा जिगीषन् । तस्मादाहुर्यश्चैव वेद यश्च नोपसदा वै महापुरं जयन्तीति । तमिषुं समस्कुर्वतऽग्निमनीकं सोमं शल्यं विष्णुः तेजनं तेऽब्रुवन् क इमाम—

सिष्यतीति; रुद्र इत्यब्रुवन् । रुद्रो वै क्रूरः सोऽस्यत्विति । सोऽब्रवीद् वरं वृणा अहमेव पशूनामधिपतिरसानीति । तस्माद् रुद्रः पशूनामधिपतिस्तां रुद्रोऽवास्रजत् । स तिस्रः पुरो भित्वैभ्यो लोकेभ्योऽसुरान् प्राणुदत् ॥ (६।२।३।१-२)

अर्थ—असुरों के तीन पुर थे। सबसे नीचे आयसपुर (लौहनगर) था, (मध्य-अन्तरिक्ष में) चांदी का नगर और (सबसे ऊपर आकाश में) सुवर्ण का नगर था। देवगण उन तीनों नगरों को जीतने में असमर्थ रहे। उन्होंने उपसदों (छिन्द्रों) द्वारा जीतना चाहा। इसलिये कहा जाता है, जो जानता है वह उपसदों से नगर नहीं जीतता। बाण को संस्कृत (तेज) करते हुए अग्नि को अनीक (सेना), सोम को शल्य और विष्णु को तेजन किया। वे बोले—कौन बाण छोड़ेगा। रुद्र छोड़ेगा वे बोले। रुद्र क्रूर है, अतः वही (बाण) फेंकेगा। वह (रुद्र) बोला—मैं (पहिले) वर मांगता हूं। मैं पशुओं का अधिपति (पशुपति) बनूंगा। इसलिए रुद्र पशुओं का अधिपति है। तब रुद्र ने (त्रिपुरनाश के लिये) बाण छोड़ दिया। बाण ने त्रिपुरों (=तीनों नगरों) को तोड़कर उन लोकों से असुरों का नाश कर दिया।

**असुराणां वित्तम् सलावृकीरूपी इन्द्रश्च—**

वराहोऽयं वाममोषः सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्ति। तं जहि। यदि दुर्गे हन्ताऽसीति स दर्भपुञ्जीलमुद्वृत्य सप्तगिरीन् भित्त्वा तमहन्त्सोऽब्रवीद् दुर्गाद्वा आहर्ताऽवोचथा एतमाहरेति। तमेभ्यो यज्ञ एव यज्ञमाहरत् यत् तद्वित्तं वेद्यमसुराणामविन्दत ।··स इन्द्रः सलावृकीरूपं कृत्वेमां त्रिः सर्वतः पर्यक्रामत्। तदिममविन्दत।

अर्थ—वाममोष वराह सात पहाड़ों के आगे असुरों के धन को धारण करता है। उसको मारो। यदि दुर्ग में मारोगे तो वह दर्भपुञ्जील को तोड़कर सात पहाड़ों को भेदकर (भाग जायेगा)। उसको मारा (पीटा), वह बोला—दुर्ग से आहरण करूंगा, वह बोला—इस धन को लाओ। यज्ञ ने ही यज्ञ का अपहरण किया। तब असुरों के वेद्य वित्त को प्राप्त किया। इन्द्र ने सलावृकी (आसुरी) का रूप रखकर वहां तीन चक्कर लगाये। और उस वित्त (धन) को प्राप्त किया।

**यतयः—**

इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्। (६।२।७।५)

अर्थ—इन्द्र ने (असुर) यतियों को सालावृक (असुरों) के हवाले कर दिया।

**ऐन्द्रव्याकरणम्–**

वाग्वै पराच्यव्याकृताऽवदत्। ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति·· तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते। (६।४।७)

अर्थ—पहिले वाली (भाषा-संस्कृत) पराची (अनुपयुक्त) और अव्याकृत (संस्कारहीन) थी। तब देवों ने कहा—इस देवभाषा को सुधारो (व्याकरणसम्मत) शुद्ध=संस्कृत करो। इन्द्र ने उसको बीच में से तोड़कर (विश्लेषण करके) उसका व्याकरण बनाया। तब से यह भाषा (संस्कृत) व्याकरणसम्मत बोली जाती है।

**बृहस्पतिः; शण्डामर्कौ च—**

बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्कावसुराणां; ब्रह्मण्वन्तो देवा आसन्। ब्रह्मण्वन्तोऽसुरास्तेऽन्योऽन्यं नाशक्नुवन्नभिभवितुं ते देवाः शण्डामर्कावुपामन्त्रयन्त तावब्रूतां वरं वृणावहै। ग्रहावेव नावत्रापि गृह्येतामिति। ताभ्यामेतौ शुक्रामन्थिनावगृह्णन्। ततो देवा अभवन् पराऽसुराः · । (६।४।१०।१)

अर्थ—बृहस्पति देवों के पुरोहित थे और शण्ड और मर्क असुरों के पुरोहित थे। देव और असुर दोनों ही ब्रह्मण्वन्त थे। इसलिये वे एक दूसरे को नहीं जीत सके। तब देवों ने शण्ड और मर्क को बुलाया। वे दोनों असुरपुरोहित बोले—हम वरदान चाहेंगे। हमारे भी सोमग्रह होएं। उनके लिए शुक्रामन्थी (दो सोमग्रह-प्याले) ग्रहण किये गये। अतः देवगण जीत गये और असुर पराजित होगये।

**महेन्द्रः—**

इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपराधमिति मन्यमानः स हरितोऽभवत्। इन्द्रो वृत्रमहन्। तं देवा अब्रुवन् महान् वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वम्। (६।५।५। )

अर्थ—इन्द्र ने वृत्रासुर को मारा। वह इस कर्म को अपराध मानकर दूर भाग गया (और छिपता रहा)। इन्द्र ने वृत्र को मार दिया, अतः देवों ने कहा—इन्द्र महान् (देव और वीर) है क्योंकि इसने (दुर्धर्ष महावीर) वृत्रासुर को मारा है। यही इन्द्र की महानता है—यह उसका महेन्द्रत्व है। (तब से इन्द्र का एक विशेषण महेन्द्र भी हुआ।)

**अदितिः साध्याः देवास्तथा विवस्वानादित्य जन्म—**

अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत् । तस्या उच्छेषणमददुस्तत् प्राश्नात् सा रेतोऽधत्त । तस्यै चत्वार आदित्या अजायन्त । सा द्वितीयमपचत् । साऽमन्यतोच्छेषणान्म इमेऽज्ञत यदग्रे प्राशिष्यामीतो मे वसीयांसो जनिष्यन्त इति सा अग्रे प्राश्नात् । सा रेतोऽधत्त । तस्यै व्यृद्धमाण्डमजायत साऽऽदित्येभ्य एव तृतीयमपचद् भोगाय म इदं श्रान्तमस्त्विवति । तेऽब्रुवन् वरं वृणामहै । योऽतो जायता अस्माकं स एकोऽसद्योऽस्य प्रजाया-मृध्याता अस्माकं भोगाय भवादिति । ततो विवस्वानादित्योऽ-जायत । तस्य वा इयं प्रजा यन्मनुष्याः…। (६।५।६।१-२) ।

**अर्थ**— पुत्र की इच्छा से अदिति ने साध्य (नारायण) देवों के लिये ब्रह्मौदन पकाया । (स्वयं देवों ने खाने के पश्चात्) अवशिष्ट भोजन अदिति के लिये दिया । वह भोजन अदिति ने खाया, जिससे उसने गर्भधारण किया, तब उसने चार आदित्य पुत्रों (वरुण आदि) को जन्म दिया । पुनः उसने दुबारा ब्रह्मौदन पकाया । उसने समझा कि अवशिष्ट भोजन खाने से ये ऐसे पुत्र उत्पन्न हुए हैं । यदि मैं पहिले भोजन खाऊं तो मेरे समृद्ध पुत्र उत्पन्न होंगे । इसलिए उसने (साध्यों से पूर्व) भोजन खाया । तब उसने गर्भधारण किया, तब उसके असमृद्ध (मृताण्ड)— गर्भ उत्पन्न हुआ । अदिति ने (अपने पुत्रों) आदित्यों के लिए ही भोजन पकाया । यह पकाया पवित्र भोजन मेरे लिए हो । वे आदित्य बोले—हम वर मांगते हैं । जो अब आपका पुत्र उत्पन्न हो, वह हमारी प्रजाओं (आदित्यों) में एक ही देर से उत्पन्न हो और हमको समृद्ध करे । तदनन्तर (एक ही पुत्र) विवस्वान् आदित्य (सूर्य) उत्पन्न हुआ, जिसकी सन्तान मनुष्य (वैवस्वतमनु से) हुए ।

**त्वष्टा—**

देवा वै त्वष्टारमजिघांसन्त्स पत्नीः प्रापद्यत । तं न प्रति प्रायच्छन् । तस्मादपि वध्यं प्रपन्नं न प्रति प्रयच्छन्ति ।

(६।५।८।४-५)

इन्द्रस्त्वष्टुः सोममभीषहाऽपिबत् । स विष्वङ् व्यार्च्छत् स आत्मन्-न्नारमणं नाविन्दत । (६।५।११।३)

**अर्थ**—देवों ने (पुरोहित) त्वष्टा को मारना चाहा । वह यजमानपत्नियों की शरण में गया । पत्नियों ने त्वष्टा को देवों के प्रति समर्पित नहीं किया । इसलिए शरणागत (भले ही) वध्य हो उसे समर्पित नहीं करना चाहिये ।

शत्रुघाती इन्द्र ने त्वष्टा का सोम (जबरदस्ती) पी लिया । वह चारों ओर भागा भागा घूमा परन्तु उसको कहीं शान्ति या आराम नहीं मिला ।

**इन्द्रद्वारा मनुयाजनम्—**

इन्द्रः पत्निया मनुमयाजयत् ...। तया मनुरार्ध्नोत्। (६।६।६।१)

**अर्थ**—इन्द्र ने मनुपत्नी के साथ वैवस्वत मनु का यज्ञ कराया (तब तक इन्द्र ब्राह्मण ऋषि पुरोहित था—पुरोहित (ऋत्विक्) के रूप में सौ यज्ञ कराने के कारण ही उसका नाम पड़ा 'शतक्रतु') उस यज्ञ में मनु की समृद्धि हुई।

**हविष्मान् हविष्कृत् च (आङ्गिरसौ)—**

अङ्गिरसो वै सत्रमासत तेषां हविष्मांश्च हविष्कृच्चाहीयतो तावकामयेतां सुवर्गं लोकमियावेति तावेतं द्विरात्रमपश्यतां तमाहरतां तेनायजेतां ततो वै तौ स्वर्गं लोकमैताम्। (७।१।४।१)

**अर्थ**—अंगिरा के वंशज ऋषि यज्ञ कर रहे थे। उनमें हविष्मान् और हविष्कृत् (संज्ञक ऋषियों) की उन्नति नहीं हो रही थी। उन्होंने इच्छा की हम स्वर्गलोक जायें (अर्थात् उन्नति करें।) उन्होंने द्विरात्रक्रतु का दर्शन किया (उसकी विधि जानी) उस द्विरात्रक्रतु का अनुष्ठान किया, तदनन्तर वे स्वर्गलोक गये। (समृद्धि को प्राप्त हुए)।

**सोमेन्द्रयमाः—**

सोमो वै सहस्रमविन्दत्। तमिन्द्रोऽन्वविन्दत्। तौ यमौ न्यागच्छत्। तावब्रवीदस्तु मेऽत्रापि। (७।१।५।१)

**अर्थ**—सोम ने सहस्र (रुकममुद्रायें प्राप्त की। इन्द्र को यह पता चल गया। वह यमों के पास आया। उनसे बोला—मेरा (हिस्सा) भी इसमें हो।

**चत्वार आत्रेयाः (सुहोतृसूद्गातृस्वध्वर्युसुसभेयाः—**

अत्रिरददादौर्वाय प्रजां पुत्रकामाय। स रिरिचानोऽमन्यत निर्वीर्यः शिथिलो यातयामा स एतं चतूरात्रमपश्यत्। तमाहरत। तेनायजत। ततो वै तस्य चत्वारो वीरा आजायन्त सुहोता सूद्गाता स्वध्वर्युः सुसभेयः। (७।१।८।१)

**अर्थ**—अत्रि ने पुत्र की इच्छावाले और्व (भार्गव) को अपनी सन्तान दे दी। तब अत्रि ने अपने को खाली (अकेला) पाकर निर्वीर्य, शिथिल और निरुपयोगी समझा। तदनन्तर उसने चतूरात्रक्रतु का दर्शन किया। उस क्रतु का अनुष्ठान किया। तब अत्रि के चार वीर पुत्र उत्पन्न हुए, जिनके नाम या विशेषण थे)—सुहोता, सूद्गाता, स्वध्वर्यु और सुसभेय।

**जमदग्निः—**

जमदग्निः पुष्टिकामश्चतूरात्रेणायजत। स एतान् पोषां अपुष्यत्। तस्मात् पलितौ जामदग्नियौ न संजानाते। (७।१।६।१)

अर्थ—पुष्टिकाम जमदग्नि ने चतूरात्रक्रतु किया। उसने पुष्टि प्राप्त की। इसलिए जमदग्नि वृद्धावस्था को नहीं जानते हैं।

**आदित्याः—**

आदित्या अकामन्तोभयोर्लोकयो ऋध्नुयामेति।

अर्थ—आदित्यों (अदितिपुत्रों—देवों) ने इच्छा की कि दोनों लोकों में समृद्धि प्राप्त करें।

**इन्द्रः—**

इन्द्रो वै सदृङ् देवताभिरासीत्। (७।३।६।१)

इन्द्रो वै शिथिल इवाप्रतिष्ठित आसीत्। सोऽसुरेभ्योऽबिभेत्। स प्रजापतिमुपाधावत्। तस्मा एतं पञ्चदशरात्रं वज्रं प्रायच्छत्। तेनासुरान् पराभाव्य विजित्य श्रियमगच्छत्। (७।३।७।१)

अर्थ—इन्द्र अन्य देवों के सदृश (सामान्य) ही था।...

इन्द्र शिथिल (तेजोहीन) और अप्रतिष्ठित था। वह असुरों से डरता रहता था। वह प्रजापति (पिता कश्यप) के पास भागा गया। उसने पञ्चदशरात्ररूप वज्र उसको दिया, जिससे असुरों को पराजित कर श्रीः को प्राप्त हुआ।

**देवा एव मनुष्याः—**

यथा वै मनुष्या एवं देवा अग्र आसन्। (७।४।२।१)

अर्थ—पहिले देवगण मनुष्यों के सदृश ही थे।

**वसिष्ठः सौदासाश्च—**

वसिष्ठो हतपुत्रोऽकामयत विन्देय प्रजामभि सौदासान् भवेयमिति।

...ततो वै सोऽविन्दत प्रजामभि सौदासानभवत्। (७।४।७।१)

अर्थ—(कल्माषपाद आदि सौदास—ऐक्ष्वाकों द्वारा) पुत्रों के मारे जाने पर वसिष्ठ (वासिष्ठ) ऋषि ने इच्छा की कि ऐसी सन्तान हो जो सौदास राजाओं को पराजित करे...। तदनन्तर उसने (ऐसी प्रजा) सन्तति (पराशररूप में) प्राप्त की जिसने सौदासों को पराजित किया।

**विभिन्नेषु लोकेषु अश्वस्य नामानि—**

हयो देवानवहदर्वाऽसुरान् वाजी गन्धर्वानश्वो मनुष्यान्।

(७।५।२५।२)

अर्थ—(एक ऐतिहासिक तथ्य है कि एक ही भाषा के विभिन्न रूप विभिन्न देशों में प्रचलित हुए)—देवों में उसे हय कहते थे, असुर उसे अर्वन् कहते थे, गन्धर्व वाजी कहते थे और मनुष्य (भारतवासी) अश्व कहते थे।

———

# काठकसंहितायामैतिह्यसन्दर्भाः

**प्रैयमेधाः—**

प्रैयमेधा वै नाम ब्राह्मणा आसंस्ते सर्वमविदुः । (६।६।१०)

**अर्थ**—प्रियमेध (ऋषि) के वंशज प्रैयमेधा ब्राह्मण थे, जो सब कुछ (यज्ञ सम्बन्धी) जानते थे ।

**कालकाञ्जाः—**

कालाकाञ्जा वै नामासुरा आसन् । (८।१।१)

**अर्थ**—कालकाञ्ज नाम के (प्रसिद्ध) असुर थे ।

**इडा—**

इडा वै मनावी आसीत् । सासुरानग्निमादधानानगच्छत् । (८।४।८)

**अर्थ**—इडा (इला) मनु की पुत्री थी । वह अग्न्याधान करनेवाले असुरों के पास गई ।

**स्यूमरश्मिः—**

इन्द्रो वै यतीन् सालावृकेभ्यः प्रायच्छत् । तेषामद्यमानानां स्यूमरश्मिर्ऋषिरश्वं प्राविशत् । (८।५।१०)

**अर्थ**—इन्द्र ने यतियों को सालावृकों के हवाले कर दिया । (जब) सालावृक उनको खा रहे थे तब स्यूमरश्मि अश्व (अश्वों) में छिप गये ।

**वामदेवः कुसिदायी च—**

वामदेवश्च वै कुसिदायी चात्मनोराजिमयातां तस्य कुसिदायी पूर्वस्यातिद्रहस्य कूबरं न्यगृह्णात् । (१०।५।७)

**अर्थ**—वामदेव और कुसिदायी ने रथदौड़ की होड़ लगाई । कुसिदायी ने तेज आगे जाते हुए वामदेव के रथ के कूबर को पकड़ा ।

**बको दाल्भ्यः ; धृतराष्ट्रः वैचित्रवीर्यश्च—**

नैमिष्या वै सत्रमासत त उत्थाय सप्तविंशतिं कुरुपञ्चालेषु वत्सतरानवन्वत । तान् बको दाल्भिरब्रवीद्यूयमेवैतान् विभजध्वमिममहं धृतराष्ट्रं वैचित्रवीर्यं गमिष्यामि । स मह्यं करिष्यतीति

तमागच्छत् । तन्नासूर्क्षत् तं प्रकालयतैता गा ब्रह्मबन्ध इत्यब्रवीत् । पशुपतिर्गा हन्ति ताः परः पचमानश्चरेति । तासां देवसूर्ये राजान्नं प्रासुषोदिति । स कथान्युत्कर्तमपचत् । तस्मिन् पचमाने व्युदस्यत् । तस्य यत्किंचिद् धृतराष्ट्रस्यासीत् तत् सर्वं विद्राणमभि व्यौच्छत् विप्रश्निका अविन्दन् ब्राह्मणो वै त्वायमभिचरति । तस्मिन्नाथस्वेति । तमुपाशिक्षत् तस्मै बह्वददात् । (१०।६।९)

**अर्थ**—नैमिषारण्यवासी ऋषि यज्ञ कर रहे थे। जब वे यज्ञ कर चुके तो उन्होंने कुरुपांचाल में सत्ताईस वत्सतर (बैल) प्राप्त किये। बकदाल्भ्य ऋषि ने अपने साथी ऋत्विकों से कहा—इनको आप बांट लो। मैं (कुरुराज) धृतराष्ट्र वैचित्रवीर्य के पास जाऊंगा जो मुझे दान देगा। तब वह धृतराष्ट्र के पास आया। धृतराष्ट्र ने बकदाल्भ्य का अनादर किया। धृतराष्ट्र ने बकदाल्भ्य को गालियां दीं—हे ब्रह्मबन्धो ! पशुपति गायों को मार रहा है। अतः तुम भोजन करके भाग जाओ। उस देवर्षि को राजा ने अन्न (भोजन) दिया। उसने किसी प्रकार पचाया। उसके पचाने पर ही वह भोजन उगल दिया।

जो कुछ भी धृतराष्ट्र का था सब कुछ अस्तव्यस्त होगया। इस रहस्य को विप्रश्निकों (ज्योतिषियों) ने जान लिया। और उन्होंने धृतराष्ट्र को बताया—हे राजन् ! ब्राह्मण (बकदाल्भ्य) आपके साथ अभिचार कर रहा है, उससे क्षमा मांगो। तब धृतराष्ट्र ने उससे क्षमा मांगी और बहुत धन दान में दिया।

**अगस्त्यः इन्द्रः मरुतश्च**—

अगस्त्यो वै मरुद्भ्यः शतमुक्ष्णः पृश्नीन् प्रौक्षत् । तानिन्द्रायालभत । तं मरुतः क्रुद्धा वज्रमुद्यत्याभ्यपतन् । (१०।११।१९)

**अर्थ**—अगस्त्य ने सौ बिन्दुमती गायों (या बैलों) का मरुतों के लिये प्रोक्षण किया, लेकिन वे ऋषि ने इन्द्र को दे दीं। तब मरुत क्रुद्ध हो वज्र उठाकर (ऋषि पर) टूट पड़े।

**सालावृकेयाः**—

यतीन् वै सालावृकेया आदंस्तेषां शीर्षाणि परापतन् ते खजूरा अभवन् । (११।१०।२९)

**अर्थ**—असुर यतियों को सालावृक असुरों ने खा डाला, उनके शिर गिर गये वे खर्जूर होगये।

**विश्वरूपस्त्रिशिराः**—

विश्वरूपो वै त्रिशीर्षासीत् त्वष्टुः पुत्रोऽसुराणां स्वस्त्रीयस्स सोममेकेन शीर्ष्णापिबदन्नमकेनावयत् सुरामेकेनापिबत् । स

पौंसायनो दशपुरुषं राज्यादपरुद्धोऽभूत्तमयं चाक्रः स्थपतिः सौत्रामण्या याजयिष्यति । यदिदं सृञ्जयेषु राष्ट्रं तद्धास्मिन् धास्यतीति । (१२।९।३।३)

**अर्थ**— दुष्टरीतु पौंसायन (का सृञ्जयराष्ट्र) दशपीढ़ियों से राज्य से वञ्चित था । देवोत्तरसमूहपाटवचाक्र स्थपति को सृञ्जयों ने रोक लिया । वह (चाक्र) दुष्टरीतु पौंसायन से बोला—'मैं आपको सौत्रामणी यज्ञ कराऊंगा और सृञ्जयों का जो राष्ट्र है, वह आपको दिलाऊंगा । ठीक है । उसने उसका सौत्रामणी यज्ञ करवाया ।

बल्हिक प्रातिपीय (प्रतीप के पुत्र) ने सुना । वह कौरव्यराजा था । (उसने सुना)—"दुष्टरीतु पौंसायन, जिसका राज्य दश पीढ़ियों से अपरुद्ध था, उसको स्थपति चाक्र सौत्रामणी यज्ञ कराके सृञ्जयराष्ट्र उसे दिला देगा ।"

## दश प्रजापतयो दशजनाश्च (पञ्चजना वा)

## (श०ब्रा० १३।४।३।१-१५)

**मनुर्वैवस्वतो मानवी प्रजा च**—

मनुर्वैवस्वतो राजेत्याह । तस्य मनुष्या विशस्त इमे आसत······ तानुपदिशत्यृचो वेद···।।३।।

**अर्थ**—मनु वैवस्वत राजा था और मनुष्य उसकी प्रजा थे । वे बैठते थे तब मनु उनको ऋग्वेद पढ़कर सुनाता था ।

**यमो वैवस्वतः पितरश्च**—

यमो वैवस्वतो राजेत्याह । तस्य पितरो विशस्त इम आसत इति स्थविरा उपसमेता भवन्ति । तानुपदिशति यजूंषि वेद ।।६।।

**अर्थ**— यम वैवस्वत राजा था और पितृगण उसकी प्रजायें थीं, जब स्थविर (वृद्ध-पितृगण) इकट्ठे बैठते थे, तब यम उनको यजुर्वेद सुनाता था ।

**वरुण आदित्यः**—

वरुण आदित्यो राजेत्याह । तस्य गन्धर्वा विशस्त इम आसत इति युवानः शोभना उपसमेता भवन्ति । तानुपदिशत्यथर्वाणो वेदः ।।७।।

**अर्थ**—वरुण आदित्य (अदितिपुत्र) राजा था और गन्धर्व उसकी प्रजा । वे युवा अलंकृत होकर सभा करते थे तब वरुण उनको अथर्ववेद की शिक्षा देता था ।

**सोमः वैष्णवः**—

सोमः वैष्णवो राजेत्याह । तस्याप्सरसो विशस्ता इमा आसत

इति । युवतयः शोभना उपसमेता भवन्ति । ता उपदिशत्यङ्गिरसो वेदः ॥८॥

**अर्थ**—सोम वैष्णव (विष्णु का पुत्र) राजा था और अप्सरायें उसकी प्रजायें थीं । वे इकट्ठी होती थी, तब सोम उनको आंगिरसवेद का उपदेश देता था ।

**अर्बुदः काद्रवेयः—**

अर्बुदः काद्रवेयो राजेत्याह । तस्य सर्पा विशस्त इम आसत इति । सर्पाश्च सर्पविदश्चोपसमेता भवन्ति तानुपशति—सर्पविद्यावेदः । ॥९॥

**अर्थ**—अर्बुद काद्रवेय (कद्रू का पुत्र) राजा था और नाग उसका पुत्र था । जब नाग और सर्प विद्याविशारद विद्वान् एकत्रित होते थे, तब अर्बुद काद्रवेय उनको सर्पविद्यावेद का उपदेश देता था ।

**कुबेरः वैश्रवणः—**

कुबेरो वैश्रवणो राजेत्याह । तस्य रक्षांसि विशस्तानीमान्यासत इति सेलगाः पायकृत उपसमेता भवन्ति । तानुपदिशति देवजन-विद्यावेदः ॥१०॥

**अर्थ**—कुबेर वैश्रवण (विश्रवा मुनि का पुत्र) राजा था और (यक्ष तथा) राक्षस उसकी प्रजा थे । वे पापी (अपराधी-हिंसक) दस्यु (डकैत) इकट्ठा होते थे तब कुबेर उनको देवजनविद्यावेद सुनाता था ।

**असितः धान्वः—**

असितो धान्वो राजेत्याह । तस्यासुरा विशस्त इम आसत इति । कुसीदिन उपसमेता भवन्ति । तानुपदिशति मायावेदः ॥११॥

**अर्थ**—आसितधान्व राजा था, उसकी प्रजा असुर (पणि) गण थे । वे व्यापारी—ब्याजखोर जब इकट्ठा होते हैं तो असित धान्व उनको मायावेद का उपदेश देता है ।

**मत्स्यः सांमदः—**

मत्स्यः सांमदो राज्येत्याह । तस्योदकचर विशस्त इम आसत इति । मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति तानुपदिशति इतिहासो वेदः ॥१२॥

**अर्थ**—मत्स्य सांमद राजा था । जलचर या जलोपजीवी (मछुआरे आदि) उसकी प्रजा थीं । मत्स्यजन और मछुआरे इकट्ठे होते हैं, उनको वह (मत्स्य पुराण इतिहासवेद की शिक्षा देता था ।

**तार्क्ष्यः वैपश्यतः—**

तार्क्ष्यो वैपश्यतो राजेत्याह। तस्य वयांसि विशस्तानीमान्यसात इति। वयांसि च वायोविद्यकाश्चोपसमेता भवन्ति तानुपदिशति पुराणं वेदः ॥१३॥

**अर्थ**—तार्क्ष्य वैपश्यत राजा था। पक्षी (और पक्षिसदृश उड़नेवाली मानव प्रजा) उसकी प्रजा थे। पक्षिगण एवं पक्षिविद्याविशारद (उड्डयन विद्याविद्) एकत्रित होते थे तब वह उनको पुराण (मत्स्यपुराण) सुनाता था।

**इन्द्रो देवगणश्च—**

धर्म इन्द्रो राजेत्याह। तस्य देवा विशस्त इम आसत इति। श्रोत्रियाऽप्रतिग्राहका उपसमेता भवन्ति। तानुपदिशति सामानि-वेदः ॥१४॥

**अर्थ**—धर्मराज इन्द्र राजा था। उसकी प्रजा थी देवगण। वे श्रोत्रिय (वेदपाठी) एवं दान नहीं लेनेवाले एकत्रित होकर सामवेद सुनते थे।

**पारिप्लवोपाख्यानम्—**

पारिप्लवमाख्यानमाचष्टे। तस्मात्पारिप्लवं षट्त्रिंशतं दशाहा-न्याचष्टे ॥१५॥

**अर्थ**—(अश्वमेध यज्ञ में) पारिप्लवोपाख्यान सुनाया जाता है। (पूरे यज्ञ में) दश वार—छत्तीस दिन (अर्थात् ३६० दिन) यह आख्यान सुनाया जाता है।

## अश्वमेधकर्त्तारो राजानः (श० ब्रा० १३।५।४।१-१३। ७।१।१५)

**जनमेजयः पारिक्षितः—**

एतेन हेन्द्रोतो देवापः शौनकः। जनमेजयं पारिक्षितं याजयांचकार। तदेतद् गाथयाऽभितम्—

आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम्।
आबध्नादश्वं सारंगं देवेभ्यो जनमेजयः॥

एते एव पूर्वेऽहनी। ज्योतिरतिरात्रस्तेन भीमसेनमेते एव पूर्वेऽहनी गौरतिरात्रस्तेनोग्रसेनमेते एव पूर्वेऽहनी आयुरतिरात्रस्तेन श्रुतसेन-मिति एते पारिक्षितीयास्तेदतद् गाथयाऽभिगीतम्—

पारिक्षिता यजमाना अश्वमेधैः परोऽवरम्।
अजहुः कर्म पापकं पुण्या पुण्येन कर्म करोति॥ (१३।५।४।१-३)

**अर्थ**—इसके (अश्वमेध) द्वारा देवापशौनक पुरोहित ने जनमेजय पारिक्षित का यज्ञ कराया था। यह (यश) इस गाथा के द्वारा गाया जाता है—

"जनमेजय ने आसन्दीवती (नगर) में धान्याद, रुकमी, हरितमाली, सारंग अश्व को देवों के लिए बांधा।"

ज्योतिरात्र इसके पूर्वाह है, जिनमें भीमसेन को, गौरतिरात्र पूर्वाह में उग्रसेन को और आयुरतिरात्र पूर्वाह में श्रुतसेन को यज्ञ कराया गया। इन पारिक्षितों (चार परिक्षितपुत्रों) की गाथा इस गीत के द्वारा गाई जाती है—

"पारिक्षित यजमानों ने अश्वमेध यज्ञों के द्वारा अपने पूर्वावर पापकर्मों से मुक्ति पाई और उन पुण्यात्माओं ने पुण्यकर्म किया।"

**कौसल्यः परः(हैरण्यनाभः)—**

पर आह्लार ईजे कौसल्यो राजा। तदेतद् गाथयाऽभिहितम्।
अह्लारस्य परः पुत्रोऽश्वं मेध्यमबन्धयत्।
हैरण्यनाभः कौसल्यो दिशः पूर्ण अमंहतेति ॥४॥

अर्थ—कोसलदेश के राजा (हिरण्यनाभ पुत्र) कौसल्य पर ने (अश्वमेध) किया। इस गाथा द्वारा (उसका यश) गाया जाता है—

"अह्णार (अट्णार-हिरण्यनाभ) के पुत्र पर ने मेध्य अश्व को बांधा और सभी दिशाओं को जीत लिया।"

**पुरुकुत्स ऐक्ष्वाकः—**

विश्वाजिदतिरात्रस्तेन ह पुरुकुत्सो दौर्ग्रहेणेजे ऐक्ष्वको राजा।
तस्मादेतदृषिणाऽभ्यनूक्तम्—
अस्माकमत्र पितरस्त आसन्त्सप्त ऋषयो दौग्रहेण बध्यमाने॥
(ऋग्वेद ४।४२।८)

अर्थ—पुरुकुत्स ऐक्ष्वाक विश्वजित अतिरात्र द्वारा दौर्ग्रह ( ) से यज्ञ किया। अतः ऋग्वेद में ऋषि ने कहा है—"हमारे पितर (पूर्वज) सात ऋषि थे, जिन्होंने दौग्रह से आबद्ध होकर यज्ञ किया।"

**मरुत आवीक्षितः—**

महाव्रतमतिरात्रस्तेन ह मरुत आवीक्षित ईज आयोगव राजा।
तस्य ह ततो-मरुतः परिवेष्टारोऽग्निः क्षत्ता विश्वेदेवाः सभासदो बभूवुस्तदेतद् गाथयाऽभिगीतम्—
मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे।
आविक्षितस्याग्निः क्षत्ता विश्वेदेवाः सभासदः ॥६॥

अर्थ—महाव्रत अतिरात्र के दिन (अश्वमेध यज्ञ में) मरुत आवीक्षित (आवीक्षित्पुत्र या अयोगुपुत्र) ने यज्ञ किया। उसके यज्ञ में मरुद्गण भोजन परोसने वाले थे और अग्नि (आंगिरस संवर्त ऋषि) क्षत्ता (क्षत्रधारक) थे तथा

विश्वेदेव सभासद थे। (यही तथ्य) निम्न (पौराणिक) गाथा द्वारा गाया गया है— "मरुद्गण परिवेष्टा थे, जो राजा मरुत के घर रहते थे। अग्नि (आंगिरस) ऋषि क्षत्ता था और विश्वेदेव सभासद्गण थे।"

**क्रैव्यः पाञ्चालः—**

एतेन क्रैव्य ईजे पाञ्चालो राजा। "क्रिवय इति ह वै पुरा पञ्चालानाचक्षते", तदेतद् गाथयाऽभिगीतम्—

अश्वं मेध्यमालभते क्रिवीणामतिपूरुषः।
पञ्चालः परिवक्रायां सहस्रशतदक्षिणम् ॥७॥

अथ द्वितीयया—

सहस्रमासन्नयुता शता च पञ्चविंशतिः।
दिक्तो दिक्तः पञ्चालानां ब्राह्मणा गा विभेजिरे ॥

अर्थ—अश्वमेध द्वारा पञ्चालराज क्रैव्य ने यज्ञ किया। प्राचीनकाल में पञ्चालों का ही नाम 'क्रिवि' था। यज्ञ यश को निम्न गाथा से गाया जाता था—

"क्रिवियों (पंचालों) के महान् राजा ने परिव्रका (नगरी) में लाखों गायों की दक्षिणा वाला अश्वमेध यज्ञ किया।"

"दिशाओं दिशाओं में (असंख्य) ब्राह्मणों ने पञ्चाल राजा की लाखों सहस्रों एवं पच्चीस सौ गायें प्राप्त कीं।"

**ध्वसा द्वैतवनः—**

हैतेन ध्वसा द्वैतवन ईजे मात्स्यो राजा यत्रैतद् द्वैतवनं सरस्तदेतद् गाथयाऽभिगीतम्—

चतुर्दश द्वैतवनो राजा संग्रामजिद् हयान्।
इन्द्राय वृत्रघ्नेऽबध्नात्तस्माद् द्वैतवनं सरः ॥

अर्थ—ध्वसा द्वैतवन मात्स्य राजा ने द्वैतवन में अश्वमेध यज्ञ किया। जहां पर द्वैतवन है, वहीं पर द्वैतवन तालाब (झील) है। गाथा है—

"विजयी राजा ध्वसा द्वैतवन ने चौदह अश्वमेध यज्ञ किये अर्थात् जहां द्वैतवन सरोवर है वहां उसने वृत्रघ्न इन्द्र के लिये घोड़े बांधे।"

**भरतः दौष्यन्तिः—**

तेन हैतेन भरतो दौष्यन्तिरीजे। तेनेष्ट्वेमां व्यष्टिं व्यानशे यया भरतानां तदेतद् गाथयाऽभिगीतम्—

अष्टासप्ततिं भरतो दौःषन्तिर्यमुनामनु।
गंङ्गायां वृत्रघ्नेऽबध्नात् पंचपंचाशतं हयान्।

त्रयस्त्रिंशं शतं राजाऽश्वान् बद्धवाय मेध्यान् ।
सौद्युम्निरत्यष्टादन्यानभयान् मायावत्तरः ।
शकुन्तला नाडपित्यप्सरा भरतं दधे ।
परः सहस्रानिन्द्रायाश्वान्मेध्यान्यं आहरद्विजित्य पृथिवीं सर्वाम् ।
महद्यशो भरतस्य न पूर्वे नापरे जनाः ।
दिवं मर्त्यं इव बाहुभ्यां नोदापुः पञ्च मानवाः ।। (११-१४)

अर्थ—अश्वमेध द्वारा भरत दौष्यन्ति ने यज्ञ किया। जिससे उसका यश समस्त सृष्टि (संसार) में व्याप्त होगया। इन गाथाओं में उसका यश गाया गया है—

"भरत दौष्यन्ति ने अठ्हत्तर अश्वमेध यज्ञ यमुना के तट पर और पचपन अश्वमेध यज्ञ गंगातट पर किये। एक सौ तैंतीस अश्वमेध यज्ञ करके सौद्युम्नि (ऐल) राजा भरत ने अन्य सभी श्रेष्ठ राजाओं के यश का अतिक्रमण किया।"

'शकुन्तला अप्सरा ने नाडपिती स्थान में भरत को उत्पन्न किया था। समस्त पृथिवी को जीतकर सहस्रों मेध्य अश्व इन्द्र के लिये बांधे।"

"भरत के महान् यश को, उससे पूर्व के और पश्चात् के प्राप्त नहीं कर सके, पंचमानव यानि समस्त पृथिवीवासियों में— उसका यश महत्तम था। जिस प्रकार हाथों से, मनुष्य आकाश को नहीं पकड़ सकता, उसी प्रकार उसका यश नहीं पकड़ा जा सकता।"

**ऋषभः याज्ञतुरः—**

ऋषभो याज्ञतुर ईजे शिक्नानां राजा। तदेतद् गाथयाऽभिगीतम्—
याज्ञतुरे यजमाने ब्राह्मणा ऋषभे जनाः ।
अश्वमेधे धनं लब्ध्वा विभजन्ते स्म दक्षिणा ।।१५।।

**अर्थ**—"यज्ञ करने वाले राजा ऋषभ याज्ञतुर से विपुल धन प्राप्त करके ब्राह्मणजन दक्षिणाओं को परस्पर बांटते थे।"

**शोणः सात्रासाहः—**

शोणः सात्रासाह ईजे पञ्चालो राजा तेदतद् गाथयाऽभिगीतम्—
सात्रासाहे यजमानेऽश्वमेधेन तौर्वशः ।
उदीरते त्रयस्त्रिंशाः षट् सहस्राणि वर्मिणाम् ।
षट् षट् षड्ढा सहस्राणि यज्ञे कोकपितुस्तव ।
उदीरते त्रयस्त्रिंशाः षट् सहस्राणि वर्मिणामिति ।
सात्रासाहे यजमाने पञ्चाले राज्ञि सुस्रजि ।
अमाद्यदिन्द्रः सोमेनातृप्यन् ब्राह्मणा धनैः ।। (१६-१८) ।।

अर्थ—पंचाल शोण सात्रासाह (सत्रसह का पुत्र) ने अश्वमेध यज्ञ किया। उसका यश इन गाथाओं द्वारा गाया गया है—

"सात्रासाह यजमान के अश्वमेध में तैंतीस बार छः हजार (१९८०००) कवचयुक्त तौर्वशा (तुर्वसु के वंशज) क्षत्रियगण (युद्धार्थ) निकलते थे। हे कोक के पिता! आपके यज्ञ में छः-छः हजार करके तैंतीस बार (६००० × ३३ = १९८००० एक लाख अट्ठानवें-सहस्र) क्षत्रिय कवचयुक्त होकर युद्ध के लिये निकले।"

"पांचालराज सात्रासाह, जो सुन्दर (स्वर्ण) माला पहिनते थे, के यज्ञ में सोम से इन्द्र और धन से ब्राह्मण पूर्ण तृप्त होगये।

**शतानीकः सात्राजितः—**

सात्राजित ईजे काश्यस्याश्वमादाय। ततो हैतदर्वाक् काशयोऽग्नी-ऽत्यादधत श्रात्तसोमपीथाः स्म इति वदन्तः। तदेतद्गाथयाऽभिगीतम्—

शतानीकः समन्तासु मेध्यं सात्राजितो हयम्।
आदत्त यज्ञं काशीनां भरतः सत्वतामिति ॥२२॥
श्वेतं समन्तासु वशं चरन्तं शतानीको धृतराष्ट्रस्य मेध्यम्।
आदाय सह्वा दशमास्यमश्वं शतानीको गोविनतेन हेजे।
महद्यशः भरतानां न पूर्वे नापरे जनाः।
दिवं मर्त्य इव पक्षाभ्यां नोदापुः सप्त मानवाः ॥२३॥

अर्थ—काशिराज के अश्वमेध के घोड़े को पकड़कर सात्राजित शतानीक (भारत) राजा ने यज्ञ किया। इससे पूर्व काशिक्षत्रिय अग्नियों को रखते हुए सोमपीथी बने हुए थे।

(शतानीक सात्राजित का) यश निम्न गाथाओं द्वारा गाया जाता है—"जिस प्रकार भरत (और शत्रुघ्न-दाशरथियों) ने सात्वत (यादवों) का यज्ञाश्व हरण कर लिया, उसी प्रकार शतानीक सात्राजित (भरतवंशी) ने काशिराज धृतराष्ट्र का श्वेत घोड़ा छीनकर यज्ञ किया।" बलवान् शतानीक ने दशमासपर्यन्त गोविनत यज्ञ किया। भरतों के महान् यश को सप्त मानव (क्षत्रियगण) उसी प्रकार प्राप्त नहीं कर सकते, जिस प्रकार मर्त्य (पक्षी) पंखों द्वारा आकाश को नहीं छू सकते।

**भृगुर्वारुणिः—**

भृगुर्ह वारुणिः। वरुणं पितरं विद्ययाऽतिमेने। तद्ध वरुणो विदांचकराति वै मा विद्यया मन्यते इति। (११।६।१।१)

अर्थ—भृगु, वरुण का पुत्र था। वह भृगु अपने को विद्या में अत्यधिक ज्ञानी समझकर घमण्ड करने लगा। वरुण को यह बात पता चल गई कि मेरा पुत्र भृगु विद्या का घमण्ड करता है।

**पुरुषं नारायणं प्रजापतिरुवाच** (१२।२।२।१३)—प्रजापति ने नारायण पुरुष से कहा।

## शतपथे चतुर्दशकाण्डे बृहदारण्यके ऐतिह्यसन्दर्भाः

**कुरुक्षेत्रम्—देवयजनम्—**

देवा ह वै सत्रं निषेदुः। अग्निरिन्द्रः सोमो मखो विष्णुर्विश्वेदेवा अन्यत्रैवाश्विभ्याम्।···तेषां कुरुक्षेत्रं देवयजनमास। तस्मादाहुः कुरुक्षेत्र देवानां देवयजनमिति। (१४।१।१।१-२)

अर्थ—देवगण सत्र करने बैठे। अग्नि (बृहस्पति आंगिरस), इन्द्र, सोम, मख, विष्णु और विश्वेदेव, केवल अश्विनों को छोड़कर।

**कुरुक्षेत्र**—देवयजन-यज्ञस्थल था। इसलिये कहा जाता है कुरुक्षेत्र तो देवों का भी देवयजन अर्थात् यज्ञस्थल है।

**सप्तऋषयः—**

इमावेव गोतमभरद्वाजौ। इमावेव विश्वामित्रजमदग्नी। इमावेव वसिष्ठकाश्यपौ। नामैतद्यदत्रिरिति।

**अर्थ**—(अन्तिम सप्तर्षि थे)—"गोतम, भरद्वाज, विश्वामित्र, जमदग्नि, वसिष्ठ (वासिष्ठ=वसुमान्) कश्यप (काश्यप=) और अत्रि (आत्रेय श्यावाश्व)।

**दधीचा अथर्वणा ऋषिणा अश्विभ्याम् अश्वशिरसा मधुविद्याप्रदानम्—**

एतं शुक्रमेतं यज्ञं विदांचकार। यथा यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवति॥

स हेन्द्रेणोक्त आस। एतं चेदन्यस्मा अनुब्रूयास्तत एव ते शिर-च्छिन्द्यामिति। तदु हाश्विनोरनुश्रुतमास तौ हैत्योचतुः। उप त्वाऽयावेति। किमु नु वक्ष्यमाणावत्येतं शुक्रमेतं यज्ञम्।····स होवाच। इन्द्रेण वा उक्तऽस्मेतं चेदन्यस्माऽनुब्रूस्तत एव ते शिर-च्छिन्द्यामिति। तस्माद्वै बिभेमि यद्वै मे स शिरो न छिन्द्यान्न वामुपनेष्य इति। तौ होचतुः। आवां त्वा तस्मात्त्रास्यावहे इति। कथं मा त्रास्येथे इति। यथा नौ उपनेष्यसेऽथ ते शिरश्छित्वाऽन्यत्रोपनिधास्यावोऽथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्यावस्तेन नावनुवक्ष्यसि। स यदा नावनुवक्ष्यस्यथ ते तदिन्द्रः शिरश्छेत्स्य-त्यथ ते स्वं शिर आहृत्य तत्ते प्रतिधास्याव इति। तथेति। तौ

होपनिन्ये । तौ यदोपनिन्येऽथास्य । शिरश्छित्वाऽन्यत्रापनिदधतु-रथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुस्तेन हाभ्यामनूवाच । स यदाभ्यामनूवाचाथास्य तदिन्द्रः शिरश्चिच्छेदाथास्य स्वं शिर आहृत्य तद्धास्य प्रतिदधतुः । (१४।१।३।१८-२४)

तस्मादेतदृषिणाऽभ्यनूक्तम्—

दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा ।
प्रदीपमुवाचेत्ययतं तदुवाचेति ॥२५॥

दध्यङ् ह वा आभ्यामथर्वणो मधु नाम ब्राह्मणमुवाच । तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति···। (१४।१।४। )

अर्थ—यह शुक्र (तेज) है, यह यज्ञ है यह जाना । जिस प्रकार यज्ञ का शिर रखा जाता है, जिस प्रकार यज्ञ पूर्ण होता है ।

इन्द्र ने (मधुविद्या दध्यङ् आथर्वण को पढ़ाकर चेतावनी दी)—"यदि तुमने यह विद्या किसी और को बताई तो मैं तुम्हारा शिर काट दूंगा । यह बात अश्विनीकुमारों ने सुन ली । वे (दधीचि के पास) आकर बोले । हम आपके पास आये हैं । हे ऋषे ! क्या हमसे यह मधुविद्या नहीं कहोगे कि यही तेज है यही यज्ञ है । ऋषि ने कहा—हे अश्विनौ ! इन्द्र ने मुझे यह चेतावनी दे रखी है कि यदि मैं यह विद्या किसी और को बताऊं तो वह मेरा शिर काट देगा । इसी से मैं डरता हूं कि वह मेरा शिर न काट दे । इसलिये मैं आपको नहीं बताऊंगा । अश्विनौ बोले—हम आपकी इन्द्र से रक्षा करेंगे । ऋषि ने पूछा—आप मुझे कैसे बचायेंगे । अश्विनौ ने कहा—हे ऋषे ! जब आप हमको विद्या देंगे, तब (उससे पूर्व) हम आपका शिर काटकर अन्यत्र रख देंगे और घोड़े का शिर आपको लगा देंगे । तब आप अश्वशिर से हमें विद्या देना । और जब इन्द्र उस शिर को काट देगा तब आपका शिर हम लगा देंगे । ऋषि ने कहा ठीक है । ऋषि ने अश्विनौ का उपनयन किया । तदनन्तर अश्विनौ ने दधीचि का शिर काटकर अन्यत्र (छिपाकर) रख दिया और घोड़े का शिर लगा दिया । और उस अश्वशिर से उपदेश दिया । जब ऋषि अश्वशिर से मधुविद्या बता चुके, तब इन्द्र ने उनका शिर काट दिया । तदनन्तर अश्विनौ ने ऋषि का शिर लाकर लगा दिया ।

अतः ऋषि ने कहा है—"दध्यङ् आथर्वण ने अश्वशिर से मधुविद्या अश्विनौ को बताई ।"

दध्यङ् ने अश्विनौ को मधुब्राह्मण का प्रवचन दिया । तब वह उनके प्रिय धाम गया और जो ऐसा करता है वह उनके प्रिय धाम जाता है ।

## मधुब्राह्मणस्याचार्यपरम्परा (श.ब्रा. १४।५।५।२०-२२)

अथ वंशः—

तदिदं वयं शौर्पणाय्याच्छौर्पणाय्यो गौतमाद् गौतमो वात्स्याद् वात्स्यो वात्स्याच्च पाराशर्याच्च पाराशर्यः सांकृत्याच्च भारद्वाजाच्च भारद्वाज औदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो वैजवापाच्च गौतमो वैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रोहिणायनः शौनकाच्चात्रेयाच्च रैभ्याच्च, रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्याययानाच्च कौण्डिन्यायनः कौण्डिन्यात् कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च । (१४।५।५ २०)

अग्निवेश्यः सैतवात् । सैतवः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद् भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च। गौतमो भारद्वाजाद् भारद्वाजो वैजवापयानाद् वैजवापायनः कौशिकायनेः कौशिकायनिः घृतकौशिकाद् घृतकौशिकः पाराशर्या-यणात् पाराशर्यायणः पाराशर्यात् पाराशर्यो जातूकर्ण्याद् जातूकर्ण्यो भारद्वाजाद् भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चा-सुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिभारद्वाजाद् भारद्वाज आत्रेयात् ।।२१।।

आत्रेयो माण्टेः माण्टिर्गौतमाद् गौतमो गौतमाद् गौतमो वात्स्याद् वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात् कैशोर्यः काप्यः कुमारहारितात् कुमारहारीतो गालवाद् गालवो विदर्भीकौण्डिन्याद् विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रव्याद् वत्सनपाद्बाभ्रव्यः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूते-स्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद् विश्वरूपस्त्वाष्ट्रो-ऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङाथर्वणोऽथर्वणोदैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युप्राध्वंसनः प्रध्वसनात्प्रध्वसनः एकर्षे-रेकर्षिविप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात् सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणे ब्रह्म स्वयभु-ब्रह्मणे नमः ।।२२।। (१४।५।५।२०-२२)

अब मधुविद्या का विद्यावंश कहा जाता है—"हमने शौर्पणाय्य से मधुविद्या पढ़ी ।"

(शौर्पणाय्य से पूर्व का विद्या वंश इस प्रकार है)—

| क्र०सं० | शिष्य | पूर्वाचार्य |
|---|---|---|
| १ | शौर्पणाय्य | गौतम से |
| २ | गौतम | वात्स्य से |
| ३ | वात्स्य | पाराशर्य से |
| ४ | पाराशर्य | सांकृत्य और भारद्वाज से |
| ५ | भारद्वाज | औदनवाहि और शाण्डिल्य से |
| ६ | शाण्डिल्य | वैजवाप से |
| ७ | गौतम | वैजवापायन और वैष्टपुरेय से |
| ८ | वैष्टपुरेय | शाण्डिल्य और रौहिणायन से |
| ९ | रौहिणायन | शौनक, आत्रेय और रैभ्य से |
| १० | रैभ्य | पौतिमाष्यायण और कौण्डिन्यायन से |
| ११ | कौण्डिन्यायन | कौण्डिन्य से |
| १२ | कौण्डिन्य | कौण्डिन्यू से |
| १३ | कौण्डिन्य | अग्निवेश्य से |
| १४ | अग्निवेश्य | सैतव से |
| १५ | सैतव | पाराशर्य से |
| १६ | पाराशर्य | जातूकर्ण्य से |
| १७ | जातूकर्ण्य | भारद्वाज से |
| १८ | भारद्वाज | भारद्वाज आसुरायण और गौतम से |
| १९ | गौतम | भारद्वाज से |
| २० | भारद्वाज | वैजवापायन से |
| २१ | वैजवापायन | कौशिकायनि से |
| २२ | कौशिकायनि | घृतकौशिक से |
| २३ | घृतकौशिक | पाराशर्यायण से |
| २४ | पाराशर्यायण | पाराशर्य (व्यास) से |
| २५ | पाराशर्य (व्यास) | जातूकर्ण्य से |
| २६ | जातूकर्ण्य | भारद्वाज से |
| २७ | भारद्वाज | भारद्वाज, आसुरायण और यास्क से |
| २८ | आसुरायण | त्रैवणि से |
| २९ | त्रैवणि | औपजन्धनि से |

| क्र०सं० | शिष्य | पूर्वाचार्य |
|---|---|---|
| ३० | औपजन्धनि | आसुरि से |
| ३१ | आसुरि | भारद्वाज से |
| ३२ | भारद्वाज | आत्रेय से |
| ३३ | आत्रेय | माण्टि से |
| ३४ | माण्टि | गौतम से |
| ३५ | गौतम | गौतम से |
| ३६ | गौतम | वात्स्य से |
| ३७ | वात्स्य | शाण्डिल्य से |
| ३८ | शाण्डिल्य | कैशोरकाप्य से |
| ३९ | कैशोरकाप्य | कुमारहारीत से |
| ४० | कुमारहारीत | गालव से |
| ४१ | गालव | विदर्भीकौण्डिन्य से |
| ४२ | विदर्भीकौण्डिन्य | वत्सनपाद बाभ्रव्य से |
| ४३ | वत्सनपाद् बाभ्रव्य | पन्था सौभर से |
| ४४ | पन्था सौभर | अयास्य आंगिरस से |
| ४५ | अयास्य आंगिरस | आभूति त्वाष्ट्र से |
| ४६ | आभूति त्वाष्ट्र | विश्वरूप त्वाष्ट्र से |
| ४७ | विश्वरूप त्वाष्ट्र | अश्विनीकुमारों से |
| ४८ | अश्विनीकुमारद्वयी | दध्यङ् आथर्वण से |
| ४९ | दध्यङ् आथर्वण | अथर्वाद्दैव (देववरुणपुत्र) से |
| ५० | अथर्वाद्दैव | मृत्यु प्राध्वंसन से |
| ५१ | मृत्यु प्राध्वंसन | प्रध्वंसन से |
| ५२ | प्रध्वंसन | एकर्षि से |
| ५३ | एकर्षि | विप्रचित्ति (दानव) से |
| ५४ | विप्रचित्ति (दानव) | व्यष्टि से |
| ५५ | व्यष्टि | सनारु से |
| ५६ | सनारु | सनातन (ऋषि) से |
| ५७ | सनातन | सनक से |
| ५८ | सनक | परमेष्ठी (कश्यप) से |
| ५९ | परमेष्ठी (कश्यप) | स्वयम्भु ब्रह्मा (दक्ष प्राचेतस) से |

# बृहदारण्यके मधुविद्याया विद्यावंशः

**वंशः–** (पाठान्तरम्)

अथ वंशः । पौतिमाष्यो गौपवनाद् गौपवनः पौतिमाष्यात् पौतिमाष्यो गौपवनाद् गौपवनः कौशिकात्कौशिकः कौण्डिन्यात् कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादनभिम्लात आनभिम्लातादानभिम्लातो गौतमाद् गौतमः सैतवप्राचीनयोग्याभ्यां सैतवप्राचीनयोग्यौ पाराशर्यात्पाराशर्यो भारद्वाजाद् भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद् भारद्वाजः पाराशर्यात्पाराशर्यो बैजवापयनाद् बैजवापायनः कौशिकायनेः कौशिकायनिः घृतकौशिकाद् घृतकौशिकः पाराशर्यायणात् पाराशर्यायणः पाराशर्यात् जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद् भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद् गौतमो गौतमाद् गौतमो वात्स्याद् वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात् कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद् गालवो विदर्भी कौण्डिन्याद् विदर्भी कौण्डिन्यो वत्सनपातो बाभ्रवाद् वत्सनपाद् बाभ्रवः पन्थः सौभरात् पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आंगिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपस्त्वाष्ट्राद् विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनात्मृत्युः प्राध्वंसनः प्रध्वंसनात् प्रध्वंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ।। (बृ० उ० २।३)

**अर्थ**—(पाठान्तर) —मधुविद्या का वंश । (पौतिमाष्य अन्तिम आचार्य था उससे पूर्व की गुरुशिष्यपरम्परा इस प्रकार थी) —

| क्र०सं० | शिष्य | पूर्वाचार्य |
|---|---|---|
| १ | पौतिमाष्य | गौपवन से |
| २ | गौपवन | पौतिमाष्य (अन्य) से |
| ३ | गौपवन | कौशिक से |

| क्र०सं० | शिष्य | पूर्वाचार्य |
|---|---|---|
| ४ | कौशिक | कौण्डिन्य से |
| ५ | कौण्डिन्य | शाण्डिल्य से |
| ६ | शाण्डिल्य | कौशिक और गौतम से |
| ७ | गौतम | आग्निवेश्य से |
| ८ | आग्निवेश्य | शाण्डिल्य और अनभिम्लात से |
| ९ | अनभिम्लात | अनभिम्लात से |
| १० | अनभिम्लात | गौतम से |
| ११ | गौतम | सैतव और प्राचीनयोग्य से |
| १२ | सैतव और प्राचीनयोग्य | पाराशर्य से |
| १३ | पाराशर्य | भारद्वाज से |
| १४ | भारद्वाज | भारद्वाज और गौतम से |
| १५ | गौतम | भारद्वाज से |
| १६ | भारद्वाज | पाराशर्य से |
| १७ | पाराशर्य | वैजवापायन से |
| १८ | वैजवापायन | कौशिकायनि से |
| १९ | कौशिकायनि | घृतकौशिक से |
| २० | घृतकौशिक | पाराशर्यायण से |
| २१ | पाराशर्यायण | पाराशर्य से |
| २२ | पाराशर्य | जातूकर्ण्य से |
| २३ | जातूकर्ण्य | आसुरायण और यास्क से |
| २४ | आसुरायण | त्रैवणि से |
| २५ | त्रैवणि | औपजन्धनि से |
| २६ | औपजन्धनि | आसुरि से |
| २७ | आसुरि | भारद्वाज से |
| २८ | भारद्वाज | आत्रेय से |
| २९ | आत्रेय | माण्टि से |
| ३० | माण्टि | गौतम से |
| ३१ | गौतम | गौतम (अन्य) से |
| ३२ | गौतम | वात्स्य से |
| ३३ | वात्स्य | शाण्डिल्य और कैशोर्य काप्य से |

| क्र०सं० | शिष्य | पूर्वाचार्य |
|---|---|---|
| ३४ | कैशोर्य काप्य | कुमारहारित से |
| ३५ | कुमारहारित | गालव से |
| ३६ | गालव | विदर्भीकौण्डिन्य से |
| ३७ | विदर्भीकौण्डिन्य | वत्सनपाद बाभ्रव से |
| ३८ | वत्सनपाद बाभ्रव | पन्था सौभर से |
| ३९ | पन्था सौभर | अयास्य आंगिरस से |
| ४० | अयास्य आंगिरस | आभूति त्वाष्ट्र से |
| ४१ | आभूति त्वाष्ट्र | विश्वरूप त्वाष्ट्र से |
| ४२ | विश्वरूप त्वाष्ट्र | अश्विनीकुमारों से |
| ४३ | अश्विनीकुमार | दध्यङ् आथर्वण से |
| ४४ | दध्यङ् आथर्वण | दैव अथर्वा से |
| ४५ | दैव अथर्वा | मृत्यु प्राध्वंसन से |
| ४६ | मृत्यु प्राध्वंसन | प्रध्वंसन से |
| ४७ | प्रध्वंसन | एकर्षि से |
| ४८ | एकर्षि | विप्रचित्ति से |
| ४९ | विप्रचित्ति | व्यष्टि से |
| ५० | व्यष्टि | सनारु से |
| ५१ | सनारु | सनातन से |
| ५२ | सनातन | सनग से |
| ५३ | सनग | परमेष्ठी से |
| ५४ | परमेष्ठी | ब्रह्मा से |

## वाजसनेययाज्ञवल्क्यजनकयोः समकालिका आचार्याः (श०ब्रा०)

जनको वैदेहः (१४।६।१।१) जनक वैदेह
याज्ञवल्क्यः (१४।६।१।२) याज्ञवल्क्य (वाजसनेय)
अश्वलः (१४।६।१।२) अश्वल
जरत्कारव आर्तभागः (१४।६।२।१) जरत्कारव आर्तभाग

**भुज्युर्लाह्यायनिः—**

अथ हैवं भुज्युर्लाह्यायनि पप्रच्छ। याज्ञवल्क्येति होवाच। मद्रेषु चरकाः पर्यव्रजाम। ते पतञ्जलस्य काप्यस्य गृहानैम। तस्यासीद्

दुहिता गन्धर्वग्रहीता । तमपृच्छाम । कोऽसीति । सोऽब्रवीत्सुधन्वाऽऽङ्गिरस इति । तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन् क्व पारीक्षिता अभवन्निति । तत्त्वा पृच्छामि याज्ञवल्क्य—क्व पारिक्षिता अभवन्निति । (१४।६।३।१)

अर्थ—भुज्यु लाह्यायनि ने पूछा—'हे याज्ञवल्क्य ! हम मद्र देश में चरकों के रूप में घूम रहे थे, तब हम पतञ्जल काप्य के घर गये । उसकी पुत्री को किसी गन्धर्व (भूत) ने ग्रस्त कर लिया था । हमने पूछा—"तुम कौन हो ?" वह बोला—"मैं अंगिरा का पुत्र सुधन्वा हूं । जब हमने उससे लोक (ब्रह्माण्ड) का अन्त पूछा तथा हमने कहा—'पारिक्षित कहां रहे ?' पारिक्षित कहां रहे ? अतः हम आपसे पूछते हैं कि 'पारिक्षित कहां गये ?'

कहोडः कौषीतकेयः (१४।६।४।१) कहोड कौषीतकेय ।
उषस्तश्चाक्रायणः (१४।६।५।१) उषस्त चाक्रायण ।
गार्गी वचन्क्वी (१४।६।६।१) गार्गी वचन्क्वी ।

**उद्दालक आरुणिः—**

अथ हैनमुद्दालक आरुणिः पपृच्छ । याज्ञवल्क्येति होवाच । मद्रेष्ववसाम । पतञ्जलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद् भार्या गन्धर्वगृहीता । तमपृच्छाम कोऽसीति । सोऽब्रवीत्कबन्ध आथर्वण इति । (१४।६।७।१) ।

**अर्थ**—उद्दालक आरुणि ने पूछा—'हे याज्ञवल्क्य ! हम मद्रदेश में थे और पतञ्जल काप्य के घर में हम यज्ञविद्या का अध्ययन कर रहे थे । काप्य की पत्नी को गन्धर्व ने पकड़ रखा था । हमने उससे पूछा—'कौन हो ?' उसने कहा—'मैं अथर्वा का पुत्र कबन्ध हूं ।'

विदग्धः शाकल्यः (१४।६।६।१) विदग्ध शाकल्य
उदङ्क शौल्वायनः (१४।६।१०।२) उदङ्क शौल्वायन
जित्वा शैलिनः (१४।६।१०।५) जित्वा शैलिन
बर्कु वर्ष्णिः (१४।६।१०।८) बर्कु वर्ष्णि
गर्दभीविपीतो भारद्वाजः (१४।६।१०।११) गर्दभीविपीत भारद्वाज
सत्यकामो जाबालः (१४।६।१०।१४) सत्यकाम जाबाल
श्वेतकेतुरारुणेयः (१४।६।१।१) अरुणपुत्र श्वेतकेतु
जैवलः प्रवाहणिः (१४।६।१।१) प्रवाहणपुत्र जैवल

**मन्थकर्मपरम्परा—**

उद्दालक आरुणिः वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वो-

वाच ··वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिने । मधुकः पैङ्ग्यश्चूडाय भागवित्तयेऽन्तेवासिने । चूडो भागवित्तिः जानकय आयस्थूणायान्तेवासिने ।·· जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिने । (१४।६।३।१५-२०)

**अर्थ**—मन्थकर्म को उद्दालक ने वाजसनेय याज्ञवल्क्य शिष्य को पढ़ाया। वाजसनेय याज्ञवल्क्य ने शिष्य मधुक पैङ्ग्य को, मधुक पैङ्ग्य ने भागवित्ति चूड़ को, चूडभागवित्ति ने जानकिआयस्थूण को और उसने अपने शिष्य सत्यकाम जाबाल को पढ़ाया।

## याज्ञवल्कीयकाण्डस्य विद्यावंश (४।६।३)

**अथ वंशः—**

पौतिमाष्यो गौपवनाद् गौपवनः पौतिमाष्यात् पौतिमाष्यो गौपवनाद् गौपवनः कौशिकात् कौशिकः कौण्डिन्यात् कौण्डिन्यः शाण्डिल्याच्छाण्डिल्य कौशिकाच्च गौतमाच्च गौतम आग्निवेश्यादाग्निवेश्यो गार्ग्याद् गार्ग्यो गार्ग्याद् गार्ग्यो गौतमाद् गौतमः सैतवात् सैतवः पाराशर्यायणात् पाराशर्यायणो गार्ग्यायणाद् गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यंदिनायनान्माध्यंदिनायनः सौकरायणात् सौकरायणः काषायणात् काषायणः सायकायनात् सायकायनः कौशिकायनेः कौशिकायनिः घृतकौशिकाद् घृतकौशिकः पाराशर्यायणात् पाराशर्यायणः पाराशर्यात् पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणीरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भाद्वाजाद् भारद्वाज आत्रेयादात्रेयो माण्टेमाण्टिर्गौतमाद् गौतमो गौतमाद् गौतमो वात्स्याद् वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात् काप्यात् कैशोर्यः काप्यः कुमारहारितात् कुमारहारितो गालवाद् गालवो विदर्भीकौण्डिन्याद् विदर्भीकौण्डिन्यो वत्सनपातबाभ्रवाद् वत्सनपादबाभ्रवः पथः सौभरात् पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य—आंगिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात् त्वाष्ट्राद् विश्वरूपस्त्वाष्ट्रोऽश्विभ्याश्विनौ दधीच आथर्वणाद् दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्यो प्राध्वंनान्मृत्युः प्राध्वंसनः प्रध्वंसनात् प्रध्वंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः

सनारु: सनातनात् सनातनः सनगात् सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ।

अर्थ—(पौतिमाष्य अन्तिम आचार्य था उससे पूर्व की गुरुशिष्यपरम्परा इस प्रकार थी)—

| क्र०सं० | शिष्य | पूर्वाचार्य |
|---|---|---|
| १ | पौतिमाष्य ने | गौपवन से |
| २ | गौपवन (अन्य) ने | पौतिमाष्य (अन्य) से |
| ३ | पौतिमाष्य (अन्य) ने | गौपवन (अन्य) से |
| ४ | गौपवन ने | कौशिक से |
| ५ | कौशिक ने | कौण्डिन्य से |
| ६ | कौण्डिन्य ने | शाण्डिल्य से |
| ७ | शाण्डिल्य ने | कौशिक और गौतम से |
| ८ | गौतम ने | आग्निवेश्य से |
| ९ | आग्निवेश्य ने | गार्ग्य से |
| १० | गार्ग्य ने | गौतम से |
| ११ | गौतम ने | सैतव से |
| १२ | सैतव ने | पाराशर्यायण से |
| १३ | पाराशर्यायण ने | गार्ग्यायण से |
| १४ | गार्ग्यायण ने | उद्दालकायन से |
| १५ | उद्दालकायन ने | जाबालायन से |
| १६ | जाबालायन ने | माध्यंदिनायन से |
| १७ | माध्यंदिनायन ने | सौकरायण से |
| १८ | सौकरायण ने | काषायण से |
| १९ | काषायण ने | सायकायन से |
| २० | सायकायन ने | कौशिकायनि से |
| २१ | कौशिकायनि ने | घृतकौशिक से |
| २२ | घृतकौशिक ने | पाराशर्यायण से |
| २३ | पाराशर्यायण ने | पाराशर्य से |
| २४ | पाराशर्य (व्यास) ने | जातूकर्ण्य से |
| २५ | जातूकर्ण्य ने | आसुरायण और यास्क से |
| २६ | आसुरायण ने | त्रैवणि से |

| क्र०सं० | शिष्य | पूर्वाचार्य |
|---|---|---|
| २७ | त्रैवणि ने | औपजन्धनि से |
| २८ | औपजन्धनि ने | आसुरि से |
| २९ | आसुरि ने | भारद्वाज से |
| ३० | भारद्वाज ने | आत्रेय से |
| ३१ | आत्रेय ने | माण्टि से |
| ३२ | माण्टि ने | गौतम से |
| ३३ | गौतम ने | गौतम (अन्य से) |
| ३४ | गौतम ने | वात्स्य से |
| ३५ | वात्स्य ने | शाण्डिल्य से |
| ३६ | शाण्डिल्य ने | कैशोर्य काप्य से |
| ३७ | कैशोर्यकाप्य ने | कुमारहारीत से |
| ३८ | कुमारहारीत ने | गालव से |
| ३९ | गालव ने | विदर्भीकौण्डिन्य से |
| ४० | विदर्भीकौण्डिन्य ने | वत्सनपाद्बाभ्रव से |
| ४१ | वत्सनपाद्बाभ्रव ने | पन्थासौभर से |
| ४२ | पन्थासौभर ने | अयास्य आंगिरस से |
| ४३ | अयास्य आंगिरस ने | आभूति त्वाष्ट्र से |
| ४४ | आभूति त्वाष्ट्र ने | विश्वरूप त्वाष्ट्र से |
| ४५ | विश्वरूप त्वाष्ट्र ने | अश्विनीकुमारों से |
| ४६ | अश्विनीकुमारद्वयी ने | दध्यङ् आथर्वण से |
| ४७ | दध्यङ् आथर्वण ने | दैव अथर्वा से |
| ४८ | दैव अथर्वा ने | मृत्यु प्राध्वंसन से |
| ४९ | मृत्यु प्राध्वंसन ने | प्रध्वंसन से |
| ५० | प्रध्वंसन ने | एकर्षि से |
| ५१ | एकर्षि ने | विप्रचित्ति से |
| ५२ | विप्रचित्ति ने | व्यष्टि से |
| ५३ | व्यष्टि ने | सनारु से |
| ५४ | सनारु ने | सनातन से |
| ५५ | सनातन ने | सनग से |
| ५६ | सनग ने | परमेष्ठी से |
| ५७ | परमेष्ठी (कश्यप) ने | स्वयम्भू ब्रह्मा (दक्ष प्राचेतस) से |

# आदित्य (विवस्वत्) शिष्यपरम्परा
## (शतपथब्राह्मणस्य विद्यावंशः)

**अथ वंशः—**

तदिदं वयं भारद्वाजीपुत्राद् भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद् वात्सीमाण्डवीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रो गार्गीपुत्राद् गार्गीपुत्रः पाराशरीकौण्डिनीपुत्रात् पाराशरीकौण्डिनीपुत्रो गार्गीपुत्राद् गर्गीपुत्रो वाडेयीपुत्राद् बाडेयीपुत्रो मौषिकीपुत्रान्मौषिकीपुत्रो हारिकर्णीपुत्राद् हारिकर्णीपुत्रो भारद्वाजीपुत्राद् भारद्वाजीपुत्रः पैङ्गीपुत्रात् पैङ्गीपुत्रः शौनकीपुत्राच्छौनकीपुत्रः काश्यपीबालाक्यमाठरीपुत्रात् काश्यपीबालक्यमाठरीपुत्रः कौत्सीपुत्रात्कौत्सीपुत्रो बौधीपुत्राद् बौधीपुत्रः शालङ्कायनीपुत्राच्छालङ्कायनीपुत्रो वार्षगणीपुत्राद् वार्षगणीपुत्रो गौतमीपुत्राद् गौतमीपुत्र आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद् गौतमीपुत्रो वात्सीपुत्राद् वात्सीपुत्रो भारद्वाजीपुत्राद् भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रो वार्कारुणीपुत्राद् वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः सांकृतीपुत्रात्सांकृतीपुत्रः आलम्बीपुत्रात् आलम्बीपुत्र आलम्बायनी पुत्रादालम्बायनीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद् राथीतरीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद् वैदभृतीपुत्रो भालुकीपुत्राद् भालुकीपुत्रः प्राचीनयोगीपुत्रात् प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः प्राश्नीपुत्रात् प्राश्नीपुत्र आसुरवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान् बाध्योगोसितावार्षगणादसितो वार्षगणो हरितकश्यपाद्धरितकश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते। (१४।९।४।३०-३३)

समानमासांजीवीपुत्रात् सांजीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात् कौत्सो माहित्थेर्माहित्थिर्वामकक्षा-

यणाद् वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद् वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद् यज्ञवचा राजस्तम्बायनस्तुरात् कावषेयात् तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः। (१४।९।४।३४)

**अर्थ**—(शतपथब्राह्मण का समस्त विद्यावंश इस प्रकार है—"अज्ञातनामा आचार्य कहता है)" हमने भारद्वाजीपुत्र से (शतपथब्राह्मण) पढ़ा, (इससे पूर्वाचार्य इस प्रकार थे)—

| क्र०सं० | शिष्य | पूर्वाचार्य (गुरु) |
|---|---|---|
| १ | भारद्वाजीपुत्र ने | वात्सीमाण्डवीपुत्र से |
| २ | वात्सीमाण्डवीपुत्र ने | पाराशरीपुत्र से |
| ३ | पाराशरीपुत्र ने | गार्गीपुत्र से |
| ४ | गार्गीपुत्र ने | पाराशरीकौण्डिनीपुत्र से |
| ५ | पाराशरीकौण्डिनीपुत्र ने | गार्गीपुत्र से |
| ६ | गार्गीपुत्र ने | गर्गीपुत्र से |
| ७ | गर्गीपुत्र ने | बाडेयीपुत्र से |
| ८ | बाडेयीपुत्र ने | मौषिकीपुत्र से |
| ९ | मौषिकीपुत्र ने | हारिकर्णीपुत्र से |
| १० | हारिकर्णीपुत्र ने | भारद्वाजीपुत्र से |
| ११ | भारद्वाजीपुत्र ने | पैङ्गीपुत्र से |
| १२ | पैङ्गीपुत्र ने | शौनकीपुत्र से |
| १३ | शौनकीपुत्र ने | काश्यपीबालक्यमाठरीपुत्र से |
| १४ | काश्यपीबालक्यमाठरीपुत्र ने | कौत्सीपुत्र से |
| १५ | कौत्सीपुत्र ने | बौधीपुत्र से |
| १६ | बौधीपुत्र ने | शालंकायनीपुत्र से |
| १७ | शालंकायनीपुत्र ने | वार्षगणीपुत्र से |
| १८ | वार्षगणीपुत्र ने | गौतमीपुत्र से |
| १९ | गौतमीपुत्र ने | आत्रेयीपुत्र से |
| २० | आत्रयीपुत्र ने | गौतमीपुत्र से |
| २१ | गौतमीपुत्र ने | वात्सीपुत्र से |
| २२ | वात्सीपुत्र ने | भारद्वाजीपुत्र से |
| २३ | भारद्वाजीपुत्र ने | पाराशरीपुत्र से |
| २४ | पाराशरीपुत्र ने | वार्कारुणीपुत्र से |

| क्र०सं० | शिष्य | पूर्वाचार्य (गुरु) |
|---|---|---|
| २५ | वार्कारुणीपुत्र ने | आर्तभागीपुत्र से |
| २६ | आर्तभागीपुत्र ने | शौंगीपुत्र से |
| २७ | शौंगीपुत्र ने | सांकृतीपुत्र से |
| २८ | सांकृतीपुत्र ने | आलम्बीपुत्र से |
| २९ | आलम्बीपुत्र ने | आलम्बायनीपुत्र से |
| ३० | आलम्बायनीपुत्र ने | जायन्तीपुत्र से |
| ३१ | जायन्तीपुत्र ने | माण्डूकायनीपुत्र से |
| ३२ | माण्डूकायनीपुत्र ने | माण्डूकीपुत्र से |
| ३३ | माण्डूकीपुत्र ने | शाण्डिलीपुत्र से |
| ३४ | शाण्डिलीपुत्र ने | राथीतरीपुत्र से |
| ३५ | राथीतरीपुत्र ने | क्रौञ्चिकीपुत्रद्वयी से |
| ३६ | क्रौञ्चिकीपुत्रद्वयी ने | वैदभृतीपुत्र से |
| ३७ | वैदभृतीपुत्र ने | भालुकीपुत्र से |
| ३८ | भालुकीपुत्र ने | प्राचीनयोगीपुत्र शे |
| ३९ | प्राचीनयोगीपुत्र ने | सांजीवीपुत्र से |
| ४० | सांजीवीपुत्र ने | कार्शकियीपुत्र ने |
| ४१ | कार्शकियीपुत्र ने | प्राश्नीपुत्र से |
| ४२ | प्राश्नीपुत्र ने | आसुरवासी से |
| ४३ | प्राश्नीपुत्र ने | आसुरायण से |
| ४४ | आसुरायण ने | आसुरि से |
| ४५ | आसुरि ने | याज्ञवल्क्य से |
| ४६ | याज्ञवल्क्य ने | उद्दालक से |
| ४७ | उद्दालक ने | अरुण से |
| ४८ | अरुण ने | उपवेशि से |
| ४९ | उपवेशि ने | कुश्रि से |
| ५० | कुश्रि ने | वाजश्रवा से |
| ५१ | वाजश्रवा ने | जिह्वावान् बाध्योग से |
| ५२ | जिह्वावान् बाध्योग ने | असित वार्षगण से |
| ५३ | असित वार्षगण ने | हरितकश्यप से |
| ५४ | हरितकश्यप ने | शिल्पकश्यप से |
| ५५ | शिल्पकश्यप ने | नैध्रुविकश्यप से |
| ५६ | नैध्रुविकश्यप ने | वाक् अम्भिणी से |
| ५७ | वाक् अम्भिणी ने | आदित्य (विवस्वान्) से |

आदित्य द्वारा शुक्लयजुः (शुक्लयजुर्वेदमन्त्रों) की व्याख्या (शतपथ ब्राह्मण में) वाजसनेय याज्ञवल्क्य ने की है। इस प्रकार संजीवीपुत्र (सं० ४०) तक शिष्यपरम्परा समान है। उससे पूर्व एक और पृथक् परम्परा थी।

| क्र० सं० | शिष्य | गुरु |
|---|---|---|
| १ | सांजीवीपुत्र ने | माण्डूकायनि से |
| २ | माण्डूकायनि ने | माण्डव्य (अणीमाण्डव्य) से |
| ३ | माण्डव्य ने | कौत्स से |
| ४ | कौत्स ने | माहित्थि से |
| ५ | माहित्थि ने | वामकक्षायण से |
| ६ | वामकक्षायण ने | शाण्डिल्य से |
| ७ | शाण्डिल्य ने | वात्स्य से |
| ८ | वात्स्य ने | कुश्रि से |
| ९ | कुश्रि ने | यज्ञवचा राजस्तम्बायन से |
| १० | यज्ञवचा राजस्तम्बायन ने | तुर कावषेय से |
| ११ | तुर कावषेय ने | प्रजापति से (या पिता कवष एलूष से) |
| १२ | प्रजापति ने | स्वयम्भू ब्रह्मा से |

———

[ ११ ]

# जैमिनीयब्राह्मणे ऐतिह्यसन्दर्भाः

## प्रथमे काण्डे

**भृगुर्वारुणिः—तस्य अतिमानम्—**

भृगुर्ह वारुणिरनूचान आस। स हात्य एव पितरं मेनेऽइति देवान् अत्य ब्राह्मणान् अनूचानान्। स ह वरुण ईक्षांचक्रे न वै मे पुत्रः किंचन प्रजानाति । हन्तैनं प्रज्ञापयामीति । तस्य ह प्राणान् अभिजग्राह। स ह तताम। स ह तान्तः परलोकं जगाम। स हामुष्मिन् लोक आजगाम। पुरुष एव पुरुषं संवृश्च्याथैनं जघास। स होवाचाभूद् बतेदं किं स्विद् इति। तं होचुः पितरं वरुणं पृच्छासि स त इदं प्रवक्ते ति।

द्वितीयं हाजगाम…।

तृतीयं हाजगाम…।

चतुर्थं हाजगाम…।

पचमं हाजगाम…।

षष्ठं हाजगाम…।

स ह एवाववृत्ते। स ह वरुणम् एव आजगाम। तं होवाचागस्ताता इति। आगां तातेति। अदर्शं तातेति। किं तातेति। पुरुष एव पुरुषं संवृश्च्याथैनम् अघसद् इति। ये वा अस्मिन् लोकेऽग्निहोत्रम् अजुह्वतो नैवंविदो वनस्पतीन् संवृश्च्याभ्यादधति । तान् वा अमुष्मिन् लोके वनस्पतयः पुरुषरूपं कृत्वा प्रत्यदन्ति । तस्य का निष्कृतिरिति। यद् एवैतद् समिधम् अभ्यादधाति सा तस्य निष्कृतिस्तया तद् अतिमुच्यते इति।

स होवाच न वै किलान्यत्राग्निहोत्राल्लोकजित्या अवकाशोऽस्ति। अद्यैव मे अग्न्याधेयस्योपवसथ इति। तस्य ह तथा चक्रुः। स य एवं विद्वान् अग्निहोत्रं जुहोति नैनम् अमुष्मिन् लोके वनस्पतयः पुरुष–

रूपं कृत्वा प्रत्यदन्ति । न पशवो न व्रीहियवा नास्येष्टापूर्तं श्रद्धा चाश्रद्धां गच्छतोऽपहते लोहितकुल्याम् अवरुद्धे घृतकुल्याम् ।

**अर्थ**—भृगु वारुणि (वरुणपुत्र) वेद का विद्वान् था। (वेदविद्या पढ़कर वह अपने को बहुत अधिक ज्ञानी समझने लगा, अतः वह पिता वरुण, अन्य देवों एवं वेदज्ञ ब्राह्मणों (ऋषियों) को कुछ भी नहीं समझता था। तब वरुण ने देखा कि मेरा पुत्र (कोई विशेष) विद्वान् नहीं परन्तु घमण्ड बहुत करता है। अतः उसको उसके अज्ञान का अनुभव कराता हूं।

वरुण ने उसके प्राण (बुद्धि) का हरण कर लिया। भृगु दुःखी हुआ। वह निःसंज्ञ (बुद्धिहीन होकर) दूसरे लोक (परदेश) गया, वहां उसने देखा कि आदमी ही आदमी को काटकर खा रहा है। उसने सोचा अरे यह क्या हो रहा है। (वहां के प्राणियों ने) उसको बताया—'अपने पिता वरुण से पूछना। वही तुमको यह बतायेगा।

वह और आगे दुबारा गया।
तीसरी बार गया…।
चौथी बार गया …।
पांचवीं बार गया… ।

छठी बार गया (और हर बार एक नई बात देखी)…।

भृगु दुःखी होकर अपने लोक (देश) में लौट आया। वह वरुण के पास आया। वरुण ने कहा—'बेटा! आ गये।' भृगु ने कहा—'हां पिताजी (मैं देखकर) आ गया हूं। (वरुण ने पूछा)—'क्या देखा?' भृगु ने बताया—'(वहां उस देश में) मनुष्य ही मनुष्य को मार खा जाता है।' (तब वरुण ने कहा)—'हे भृगो! जो मनुष्य इस लोक में अग्निहोत्र न करते हुए पेड़ों को काटते हैं और जलाते हैं ऐसे मनुष्यों को परलोक में वनस्पतियां पुरुष बनकर खा जाती हैं। उसे रोकने का क्या उपाय है? जो मनुष्य समिधा रखकर उसमें अग्निहोत्र करता है, यही इसकी निष्कृति है, वह पुरुष मुक्त हो जाता है और इस अग्निहोत्र के अतिरिक्त इस पाप से मुक्ति का और कोई उपाय नहीं। आज ही मैं अग्न्याधान करता हूं और भृगु ने वैसा ही किया। जो विद्वान् अग्निहोत्र करता है, उसको वनस्पतियां पुरुष बनाकर नहीं खातीं। उसके पशु व्रीहि यव, इष्टापूर्त, श्रद्धा और अश्रद्धा अपहृत नहीं होती और लोहित कुल्या और घृतकुल्या को रोक लेता है।

**समानकालिकाः पञ्च ब्राह्मणाः (आचार्याः)**—

आरुणिर्वाजसनेयो याज्ञवल्क्यो बर्कु वार्ष्णिः प्रियो जानश्रेयो बुडिल आश्वतराश्विर्वैयाघ्रपाद्य इत्येते ह पंच महाब्राह्मणा आसुः। ते

होतुर्जनको वा अयं वैदेहोऽग्निहोत्रेऽशिष्टः स नोऽतिवदन्न इव मन्यते। एतं तम् अग्निहोत्रो कथां वादयिष्याम इति। (१।२२)

अर्थ—आरुणि, वाजसनेय, बर्कुःवर्ष्णि, प्रिय जानश्रुतेय, बुडिल आश्वतराश्वि और वैयाघ्रपाद्य ये पांच महाब्राह्मण—महान् आचार्य थे। उन्होंने परस्पर विचार विमर्श किया कि "यह जनक वैदेह अग्निहोत्र में अशिष्ट है। वह हमको इस विषय में अतिवादी मानता है, (चलो चलें) उससे अग्निहोत्रविषयक शास्त्रार्थ करें।"

**असितमृगाः पुरोहिताः–**

कुसुरुबिन्दो हौद्दालकिस्सोमानाम उज्जगौ। तम् उ ह असितमृगाः कश्यपानां पुत्रा ऊचुः। (१।७५)

अर्थ—कुसुरुबिन्द औद्दालकि ने सोम यज्ञ में सामगान किया। कश्यपों के पुत्र (वंशज) असितमृगसंज्ञक ब्राह्मण बोले।

**अत्रिः—**

स्वर्भानुर्वा आसुर आदित्यं तमसाविध्यत्। तं देवाश्चर्षयश्चाभिषज्यन्। तेऽत्रिमब्रुवन्। ऋषे त्वम् इदम् अपजहीति। (१।८०)

**अर्थ**—स्वर्भानु (राहु) असुर (विप्रचित्ति) पुत्र ने आदित्य पर तम से घात किया। देवों और ऋषियों ने आदित्य के उपचार का विचार किया। उन्होंने अत्रि ऋषि से कहा—हे ऋषे! आप आदित्य के घात को ठीक करो।

**कपिवनो भौवायनः–**

कपिवनो ह स्माह भौवायनः। (१।८९)

**अर्थ**—कपिवन (भुवन का वंशज और) भौवन का पुत्र था।

**इन्द्रसोमयोः प्रजानाम् आधिपत्यम्—**

इन्द्रश्च वै सोमश्चाकामयेताम्। सर्वासां प्रजानाम् ऐश्वर्यम् आधिपत्यम् अश्नुवीवहीति। तावेतां प्रतिपदमपश्यताम्। तया स्तुवताम्। ततो वै तौ सर्वासां प्रजानामैश्वर्यमाधिपत्यम् च आश्नुवाताम् इति। (१।९५)

**अर्थ**—इन्द्र और सोम ने इच्छा की कि हम प्रजा के ईश्वर और अधिपति (सम्राट्) बनें। उन्होंने इसके लिये सतत प्रयत्न किया और उन्होंने प्रजाओं का ऐश्वर्य और आधिपत्य भोगा।

**सध्र्यश्वः तैग्मायुधिः—**

सध्र्यश्वो ह स्माह तैग्मायुधिः। (१।११४)

**अर्थ**—तिग्मायुध का पुत्र सध्र्यश्व बोला।

**उत्तरकुरवः मार्जश्शैलनश्च—**

उत्तरकुरवो हातुरं अवषट्कृतस्यैव सोमस्य कुरुपञ्चाला भक्षयन्तीति तद् उ ह स्माह मार्जश्शैलनः ॥ (१।११८)

**अर्थ**—उत्तर कुरुवासियों ने कहा कि कुरुपञ्चालवासी अवषट्कृत सोमपान करते हैं। मार्जश्शैलन ने कहा।

**रुरुः—**

रुरु इतिवृध्रः पशुकामस्तपोऽतप्यत। स एतत् सामापश्यत्। यद् उ रुरु इतिवृध्रोऽपश्यत्, तस्माद् एव रौरवम् इत्याख्यायते।

(१।१२१)

**अर्थ**—रुरु इतिवृध्र ने पशुओं की इच्छा से तप किया। उसने यह साम देखी (रची)। क्योंकि यह साम रुरु इतिवृध्र ने देखी, इसलिये उसका नाम 'रौरव साम' प्रसिद्ध हुआ।

**युधाजीवः वैश्वामित्रः—**

युधाजीवो वैश्वामित्रः प्रतिष्ठाकामस्तपोऽतप्यत। स एतत् सामापश्यत् ॥

**अर्थ**—विश्वामित्र के पुत्र (या वंशज) युधाजीव ऋषि ने इस साम के दर्शन के लिये तप किया और उसने यह साम (यौधाजीव साम) रची।

**बृहस्पतिरुशना, त्रिशीर्षा गन्धर्वः इन्द्रश्च—**

बृहस्पतिर्देवानां पुरोहित आसीद्, उशना काव्योऽसुराणाम्। तेषां ह त्रिशीर्षा गन्धर्वो विजयस्यावेत्। स हैवास। तस्य हाप्स्वन्तरे नौनगरं परिप्लवम् आस। तद् इन्द्रोऽवबुध्यत—त्रिशीर्षा वै नो विजयस्य वेदेति। तस्य जायाम् आच्छेद् एतस्यैव विजयस्य कामाय। ताम् अब्रवीत् पृच्छतात् पतिं य इमे देवासुरासंयत्ता ज्योग् अभूवन् कतर एषां ज्येष्यन्तीति।...सेयं पतिं पप्रच्छ य इमे देवासुरास्संयत्ता ज्योग् अभूवन् कतर एषां जेष्यन्तीति। मौच्चैरिति होवाच। कर्णिनी वै भूमिरिति। तद् इदम् अप्यैतद् आहुर्मोच्चैः कर्णिनी वै भूरिति। नेति होवाच ब्रह्म वेति। स होवाच ब्राह्मणाविमौ समं विदतुरिति। बृहस्पतिरियं देवेषूशना काव्योऽसुरेषु।...तद्धैवेन्द्रोऽनुबुध्य शुको भूत्वोत्पपात। तं हान्वीक्ष्य पतन्तम् उवाच। येषां असौ हरितवर्णकः पतति, ते जेष्यन्तीति। स होशनसं काव्यमाजगामसुरेषु। तं होवाच ऋषे! कम् इमं जनं वर्धयस्यस्माकं वै त्वमसि, वयं वा तवास्मान् अभ्युपावर्तस्वेति।

कथेति होवाच । केन मोपमन्त्रयस इति । या इमा विरोचनस्य प्राह्लादेः कामदुघास्ताभिरतिताभिर्ह प्रतित्वेव प्रदुद्रवुः । तौ हासुरा अन्ववजह्निरे । तौ हान्वाजग्मतुः । स होवाच, ऋषेऽनु वै नाविमेऽसुरा अग्मन् इति । स वै तथा कुर्विति होवाच यथा नावेते नान्वागच्छात् इति । तौ हाभिः कामदुघाभिर्देवानां जग्मतुः । तौ हागतौ महयांचक्रे—

ऋषिर्विप्रः पुर एता जनानाम् ऋभुर्वीर उशना काव्येन । स चिद् विवेद निहितं यद् आसाम् अपीच्यं गुह्यं नाम गोनाम् । इति···।

उशना वै काव्यो देवेष्वमर्त्यं गन्धर्वलोकम् ऐच्छत ।

···यद् उशना काव्योऽपश्यत् तस्माद् औशनम् इत्याख्यायते ।।

(१।१२६-१२७)

**अर्थ**—बृहस्पति देवों के पुरोहित थे और उशना काव्य असुरों के पुरोहित थे । (देवासुरों की) विजय को त्रिशीर्षा गन्धर्व जानता था । उसका नगर नौनगर (अर्थात् समुद्र के मध्य नावों पर बसा हुआ था ।) तैरता था । यह बात इन्द्र को ज्ञात हुई कि त्रिशीर्षागन्धर्व को हमारी (देवों और असुरों) विजय का ज्ञान है । अतः इन्द्र विजय की कामना से त्रिशीर्षा की पत्नी के पास पहुंचा और उसको कहा कि "जो ये देवासुरगण युद्धार्थ संनद्ध हैं, अपने पति से पूछो कि इस युद्ध में किस पक्ष की विजय होगी ।···उसने (गन्धर्वपत्नी ने) अपने पति से पूछा—'ये जो देव और असुर दीर्घकाल से युद्ध कर रहे हैं, उनमें कौन जीतेगा ?' गन्धर्व ने कहा – 'धीरे बोलो । भूमि के भी कान होते हैं ।' उसने कहा—मैं नहीं जानता । पुरोहित जानते हैं । ये दो ब्राह्मणपुरोहित – देवों में बृहस्पति और असुरों में उशना काव्य—ये युद्ध के परिणाम को जानते हैं । यह सुनकर इन्द्र तोता बनकर (शुक्राचार्य से मिलने हेतु) उड़ गया । तब त्रिशीर्षा गन्धर्व ने चिल्लाकर कहा— 'जो यह हरा तोता (इन्द्र) उड़ रहा है, वे (देवगण) जीतेंगे ।

इन्द्र उठकर उशना काव्य के पास आया और बोला—'ऋषे ! इन (असुर) जनों की वृद्धि क्यों कर रहे हो ? हम तो तुम्हारे ही आदमी 'हैं और आप हमारे हो । अतः हमारे पास आओ । उशना काव्य ने पूछा—क्यों, किसलिये मुझे बुला रहे हो ?

ऋषे ! प्रह्लादपुत्र विरोचन की जो कामदुघा गायें हैं वे आपके पास आ गई हैं । उनको असुरों ने चुराया था । इधर ये असुर हमारी ओर आ रहे हैं । ये हमारी ओर नहीं आयें, ऐसा उपाय करो । वे दोनों पुरोहित गायों के साथ देवों के पास आये । उनकी देवों ने पूजा की—

"ऋषि, विप्र, पुरोहित, उशना महान् ज्ञानी है, वीर है, वह अपने काव्य (बुद्धि) से गुहा में निहित गुप्त गायों को भी भली-भांति जानते हैं।

...उशना काव्य ने देवों में अमर गन्धर्वलोक की कामना की और वहां गये।...

इस साम को उशना काव्य ने रचा (देखा) इसलिये उसको 'औशनस साम' कहते हैं।

**नोधाः काक्षीवतः–**

नोधा वै काक्षीवतो ज्योग् अप्रतिष्ठितश्चरन् सोऽकामयत प्रतितिष्ठेयम् इति। स ह देवान् ब्रह्म विभजमानान् उपावपतत। स होवाचर्षिरस्मि मन्त्रकृत्, स ज्योग् अप्रतिष्ठितोऽस्मि। तस्मै म एतद् दत्त येन प्रतितिष्ठेयम् इति। तस्मै ह ब्रह्मणो रसस्य ददुः। तद् एव नौधसम् अभवत्। (१४७)

**अर्थ**—कक्षीवान् का पुत्र नोधा चिरकाल तक, अप्रतिष्ठित ही रहा। उसने इच्छा की कि मुझे लोक में प्रतिष्ठा (सम्मान) मिले। वह देवों के पास गया, जहां वे वेद (विद्या या मन्त्रों) को बांट रहे थे। वह बोला—"मैं ऋषि मन्त्रकृत् हूं परन्तु चिरकाल से अप्रतिष्ठित हूं। कृपया मुझे यह वेद का रस (साम) दे दीजिये, जिससे प्रतिष्ठित हो सकूं। देवों ने उसे वेद का रस दे दिया। इसीलिये उस साम को 'नौधसम साम' कहते हैं।

**जीतः वसिष्ठः—**

वसिष्ठो वै जीतो हतपुत्रोऽकामयत, बहुप्रजया पशुभिः प्रजायेयेति। (१।१५०)

**अर्थ**—जीत (जित् का पुत्र) वसिष्ठ (वासिष्ठ) अपने पुत्रों के मर जाने पर सोचने लगा कि मेरे बहुत सी प्रजा और पशु उत्पन्न हों।

**तरन्तपुरुमीढौ—**

तरन्तपुरुमीढौ वै वैतदश्वी माहेयौ मह्या आर्चनानस्यै पुत्रौ। तौ ह यन्तौ स्त्रीः पर्येत्योवाच। तौ ह क्रुध्यन्ताविवोचतुः। कथं नावित्थं ब्रूयाद् इति। तं वा अर्वीष उपवेपति। सा हेयं स्त्रीः श्रद्धाय देवर्षी या मन्त्रकृतावबोचताम्। इत्यर्वीष उपोवाप। तौ ह पुनरायन्तौ पर्येत्योवाच—यं वै कुमारम् अवोचतम्। अर्वीष उपवेपत्ययं वै सोऽर्वीष उपोप्तश्शेते इति। तौ हासाध्व इव कृत्वा मेनाते। तावकामेयताम्। उद् इत इयाव गातुं नाथं विन्देवहि। सम अयं कुमारो जीवेद् इति। को नामकुमार इति। सुदीतिर्नाम। (१।१५१)

**अर्थ**—वितदश्‍व और आर्चनानसी 'मही' के पुत्र थे। तरन्त और पुरुमीढ़, (उनको पिता के नाम पर वैतदश्‍वी और माता के नाम पर माहेय भी कहा जाता था) मार्ग में उनको जाते हुये एक स्त्री आकर बोली। वे ऋषि क्रुद्ध होकर बोले—"हमसे मार्ग में इस प्रकार क्यों बात कही।" वह बालक ज्वर से कांप रहा था। उस स्त्री ने श्रद्धावश और यह समझकर कि ये देवर्षि हैं, मन्त्रकृत् ऋषि हैं—अतः मेरे पुत्र की चिकित्सा कर देंगे।

जब मार्ग में वे ऋषि पुनः जारहे थे, तो वह एक स्त्री आकर बोली—"कि वह कुमार ज्वर से कांप रहा था, वह निःसंज्ञ पड़ा है। तब ऋषियों ने सोचा—'हमसे बड़ा अपराध हुआ। तब उन्होंने चाहा कि चलें और उस बालक को जीवित करके उसका कल्याण करें! 'उस कुमार का क्या नाम था?' उसका नाम 'सुदीति' था।

**जमदग्निः, माहेनाः (हैहयाः) क्षत्रियाश्च**—

जमदग्निर्ह वै माहेनानां पुरोहित आस। तान् वित्तेनात्याददौ। त उ हैनमु उपजिहिंसुः। स ह ईक्षांचक्रे कथं न्वहम् एषां सप्तसप्तैकाहानि ग्राम्याणां पशूनां हन्याम् इति।... ततो वै स तेषां सप्तसप्तैकाहानि ग्राम्याणां पशूनाम् अहन् । तद् एषोपगीता—

अतिमात्रम् अवर्धन्त नोद इव दिवम् अस्पृशन्।
भृगुं हिंसित्वा माहेना असंहेयं पराभवन्॥ (१।१५२)

अति महत्ता को प्राप्त हुये माहेन (हैहय) क्षत्रियगण आकाश को छूने लगे थे, परन्तु, अवध्य भृगु (भार्गव=जमदग्नि) को मारने से वे पराभव को प्राप्त हुये। (श्लोकार्थ)

जमदग्नि माहेन (हैहय) क्षत्रियों का पुरोहित था। उसने उनको अपरिमित धन से सम्पन्न किया, परन्तु उन्होंने उसको मारना चाहा और बाद में मार भी दिया। जमदग्नि ने देखा कि मैं इनके यज्ञिय ग्राम्य पशुओं को मार दूं और उसने उनके ग्राम्य पशु मार दिये। तदनन्तर (इतिहास में) यह गीत गाया जाता है। (ऊपर)

**वैतदन्यः कलिः, पंचजनाश्च**—

देवाः पितरो मनुष्यास्तेऽन्यत आसन् असुराः रक्षांसि पिशाचा अन्यतः। त एषु लोकेषु अस्पर्धन्त। अथ कलयो गन्धर्वा अन्तस्थाश्चेरुर्नेतरान् नेतरान् आद्रियमाणाः। ते देवाः पितरो मनुष्या असुरान् रक्षांसि पिशाचान् अभ्यभवन्। त इमान् लोकान् व्यभजन्त। देवलोकं एव देवा अभजन्त, पितृलोकं पितरो मनुष्यलोकं मनुष्याः। ततः कलयो

गन्धर्वा एत्याब्रुवन्। अनु न एषु लोकेष्वा भजतेति। नेत्यब्रुवन्। अनाद्रियमाणा वै यूयम् अचारिष्ट नेतरान् नेतरान् आद्रियमाणा इति। अथ न वै वो मनसान्वासिष्महे इत्यब्रुवन्। अन्वेव न आभजतेति। नेत्यब्रुवन्। साधुविभक्ता नौ लोकास्तान् न शक्ष्यामस्सं-लोभयितुम् इति। तेऽब्रुवन् यद् वयं इह स्वयं पश्यामस्तद् अस्माकम् अस्त्विति। तेभ्यः एता कलिन्दाः प्रायच्छन्। एतासु श्राम्यतेति। तद् यत् कलिभ्यः कलिन्दाः प्रायच्छंस्तत् कलिन्दानां कलिन्दत्वम्। स एतत् कलिर्वैतदन्यः सामापश्यत्।···यद् उ कलि वैतदन्यो-ऽपश्यत् तस्मात् कालेयम् इत्याख्यायते। (१।१५५)

अर्थ—(युद्ध में) देव, पितर और मनुष्य एक ओर असुर, राक्षस और पिशाच दूसरी ओर थे। वे लोकों (देशों और जातियों) में स्पर्धा करते थे (कि उस पर हमारा अधिकार हो जाये)। कलिगन्धर्व दोगले थे। वे समय-समय पर दोनों पक्षों की ओर चले जाते थे।) परन्तु किसी पक्ष का आदर नहीं करते (उनकी सहायता नहीं करते) थे। जब देव-पितृ मनुष्यों ने असुर, राक्षस-पिशाचों को जीत लिया तब उन्होंने इन लोकों (देशों) को बांट लिया। देवलोक (देवजाति या देश) को देवों ने, पितृलोक (देश) को पितरों ने और मनुष्यलोक को मनुष्यों ने बांट लिया। तब कलि-गन्धर्व आकर बोले—'हमको भी (कुछ या कोई) लोक (देश) दीजिये। देवादि बोले—'नहीं' क्योंकि आप लोग किसी का भी आदर (सहायता) नहीं करते हुये इधर-उधर घूमते रहे। "हम आपके साथ मन से हैं। अतः हमको भाग दो।" तब देवादि ने कहा हमने लोक (देश) भली-भांति बांट लिये हैं, अब लालच की कोई संभावना नहीं है। तब कलिगन्धर्वों ने कहा—'हम जिस वस्तु को स्वयं देख लें, वही हमारी हो जाये, तब देवों ने उन्हें कलिन्द (फल) दिये और कहा—इन पर ही सन्तोष करो, क्योंकि कलिन्द कलिगन्धर्वों को दिये गये, यही कलिन्दों का कलिन्दत्व है।

वितदन् के पुत्र कलि ने यह साम रची, क्योंकि कलि वैतदन्य ने यह साम देखी, अतः उसको 'कालेय साम' कहा जाता है।

**दीर्घजिह्वी असुरी, इन्द्रः सुमित्रश्च—**

दीर्घजिह्वी ह वा असुर्यास। सा ह स्म सोमं सोमम् अवलेढ़ि। उत्तरे समुद्रे आस। स यो ह स्म दक्षिणे समुद्रे सूयते यः पूर्वे योऽपरे तं ह स्म तत एवावलेढि। तां हेन्द्रो जिघृक्षन् न शशाक गृहीतुम्। स होवाच मा कश्चन यष्टेयं वै दीर्घजिह्वी सोमं सोमम् एवावलेढीति।

अथ ह सुमित्रः कौत्सो दर्शनीय आस। स तं होवाच 'सुमित्र दर्शनीयोऽसि' सुलापा वै दर्शनीयेन स्त्रियः। इमां दीर्घजिह्वीं लिलापयिषस्वेति।" तां हेत्योवाच—'दीर्घजिह्वि कामयस्व मेति।" सा होवाचैकं तव शेपोऽङ्गेऽङ्गे मम मुष्काः, न वैतत् संपद्यते इति।

सा ह पुनरेत्य वोचैकं तव शेपोऽङ्गेऽङ्गे मम मुष्काः, न वै तत् संपद्यते इति वै माम् इयम् आहृति अङ्गे अङ्गे वा तव शेपांसि करोमीति होवाच। तानि हाभिप्रावृत्येयाय। तां होवाच दीर्घ-जिह्वि ! कामयस्व मेति। सा तोवाचैकं तव शेपोऽङ्गेऽङ्गे मम मुष्का न वै तत् संपद्यत इति। अङ्गे अङ्गे वाव मम शेपांसीति होवाच। अङ्गं ते पश्यानीति।

तानि हास्यै दर्शयांचकार। तानि हास्यैच्छन्दयांचक्रुः। स वा एहीति होवाच। को नामासीति। सुमित्रो नामेति। कल्याणं वै ते नामेति होवाच। तौ ह संनिपेदाते। तस्यां ह यदार्थं चक्रेऽथ हैनां तद् एवाभिसंजग्राह। स होवाच नन्वरे त्वं सुमित्रोऽत्रोचथा इति। स होवाच सुमित्र एवाहं सुमित्रायास्मि दुर्मित्रो दुर्मित्रायेति।

(१।१६१-१६३)

अर्थ—दीर्घजिह्वी नाम की एक असुरी थी। जहां-जहां सोमक्रतु होता था, वहीं सोम चट कर जाती थी। वह उत्तर समुद्र तट पर सोमसवन करता था और जो पूर्व समुद्र या पश्चिम समुद्र तट पर सोम निकाला जाता, वह समस्त सोम को चाट जाती थी। इन्द्र ने उसको पकड़ने की बहुत कोशिश की, परन्तु वह पकड़ नहीं सका। वह बोला, कोई (अभी) यज्ञ नहीं करे, क्योंकि दीर्घ-जिह्वी सोम को चट कर जाती है।

सुमित्रकौत्स (कुत्स पुत्र) एक सुन्दर युवक था। इन्द्र ने उससे कहा हे ! सुमित्र ! तुम अतीव सुन्दर हो ! स्त्रियां सुन्दर पुरुष के साथ खूब बातें करती हैं। इस दीर्घजिह्वी में वार्ता करने की इच्छा उत्पन्न करो। सुमित्र दीर्घजिह्वी के पास जाकर बोला—'तुम मुझसे प्रेम करो। वह बोली—'हे सुमित्र ! आपके एक ही शेप (पुरुषेन्द्रिय) है और मेरे अंग-अंग में योनियां हैं। अतः हमारा प्रेम संभव नहीं। (जब सुमित्र दुबारा उसके पास गया तो) फिर भी वह बोली—'आपके एक ही शेप है और मेरी अनेक योनियां हैं, यही एक दुःख की बात है। मैं तुम्हारे शरीर में अनेक शेप लगा देती हूं। ऐसा होने पर पुनः सुमित्र दीर्घजिह्वी के पास गया और पुनः बोला—'दीर्घजिह्वी मेरे से प्रेम करो।

बिभृतेमौ सर्वायुरेष्यत इति । प्राङायुः प्रवव्राज । तस्यैते कुरुपञ्चालाः काशिविदेहा इत्येतदायवम् । प्रत्यङमावसुस्तस्यैते मान्धारस्य स्पर्शवोऽराट्टा इत्येतदामावसम् । ··अथो हास्या एषा पूर्वचित्तिरप्सरा स्वसा बभूव । सा विद्युतं जनयाञ्चकार । तं सा विद्युति नग्नमनुचरव्यावथो ह राजानमागाम स्वारुहं वा अहमजीत उरुण मत्यारुदं हि नूनमिति । तस्यां प्रव्राजितायाम-प्रियविद्धः शोचंश्चचार । तं होवाच बृहस्पतिराङ्गिरसो हन्त त्वा शदेव याजयिष्याम्यापदि त्वा पुनर्जिन्विष्यामीति ।·· अथ ह कुरुक्षेत्रे विषवत्यो नाम पुष्करिण्यस्तासामुत्तराध्यां सुवर्णसवनी तस्यामेनन्निचखान तदश्वत्थो जज्ञे । तस्यारणी चक्रिरे । एतौ पौरूरवसो नाम शदोपसदौ ।

अर्थ—पुरूरवा ऐल एक श्रेष्ठ राजा था । उर्वशी अप्सरा ने उसका ध्यान किया (उससे विवाह किया) । उसने आयु और अमावसु को उत्पन्न किया । उसने उन दोनों पुत्रों का भरण-पोषण किया । जिससे पूर्ण आयु प्राप्त करें । आयु (बड़ा होने पर) पूर्व दिशा की ओर गया । उसके वंशज (भविष्य में) कुरुपांचाल, काशिविदेह, (इत्यादि) के शासक हुए और पश्चिम में गान्धार, स्पर्शव (पर्शु = फारसी), अराट्ट (इत्यादि में) अमावसु के वंशज शासक हुए ।

पूर्वचित्ति अप्सरा, उर्वशी की बहिन थी । उसने (रात में) बिजली उत्पन्न कर दी, जिससे उसने पुरूरवा को नग्न देख लिया । उसके उरण चुरा लिये, अतः वह राजा को छोड़कर चली गई । उसके चले जाने पर राजा पुरूरवा व्याकुल होकर इधर उधर घूमने लगा । बृहस्पति आंगिरस ने पुरूरवा से कहा—'हे राजन् ! मैं आपका शद के द्वारा यज्ञ कराऊंगा और आपत्ति से मुक्ति दिलाऊंगा । कुरुक्षेत्र में 'विषवती' नाम की पुष्करिणी थी । उसके उत्तरार्ध का नाम सुवर्णसवनी था । उसने उसको खोदा, उसमें एक अश्वत्थ (पीपल) उत्पन्न हुआ । उसकी दो अरणियां बनाईं । पुरूरवा के दो शद और उपसद थे ।

**देवेन्द्रविजयः—**

देवासुरा ह यत्र महासंग्रामं संयेतिरे । तद्धेमानि भूतानि द्वैधैव व्यपचक्रमुर्देवानेवान्यान्यसुरानेवान्यानि । बृहस्पतिर्देवानां पुरोहित आसीदुशना काव्योऽसुराणाम् । गन्धर्वो ह सूर्यवर्चा भविष्यज्ज्ञो जज्ञे । तस्य हेन्द्रो जायया उपहास्य आस । तां होवाच मुदिताङ्गि ! त्वमिदं गन्धर्वं पृच्छ । किमर्थमिदं देवासुरा न विजयन्तीति । स हान्तःसमुद्रे हिरण्यया नावया सहजानि कुमार-

याञ्चक्रेऽथो हेन्द्र आजगाम। स ह सौवर्णो पटरो भूत्वा नौमण्ड उपशिश्लेष···। स ह गत्वौशनसं काव्यमुपमन्त्रयांचक्रे जयन्त्या स ह दुहित्रा चतसृभिश्च कामदुघाभिः। स हाज्ञप्तोऽसुरेभ्योऽधि देवानुपसमियाय। ततो ह व एतद्देवा असुरान् महासंग्रामे जिग्युः। (१८।४६)

अर्थ—देवों और असुरों में महासंग्राम हो रहा था। पृथिवी के प्राणी (मनुष्य) दो भागों में बंट गये। आधे देवों के पक्ष में और आधे असुरों के पक्ष में। बृहस्पति देवों के पुरोहित थे और उशना काव्य असुरों के। गन्धर्वराज सूर्यवर्चा भविष्यज्ञ था। इन्द्र उसकी पत्नी का सखा था। इन्द्र ने उससे कहा—'हे मुदितांगि ! तुम अपने पति गन्धर्व से पूछो—कि देवों और असुरों में से कोई जीतता क्यों नहीं। वह गन्धर्व सुवर्णनौका (पण्डुब्बी) के द्वारा पत्नी के साथ समुद्र मध्य क्रीड़ा कर रहा था। तब इन्द्र सौवर्ण पटर बनकर (उसमें बैठकर) नौमण्ड में चिपक गया···।

इन्द्र ने उशना काव्य के पास जाकर उनको बुलाया, वह अपने साथ अपनी पुत्री जयन्ती और चार कामदुघा गायें भी लाया था। (वे इन्द्र ने उशना को दे दीं)। तदनन्तर उनकी आज्ञा लेकर असुरों के पास से देवों के पास आया। तब देवों ने महासंग्राम में असुरों को जीत लिया।

**शुनस्कर्णः शैव्यः**

शुनस्कर्णो ह शैव्यो राजा पुण्यकृद्बहुयाज्यास। (१८।४८)

अर्थ—शुनस्कर्ण शैव्य राजा पुण्यात्मा और बहुत यज्ञ करनेवाला था।

**शिबिरौशीनरः**

देवासुरा ह यत्र महासंग्रामं संयेतिरे। तद्ध शिबिरौशीनरो देवानां वर्गादसुराञ्जिगाय। तस्य हेन्द्रो जितवरं ददौ। स होवाच शिबिर्नैष्ठ्यं भयं न गच्छेदिति। तं वर्षिष्ठीयप्रस्थे सर्वतोमुखेन याजयाञ्चकार। (१८।४९)

अर्थ—देवासुरगण (उत्तरकालीन) महासंग्रामों में लड़ रहे थे। शिबि औशीनर ने देवों की ओर से असुरों को जीता। इन्द्र ने शिबि को जीत का वर देना चाहा। शिबि ने कहा—'हे देवराज ! हमको नैष्ठ्य (राष्ट्रीय) भय प्राप्त न हो। शिबि ने वर्षिष्ठीयप्रस्थ (नगर) में सब प्रकार के यज्ञ किये।

———

## [ २३ ]

# आपस्तम्बधर्मसूत्रे ऐतिह्यसन्दर्भाः

**श्राद्धदेवो मनुः—**

सह देवमनुष्या अस्मिंल्लोके पुरा बभूवुः। अथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्याः। तेषां ये तथा कर्माण्यारभन्ते सह देवैर्ब्राह्मणाः चाऽमुष्मिन् लोके भवन्ति। अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच। प्रजानिश्श्रेयसाय च। (२।७।१)

**अर्थ**—देव और मनुष्य पूर्वकाल में इस पृथिवी पर साथ-साथ रहते थे। देवगण अपने कर्मों द्वारा स्वर्गलोक को प्राप्त हुए, परन्तु मनुष्य यहीं (पृथिवी पर) रह गये। इनमें जो ब्राह्मण देवों के समान (यज्ञ) कर्म का प्रारम्भ करते हैं वे भी स्वर्गलोक पहुंच जाते हैं।

अतः मनु ने 'श्राद्ध कर्म' का विधान किया। उसने प्रजा के कल्याण के लिये भी यह कर्मप्रवर्तन किया।

**पुराणे श्लोकाः (उदाहृताः)—**

अथ पुराणे श्लोकावुदाहरति—

अष्टाशीतिसहस्राणि ये प्रजामीषिर ऋषयः।
दक्षिणेनाऽर्यम्णः पन्थानं ते श्मशानानि भेजिरे।
अष्टाशीतिसहस्राणि ये प्रजा नेषिर ऋषयः।
उत्तरेणाऽर्यम्णः पन्थानं तेऽमृतत्वं हि कल्पते। (२।२३।३–४)

**अर्थ**—अतः (धर्मसूत्र में) पुराणों से श्लोक उदाहृत किये जाते हैं—"अट्ठासी हजार, जिन ऋषियों ने प्रजा की इच्छा की (उत्पन्न की) वे अर्यमा के दक्षिणमार्ग (पितृयान) से श्मशानों को ही प्राप्त हुए। परन्तु जिन अट्ठासी हजार ऋषियों ने प्रजा की इच्छा नहीं की, वे अर्यमा से उत्तरमार्ग (देवयान) से अमृत-स्थान (मोक्ष) को प्राप्त हुए।

**भविष्यत्पुराणस्योल्लेखः—**

पुनस्सर्गे बीजार्था भवन्तीति भविष्यत्पुराणे। (२।२४।६)

**अर्थ**—पुनः भविष्य में उत्पत्ति के मूल बनते हैं ऐसा भविष्यपुराण में कहा है।

# बौधायनधर्मसूत्रे ऐतिह्यसन्दर्भाः

**गाथा—**

अथाऽप्यत्रोशनसश्च वृषपर्वणश्च दुहित्रोस्संवादे गाथामुदाहरन्ति—
स्तुवतो दुहिता त्वं वै याचतः प्रतिगृह्णतः ।
अथाहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः । (२।२।२७)

अर्थ—(पुराण में) उशना और वृषपर्वा की पुत्रियों (देवयानी और शर्मिष्ठा) की गाथा उदाहृत की जाती है—"तू स्तुति करनेवाले की पुत्री है और मैं स्तुति की जाने वाले की पुत्री हूं। मैं अप्रतिगृहीता की पुत्री हूं और तू प्रतिगृहीता (दान लेने वाले) की पुत्री है।

**कपिलः प्राह्लादिः—**

तत्रोदाहरन्ति प्राह्लादिर्ह वै कपिलो नामासुर आस । (२।६।३०)

अर्थ—(इतिहास में) कपिल 'प्रह्लाद का पुत्र' असुर था। ऐसा कहा जाता है ।

---

[ २४ ]

# ऋग्वेदिके विशिष्टपरिशिष्टग्रन्थे बृहद्देवतायामैतिह्यसन्दर्भाः

**यमपुत्रः संकुसुकः**

नाम्ना संकुसुको नाम यमपुत्रो जघन्यजः । (२।६१)

अर्थ—वैवस्वत यम का छोटा पुत्र संकुसुक था ।

**ऋषिकाः—**

घोषा गोधा विश्ववारा अपालोपनिषन्निषत् ।
ब्रह्मजाया जूहूर्नाम अगस्त्यस्य स्वसादितिः ।
इन्द्राणी चेन्द्रमाता च रामेशोर्वशी तथा ।
लोपामुद्रा च नद्यश्च यमी नारी च शश्वती ।

श्रीर्लाक्षा सार्पराज्ञी वाक् श्रद्धा मेधा च दक्षिणा।
रात्री सूर्या च सावित्री ब्रह्मवादिन्य ईरिताः॥ (२।८२-८४)

**अर्थ**—निम्न ऋषिका या ब्रह्मवादिनी स्त्रियां थीं घोषा, गोधा, विश्ववारा, अपाला, उपनिषत्, निषद्, ब्रह्मजाया जुहू, अगस्त्य की भगिनी-अदिति (देवमाता से पृथक्), इन्द्राणी (शची), इन्द्रमाता (देवमाता अदिति), रामेशा, उर्वशी, लोपामुद्रा, नदियां, यमी, नारी शश्वती, श्रीः, लाक्षा, सार्पराज्ञी, वाक् (सरस्वती), श्रद्धा, मेधा, दक्षिणा, रात्रि (भारद्वाजी) और सूर्या सावित्री (सविता की पुत्री)।

**दधीचा अथर्वणा अश्विभ्यां मधुविद्यादानम्—**

यः सहस्रतमो रश्मी रवेश्चन्द्रमुपाश्रितः।
सोऽपि त्वष्टारमेवाग्निं परं चेह च यन्मधु।
प्रादाद् ब्रह्मापि सुताय तदथर्वणः।
स चाभवदृषिस्तेन ब्रह्मणा दीप्तिमत्तरः।
तमृषिं निषिषेधेन्द्रो मैवं वोचः क्वचिन्मधु।
न हि प्रोक्ते मधुन्यस्मिञ्जीवन्तं त्वोत्सृज्याम्यहम्।
तमृषिं त्वाश्विनौ देवौ विविक्ते मध्वयाचताम्।
स च ताभ्यां तदाचष्टे यदुवाच शचीपतिः।
तमब्रूतां तु नासत्यावाश्व्येन सिरसा भवान्।
मध्वाशु ग्राहयत्वावां मेन्द्रश्च त्वावधीत्ततः।
आश्व्येन शिरसा तौ तु दध्यङ्ङाह यदाश्विनौ।
तदस्येन्द्रोऽहरत्स्वं तन्न्यधत्तामस्य यच्छिरः।
दधीचश्च शिरश्चाश्व्यं कृतं वज्रेण वज्रिणा।
पपात सरसो मध्ये पर्वते शर्यणावति॥

**अर्थ**—सूर्य की जो हजारवीं किरण चन्द्रमा में आश्रित है तथा पृथिवी तथा उसके ऊपर है, वही मधु है, वही त्वष्टा और अग्नि में निहित है। प्रसन्न होकर इन्द्र ने अथर्वा के पुत्र दध्यङ् को यह मधु (ब्रह्मविद्या) प्रदान किया और इस ब्रह्मविद्या से ऋषि और तेजस्वी होगये। (विद्या देने के पश्चात्) इन्द्र ने (अपने शिष्य) ऋषि दधीचि को मना किया कि इस मधुविद्या को कहीं बताना नहीं, यदि आपने इसको किसी को बताया तो मैं तुम्हें जीवित नहीं छोड़ूंगा।

तब देव अश्विनीकुमारों ने गुप्तरूप से मधुविद्या जानने की इच्छा की, ऋषि ने उनको इन्द्र की प्रतिज्ञा बताई। नासत्यों ने कहा—'आप हमको अश्वशिर द्वारा मधुग्रहण करायें। तब इन्द्र आपको नहीं मार सकेंगे।

अतः अश्वशिर द्वारा दध्यङ् ने अश्विनीदेवों को मधुविद्या पढ़ाई। अतः

इन्द्र ने दध्यङ् के शिर को काट दिया, परन्तु अश्विनों ने उनके (असली) शिर को पुनः लगा दिया।

इन्द्र द्वारा वज्र से कटा दध्यङ् का अश्वशिर शर्यणावत् पर्वत के सरोवर में गिरा।

**ऋभवः (देवत्रयी)—**

सुधन्वन आङ्गिरसस्यासन् पुत्रास्त्रयः पुरा।
ऋभुर्विभ्वा च वाजश्च शिष्यास्त्वष्टुश्च तेऽभवन्।
शिक्षयामास तांस्त्वष्टा त्वाष्ट्रं यत्कर्म किंचन।
परिनिष्ठितकर्माणो विश्वेदेवा उपाह्वयन्।
विश्वेषां ते ततश्चक्रुर्वाहनानि आयुधानि तु।
धेनुं सबर्दुघां चक्रुरमृतं सबरुरुच्यते।
बृहस्पतेरथाश्विभ्यां रथं दिव्यं त्रिबन्धुरम्।
इन्द्राय च हरी देवप्रहितेनाग्निनापि यत्।
एकं चमसमित्युक्ते आहेत्यथो दिवि।
उक्त्वा ततक्षुश्चमसान् यथोक्तं तेन हर्षिताः।
त्वष्टा च सविता चैव देवदेवः प्रजापतिः।
सर्वान् देवान् समामन्त्र्य अमृतत्वं ददुश्च ते ॥ (३।८३-८८)

अर्थ—पूर्वकाल में आंगिरस सुधन्वा (ऋषि) के—ऋभु, विभ्वा और वाज नाम के तीन पुत्र हुए, वे त्वष्टा के शिष्य बने। त्वष्टा ने उनको उस समस्त तक्षशास्त्र (Technonology) की शिक्षा दी जो कुछ भी शिल्पविज्ञान जानते थे। जब वे विज्ञान में दक्ष होगये तो विश्वेदेवों ने उन्हें (परीक्षार्थ) बुलाया। सौधन्वनों ने सभी देवों के लिये वाहनों और आयुधों का निर्माण किया। उन्होंने सबर्दुघा गाय का निर्माण किया, 'अमृत' को ही बृहस्पति का 'सबर' कहते हैं। पुनः उन्होंने अश्विनों के लिये त्रिबन्धुर रथ और इन्द्र के लिये दो अश्वों को बनाया। देवों द्वारा प्रेषित उनके पास अग्नि के माध्यम द्वारा भी उन्होंने अपना कौशल प्रकट किया। जब अग्नि ने कहा—'एक चमस के चार कर दो' और 'ज्येष्ठ' ने कहा तब हर्षित होकर एक 'चमस' के उन्होंने चार बना दिये।

तब त्वष्टा और देवदेव प्रजापति सविता ने सभी देवों को बुलाकर ऋभुओं को अमरत्व (देवत्व) प्रदान किया।

**शुनःशेपस्य दिव्यरथः—**

स्तूयमानः शश्वदिति प्रीतस्तु मनसा ददौ।
शुनःशेपाय दिव्यं तु रथं सर्वं हिरण्मयम् ॥ (३।१०३)

**अर्थ**—'शश्वत्' (ऋग्वेद १।३०।१६) शब्द से आरम्भ होनेवाली ऋचा द्वारा स्तुति की जाने पर मन से प्रसन्न होकर इन्द्र ने शुनःशेप को स्वर्णनिर्मित एक दिव्यरथ प्रदान किया।

**सव्य आङ्गिरसः—**

स्वयमिन्द्रसमं पुत्रमिच्छतोऽङ्गिरसो मुनेः।
वव्रचेव सव्यो भूत्वर्षेर्योगित्वात्पुत्रतां गतः॥ (३।११५)

**अर्थ**—इन्द्र के समान पुत्र की इच्छा करनेवाले अंगिरा ऋषि के, ऋषि के योग प्रभाव से स्वयं इन्द्र ही सव्य के रूप में पुत्र बन गये।

**त्रितकथा—**

त्रितं गास्त्वनुगच्छन्तं क्रूराः सालावृकीसुताः।
कूपे प्रक्षिप्य गाः सर्वास्तत एवापजह्रिरे॥
स तत्र सुषुवे सोमं मन्त्रविन्मन्त्रवित्तमः।
देवांश्चाह्वयत्सर्वांस्तच्छुश्राव बृहस्पतिः।
आगच्छतोऽथ तान्दृष्ट्वा क्व वसत्यस्य तत्त्वतः।
सर्वदृक्त्वं च वरुणस्यार्यम्णश्चेत्युपालभत्।
कूपेष्टकाभिर्व्रणितान्यङ्गान्येवाभवन्मम।
दृष्ट्वा सर्वानहं स्तौमि यद्यप्येको न पश्यति।
बृहस्पतिप्रचोदिता विश्वेदेवा गणास्त्रयः।
जग्मुस्त्रितस्य तं यज्ञं भागांश्च जगृहुः सह॥ (३।१३२-१३६)

**अर्थ**—गायों का अनुगमन करनेवाले त्रित को क्रूर सालावृकीपुत्रों (असुरों) ने कूये में डालकर उसकी समस्त गायें चुरा ले गये। त्रित ने वहीं (कूये में) सोम निकाला और सभी देवों को आह्वान किया। बृहस्पति ने उसके आह्वान को सुना। उनको आते देख उसने उपालम्भ किया—'वरुण और अर्यमा की सर्वदर्शी शक्ति कहां गई? कूप में मेरे अंग घायल होगये। मैं सभी देवों की स्तुति कर रहा हूं, परन्तु कोई भी मुझे देखता नहीं।

तदनन्तर बृहस्पति द्वारा प्रेषित विश्वेदेवों के तीन गणों (आदित्य, वसु और मरुतों) ने यज्ञ में आकर एक साथ भाग ग्रहण किया।

**कक्षीवान्, राजा स्वनयश्च—**

अधिगम्य गुरोर्विद्यां गच्छन् स्वनिलयं किल।
कक्षीवानध्वनि श्रान्तः सुष्वापारण्यगोचरः॥
तं राजा स्वनयो नाम भावयव्यसुतो व्रजन्।

क्रीडार्थं सानुयोऽपश्यत् सभार्यः स पुरोहितः।
अथैनं रूपसम्पन्नं दृष्ट्वा देवसुतोपमम्॥
कन्यादाने मतिं चक्रे वर्णगोत्रविरोधतः।
संबोध्यैनं स पप्रच्छ वर्णगोत्रादिकं ततः।
राजन्नाङ्गिरसोऽस्मीति कुमारः प्रत्युवाच तम्।
पुत्रोऽहं दीर्घतमस औचथ्यस्य ऋषेर्नृपः।
अथास्मै स ददौ कन्या दशाभरणभूषिताः।
तावतश्च रथाञ्छ्यावान् वीडवङ्गान्वै चतुर्भुजः।
वधूनां वाहनार्थाय धनकुप्यमजाविकम्।
निष्काणां वृषभाणां च शतं शतमदात्पुनः।
एतदुत्तरसूक्तेन शतमित्यादिनोदितम्।
शतमश्वाञ्छतं निष्कान् रथान् दश वधूमतः।
चतुर्भुजो गवां चैव सहस्रं षष्ट्युपाधिकम्।
स्वनयाद्भावयव्याद्यः कक्षीवान् प्रत्यपद्यत।
प्रतिगृह्य च तुष्टाव प्रातः पित्रे शशंस च।

अर्थ—गुरु से विद्या प्राप्त करने के पश्चात् घर जाते समय कक्षीवान् (औशिज=औतथ्य=औचथ्य) मार्ग में थककर सो गये। उसी समय राजा स्वनय (भावयव्य का पुत्र) अपनी सभा, पुरोहित और भार्या के साथ क्रीडार्थ कहीं जा रहा था। रूपसम्पन्न तथा देवपुत्र के समान कक्षीवान् को देखकर राजा ने वर्ण और गोत्र समान न होने पर उसे अपनी पुत्री प्रदान करने का विचार किया।

राजा ने उसे जगाकर उसका वर्ण और गोत्रादि पूछा—उस कुमार ने उत्तर दिया—'हे राजन्! मैं अंगिरा के वंश का हूं तथा उचथ्यपुत्र ऋषि दीर्घतमा का पुत्र हूं।

तब राजा स्वनय ने काक्षीवान् को अलंकृत दश कन्यायें प्रदान कीं, कन्याओं को ले जानेवाले दश रथ तथा उनमें जुते हुए चार-चार सबल अश्व तथा धन, वर्तन, भेड़ और बकरियां भी दीं। इनके अतिरिक्त उसने एक सौ निष्क (स्वर्णभूषण) और सौ वृषभ भी दिये। एक सौ अश्व, एक सौ निष्क, कन्याओं सहित दश रथ, चतुर्भुज रथ और साठ हजार गायें दी। तदनन्तर कक्षीवान् ने स्वनय भावयव्य की स्तुति की एवं प्रातः अपने पिता को समस्त वृत्तान्त सुनाया।

**स्वनय भावयव्यपत्नी रोमशा—**

प्रादात्सुतां रोमशां नाम नाम्ना बृहस्पतिर्भावयव्याय राज्ञे।
(३।१५६)

ततस्तमर्थं हरिवान् विदित्वा प्रियं सखायं स्वनयं दिदृक्षुः ।
अभ्याजगामाशु शचीसहायः प्रीत्यार्चयत्तं विधिनैव राजा ।
अभ्याजगामाङ्गिरसी च तत्र हृष्टा तयोः स चरणौ ववन्दे ।
इन्द्रः सखित्वादथ तामुवाच रोमाणि ते सन्ति न सन्ति राज्ञि ।
सा बालभावादथ तं जगाद उपोप मे शक्र परामृशेति ।
तां पूर्वया सान्त्व्य नृपः प्रहृष्टो अन्वव्रजत्साथ पतिं पतिव्रता: ।।

(४।१-३)

अर्थ—बृहस्पति आंगिरस ने राजा स्वनय भावयव्य (४।१-३) (भवयु का पुत्र) को अपनी पुत्री रोमशा प्रदान की (पत्नीरूप में), इस तथ्य को जानकर हरिवान् इन्द्र प्रिय सखा स्वनय को देखने के लिए उसके पास इन्द्राणी (शची) सहित वहां आये। राजा ने इन्द्र की विधिवत् अर्चना की। तब वहां बृहस्पतिपुत्री रोमशा आईं और इन्द्र तथा इन्द्राणी की चरण वन्दना की। सखीभाव से इन्द्र ने (मजाक में) पूछा— 'हे रानी ! तुम्हारे बाल हैं अथवा नहीं।' तब बालसुलभ (सहज) भाव से रानी ने 'उपोप मे' (ऋ० १।२६।७) ऋचा द्वारा कहा—'हे शक्र मुझे छूकर (मेरे बालों को) देखो। पूर्वा ऋचा द्वारा राजा ने रानी को सान्त्वना दी। तब उसने एक पतिव्रता की भांति पति का अनुगमन किया।

**दीर्घतमा मामतेयः तज्जन्मकथा —**

द्वावुचथ्यबृहस्पती ऋषिपुत्रौ बभूवतुः ।
आसीदुचथ्यभार्या तु ममता नाम भार्गवी ।
तां कनीयान् बृहस्पतिर्मैथुनायोपचक्रमे ।
शुक्रस्योत्सर्गकाले तु गर्भस्तं प्रत्यभाषत ।
इहास्मि पूर्वसंभूतो न कार्यः शुक्रसंगरः ।
तच्छुक्रप्रतिषेधं तु न ममर्ष बृहस्पतिः ।
स व्याजहार तं गर्भं तमस्ते दीर्घमस्त्विति ।
स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ।
य जातोऽभ्यतपद्देवान् अकस्मादन्धतां गतः ।
ददुर्देवास्तु तन्नेत्रे ततोऽनन्धो बभूव सः । (४।११-१५)

× × ×

जीर्णं तु दीर्घतमसं खिन्नास्तत्परिचारिणः ।
दासा बद्ध्वा नदीतोये दृष्टिहीनमवादधुः ।।
तत्रैकस्त्रैतनो नाम शस्त्रेणैनमपाहनत् ।
शिरश्चांसावुरश्च स्वयमेव न्यकृन्तत ।

हत्वा दीर्घतमास्तं तु पापेन महतावृत्तम् ।
आत्माङ्गान्यनुदच्चैव तत्रोदोन्मोहितो भृशम् ।
अङ्गदेशसमीपे तु तं नद्यः समुदक्षिपन् ।
अंगराजगृहे युक्ताम् उशिजं पुत्रकाम्यया ।
राज्ञा च प्रहितां दासीं भक्तां मत्वा महायशाः ।
जनयामास चोत्थाय कक्षीवत्प्रमुखानृषीन् ॥

अर्थ—उचथ्य और बृहस्पति नाम के दो ऋषिपुत्र थे। उचथ्य की भार्या ममता भार्गवी थी। कनिष्ठ बृहस्पति मैथुनार्थ ममता के पास गये। शुक्रोत्सर्ग के समय गर्भ ने उनसे कहा—'मैं पहिले से ही यहां उत्पन्न हूं। अतः तुम शुक्रमिश्रण मत करो। परन्तु बृहस्पति नहीं माना। अतः उसने गर्भ से कहा—'तुम दीर्घं तमस् (अन्धकार) वाले होगे। इसीलिये उचथ्यपुत्र का नाम 'दीर्घतमा' हुआ।

जन्म लेते ही वह अकस्मात् अन्धे होगये। उन्होंने देवों का तप किया। अतः (उत्तरकाल में) देवों ने उसे नेत्र (प्रकाश) दे दिये।

× × ×

दास परिचारकों ने खिन्न होकर उस वृद्ध और अन्धे दीर्घतमा को बांधकर नीचे नदी में फेंक दिया।

दासों में से एक त्रैतन नाम के परिचारक ने दीर्घतमा पर शस्त्र से प्रहार करना चाहा और ऐसा करते हुए उसने स्वयं अपना ही शिर, कन्धे और वक्ष काट डाले। (अथवा दीर्घतमा ने उसे मार डाला)।

महान् पाप में लिप्त उस दास का वध करने के पश्चात् दीर्घतमा ने जल में संज्ञाहीन अपने अंगों को हिलाया। नदी की धारा ने उन्हें बहाकर अंग देश के पास पहुंचा दिया। अंगराज के गृह में उशिज् की दासी थी। पुत्रप्राप्ति की आशा से दासी को राजा ने दीर्घतमा के पास भेजा। उस महातपा दीर्घतमा ने दासी की भक्ति को देखकर उसे उठाकर ऋषि कक्षीवान् आदि पुत्रों को उत्पन्न किया।

**इन्द्रागस्त्यसंवादः** इतिहासः पुरावृत्तम् ऋषिभिः परिकीर्त्यते—

समागच्छन्मरुद्भिस्तु चरन् व्योम्नि शतक्रतुः ।
दृष्ट्वा तुष्टाव तानिन्द्रस्ते चेन्द्रममृषयोऽब्रुवन् ।
तेषामगस्त्यः संवादं तपसा वेद तत्त्वतः ।
स तानभिजगामाशु निरुप्यैन्द्रं हविस्तदा ।
विज्ञायावेक्ष्य यद्भावम् इन्द्रो नेति तमब्रवीत् ।
न श्वो नाद्यतनं ह्यस्ति वेद कस्तद्यद्भुतम् ।

कस्यचित्त्वर्थसंचारे चित्तमेव विनश्यति ।
किं न इत्यब्रवीदिन्द्रम् अगस्त्यो भ्रातरस्तव ।
मरुद्भिः संप्रकल्पस्व वधोर्मा नः शतक्रतो ।
किं नो भ्रातरिति त्वस्याम् इन्द्रो मान्यमुपालभत् ।
अगस्त्यस्वरमित्यस्यां क्षुब्धमिन्द्रं प्रशामयत् ।
प्रादाद् संवननं कृत्वा तेभ्य एव च तद्धविः ।
सुते चकार सोमेऽथ तानिन्द्रः सोमपीथिनः ।
मरुद्भिः सह यत्रेन्द्रो मरुत्वांस्तत्र सोऽभवत् ॥ (४।४६-५६)

**अर्थ**—यहाँ पर ऋषियों द्वारा प्राचीन इतिवृत्तों के इतिहास कथित हैं। आकाश में भ्रमण करते हुए शतक्रतु (इन्द्र) मरुतों के साथ नीचे (पृथिवी पर) आये। उन्हें देखकर इन्द्र ने मरुतों की स्तुति की और मरुतों ने भी ऋषिरूप में इन्द्र को सम्बोधित किया। तब, अगस्त्य ऋषि इन्द्र के लिए हविःनिर्माण करके शीघ्रतापूर्वक वहां गये और उन्होंने तीन सूक्तों (ऋग्वेद १।१६६-१६८) द्वारा मरुतों की स्तुति की।

(ऋषि ने मरुतों के लिए भी हविः देने का विचार किया), तब अगस्त्य का भाव जानकर इन्द्र ने कहा—'वास्तव में न तो कल (आगामी) और न आज और जो कभी हुआ नहीं, उसे कौन जान सकता है?' अर्थसंचार की अनिश्चितता से मनुष्य का चिन्तन किया हुआ भी विनष्ट हो जाता है। तब अगस्त्य ने इन्द्र से कहा—'मरुद्गण आपके भ्राता हैं। अतः मरुतों (के लिये मेरी हविः) से आप सहमत हों। शतक्रतो! आप इनका वध न करें। 'क्या मरुत मेरे भ्राता हैं?' ऐसा कहकर इन्द्र ने अगस्त्य का उपालम्भ किया। तब अगस्त्य ने क्षुब्ध इन्द्र को शान्त किया। उसे सान्त्वना देकर और संवनन करके अगस्त्य ने मरुतों को हवि दी। सोम संवनन के पश्चात् इन्द्र ने मरुतों को सोमपान के लिये बुलाया—(उन्हें सोमपीथी बनाया)।

जहां जहां इन्द्र मरुतों के साथ गये, वहीं उन्हें मरुवत् (मरुत्वान्) कहा जाता है।

**अगस्त्यपत्नी लोपामुद्रा**—

ऋतौ स्नातामृषिर्भार्यां लोपामुद्रां यशस्विनीम् ।
उपजल्पितुमारेभे रहः संयोगकाम्यया ।
विदित्वा तपसा सर्वं तयोर्भावं रिरंसतोः ।
श्रुत्वैनः कृतवानस्मि ब्रह्मचार्युत्तमे जगौ ।
प्रशस्य तं परिष्वज्य गुरू मूर्ध्न्यवजघ्रतुः ।
स्मित्वैनमाहतुश्चोभावनागा असि पुत्रक ॥ (४।५७, ५९, ६०)

अर्थ—यशस्विनी ऋतुस्नात लोपामुद्रा पत्नी से एकान्त में संयोग (मैथुन) करने की इच्छा से ऋषि अगस्त्य ने बातचीत शुरु की थी कि तपस्वी शिष्य ने उनके कामभाव और कामवार्ता को सुन लिया।

शिष्य ने सोचा कि मैंने यह बात सुनकर पाप किया तो (वह गुरु से क्षमा मांगने लगा) तब अगस्त्य ने उस शिष्य की प्रशंसा की और उसका शिर सूंघा और हंसकर दोनों ने कहा—पुत्र ! तुम निष्पाप हो।

**शौनहोत्रो गृत्समदः, इन्द्रेण च धुनिचुमुर्योर्वधः—**

संयुज्य तपसात्मानम् ऐन्द्रं बिभ्रन्महद्वपुः।
अदृश्यत मुहूर्तेन दिवि व्योम्नि चेह च।
तमिन्द्रमिति मत्वा तु दैत्यौ भीमपराक्रमौ।
धुनिचुमुरिश्चोभौ सायुधावभिपेततुः।
विदित्वा स तयोर्भावमृषिः पापं चिकीर्षतोः।
यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत्।
उक्तेषु कर्मस्वैन्द्रेषु भीस्तावाशु विवेश ह।
इदमन्तमित्युक्त्वा ताविन्द्रस्तु निबर्हयत्।
निहत्य तौ गृत्समदमृषिं शक्रोऽभ्यभाषत।
यथेष्टं मां सखे पश्य प्रियत्वं ह्यागतोऽसि मे।
वरं गृहाण मत्तस्त्वम् अक्षयं चास्तु ते तपः।
प्रह्वस्तं प्रत्युवाचर्षिरस्माकं वदतांवरः। (४।६५।७१)
सखित्वाच्च पुनश्चैनमुवाच हरिवाहनः।
गृणन्मादयसे यस्मात् त्वमस्मानृषिसत्तम।
तस्माद् गृत्समदो नाम शौनहोत्रो भविष्यसि (४।७७-८८)

अर्थ—तप के द्वारा इन्द्र के साथ संयोग करके इन्द्र के ही समान शरीर धारण करते हुए गृत्समद ऋषि क्षण भर में आकाश और पृथिवी पर प्रकट हुए। भयंकर पराक्रमी दो दैत्य असुर धुनि और चुमुरि ने उनको इन्द्र समझकर उन पर आयुधों से आक्रमण किया। इन दोनों असुरों के पाप भाव को समझकर ऋषि ने 'यो जातः' (ऋ० २।१२) सूक्त द्वारा इन्द्र के कर्मों का कीर्तन किया। इन्द्र के कर्मों के कथन को सुनकर उन दोनों असुरों में भय का संचार होगया। अब इन्द्र ने उपयुक्त अवसर जानकर उन दोनों को मार डाला।

उनको मारने के पश्चात् शक्र ने गृत्समद से कहा—'हे सखे ! मैं तुम्हारा प्रिय हूं और क्योंकि तुम मेरी शरण में आये हो—मुझसे वर मांगो तथा तुम्हारा तप अक्षय हो। ऋषि ने झुककर कहा (हे देवराज ! तुम हमारे रक्षक हो)।

मैत्रीवश इन्द्र ने पुनः कहा—हे ऋषिश्रेष्ठ ! क्योंकि आप अपनी स्तुति द्वारा मुझको प्रसन्न या मस्त करते हो, अतः शुनहोत्र काशिराज के कारण तुम्हारा नाम 'शौनहोत्र गृत्समद' होगा ।

**गाथिपुत्रः विश्वामित्रः—**

प्रशास्य गां यस्तपसाभ्यगच्छद्
ब्रह्मर्षितामेकशतं च पुत्रान् ।
स गाथिपुत्रस्तु जगाद सूक्तं
सोमस्य मेत्याग्नेयं यत्परे च ।। (४।६५)

**अर्थ**—राज्य शासन करने के पश्चात् तपस्या द्वारा ब्रह्मर्षि पद और १०१ पुत्र प्राप्त करके गाथिपुत्र विश्वामित्र ने 'सोमस्य मा' (ऋ० ३।१) सूक्त तथा अन्य सूक्तों का प्रवचन किया ।

**सुदासः (पैजवनः) ऐक्ष्वाकस्तथा विश्वामित्रः—**

सुदासश्च महायज्ञे शक्तिना गाथिसूनवे ।
निगृहीतं बलाच्चेतः सोऽवसीदद्विचेतनः ।
तस्मै ब्राह्मीं तु सौरीं वा नाम्ना वाचं ससर्परीम् ।
सूर्यक्षयादिहाहृत्य ददुस्ते जमदग्नयः ।
कुशिकानां ततः सा वाग् अमतिं तामपाहनत् ।
उपेति चास्यां च कुशिकान् विश्वामित्रोऽनुबोधयत् ।
लब्ध्वा वाचं च हृष्टात्मा तानृषीन् प्रत्यपूजयत् । (४-११२–११५)

**अर्थ**—सुदास (पैजवन ऐक्ष्वाक) के एक महायज्ञ में शक्ति ने गाथिपुत्र (वंशज) विश्वामित्र (वैश्वामित्र) को बलपूर्वक चेतनारहित कर दिया। वह निःसंज्ञ (गैर होश) होकर दुःखी हुआ, किन्तु जमदग्नियों (जमदग्नि के वंशज ऋषियों) ने उसे सूर्य के आवास से लाकर ब्राह्मी सर्पिणी वाक् प्रदान की तब उस वाक् से कुशिकों (वैश्वामित्रों) की अभति (दुर्बुद्धि) को दूर कर दिया।

और 'उप' (ऋ० ३।५३।११) ऋचा द्वारा वैश्वामित्रों ने कुशिकों को पुनः चेतनायुक्त बनाया। वाक् को प्राप्त करके प्रसन्नचित्त वैश्वामित्र ने जमदग्नियों का पूजन किया।

**वामदेवस्येन्द्रविजयः—**

अन्वशाददितिः पुत्रम् इन्द्रमात्महितैषिणी ।
स जातमात्रो युद्धाय ऋषिमेवाजुहाव तु ।
योधयन्वामदेवस्तं कृत्वात्मनि बलं तथा ।
दिनानि दश रात्रीश्च विजिग्ये चैनमोजसा (४।१३१–१३२)

अर्थ—अपने हित के लिये ही अदिति ने अपने पुत्र इन्द्र को शान्त किया, किन्तु जन्म लेते ही इन्द्र ने ऋषि वामदेव (?) को युद्ध के लिए ललकारा। तब वामदेव ने अपने में बल का संचार करके दश दिन और दश रात्रियों तक युद्ध करके इन्द्र को परास्त किया।

**ऐक्ष्वाकस्त्र्यरुणस्त्रैवृष्णः, वृशो जानः पुरोहितश्च—**

ऐक्ष्वाकस्त्र्यरुणो राजा त्रैवृष्णो रथमास्थितः।
संजग्राहाश्वरश्मींश्च वृशो जानः पुरोहितः।
स ब्राह्मणकुमारस्य रथो गच्छञ्छिरोऽच्छिनत्।
एनस्वीत्यब्रवीच्चैव स राजैनं पुरोहितम्।
सोऽथर्वाङ्गिरसान्मन्त्रान् दृष्ट्वा संजीव्य तं शिशुम्।
क्रोधात्संत्यज्य राजानम् अन्यदेशं समाश्रितः।
हरोऽप्यग्नेर्ननाशास्य तस्यापक्रमणादृषेः।
अग्नौ प्रास्तानि हव्यानि न ह्यपचन्त कानिचित्।
तत प्रव्यथितो राजा सोऽभिगम्य प्रसाद्य तम्॥
आनीत्वा स वृशं जानं पुनरेव पुरोदधे।
स प्रसन्नो वृशोऽन्वैच्छद्धरमग्नेर्नृपक्षये।
अविन्दत पिशाची तां जायां तस्य भूपतेः।
निषण्णः स तया सार्धम् आसन्द्यां कशिपावपि।
तामुपामन्त्रयांचक्रे ब्रुवंस्तामभ्यभाषत।
वि ज्योतिषेति चोक्तायां सहसाग्निरुदज्वलत्।
सहमानः समायान्तं प्रकाशं च प्रकाशयन्।
पिशाचीमदहत्तां स यत्र चोपविवेश सा। (५।१३-२२)

अर्थ—ऐक्ष्वाक त्रिवृष्ण के पुत्र राजा त्र्यरुण अपने रथ पर बैठे हुए जा रहे थे और जनपुत्र वृश पुरोहित ने अश्वों की डोरियां पकड़ी हुई थीं। मार्ग में चलते हुए रथ ने एक ब्राह्मणपुत्र (शिशु) को काट दिया तब राजा ने पुरोहित से कहा—'तुम ही हत्यारे हो।' तब वृश जान पुरोहित ने आथर्वणमन्त्रों द्वारा बालक को पुनरुज्जीवित कर दिया तथा क्रोध में राजा को छोड़कर अन्यदेश में चले गये। ऋषि के चले जाने पर राजा के अग्नि का हर (ताप) नष्ट होगया। उसमें डाली कोई हवि पकती नहीं थी। तब दुःखी होकर राजा वृश जान के पास गये और उन्हें प्रसन्न करके लौटा लाये तथा पुनः अपना पुरोहित बनाया। प्रसन्न होकर वृशजान ने राजा के घर में ताप की खोज की तो राजा की पत्नी को पिशाची के रूप में पाया। उसके साथ आसनयुक्त कुर्सी पर बैठकर वृश ने पिशाची

को 'कम् एतं त्वम्' (ऋ० ५।२।२) मन्त्र द्वारा सम्बोधित किया। अग्नि के ताप को एक कुमार के रूप में बताते हुए उन्होंने पिशाची को सम्बोधित किया और जब उन्होंने 'वि ज्योतिषा' (ऋ० ५।२।९) कहा तब पास आते हुए को दूर भगाते हुए और प्रकाश को दिखाते हुए अकस्मात् अग्नि प्रकट हुई और पिशाची को जहां वह बैठी थी, वहीं अग्नि ने भस्म कर दिया।

**त्र्यरुणराज्ञो दानम्—**

अयुतं च गवां त्रीणि शतान्यथ च विंशतिम्।
सौवर्णशकटं गोभ्यां त्र्यरुणोऽदान्नृपोऽत्रये। (५।३०)

**अर्थ**—राजा त्र्यरुण (त्रैवृष्ण, ऐक्ष्वाक) ने अत्रि (आत्रेय) ऋषि को दश सहस्र तीन सौ बीस गायें और दो बैलों सहित एक सुवर्ण रथ दान में दिये।

**अश्वमेधभारतस्य त्रसदस्योश्च दानम्—**

अश्वमेधः शतं चोक्ष्णां—त्रसदस्युर्धनं बहु। (५।३१)

**अर्थ**—राजा अश्वमेध (भारत) ने सौ बैल और त्रसदस्यु (अज्ञात वंश) राजा ने बहुत सा धन दान दिया।

**रौशमऋणंचयस्य दानम्—**

अत्रेः सुतमृषिं बभ्रुम् आर्त्विजाय ऋणंचयः।
सहस्रदक्षिणे सोमे वव्रे तं सोऽप्ययोजयत्।
ददौ च रौशयो राजा सहस्राणि शतानि च।
तस्मै चत्वारि चत्वारि महावीरं च काञ्चनम्॥ (५।३३-३४)

**अर्थ**—राजा ऋणंचय (रौशम) ने अत्रि के पुत्र बभ्रु ऋषि को अपने सोम-यज्ञ में ऋत्विज् बनाया, जिसमें उसे एक सहस्र गायें दक्षिणा में दी गईं। बभ्रु ने ही ऋणंचय का यज्ञ किया। इस रौशम ऋणंचय ने चार सहस्र और चार सौ गायें और सुवर्णपात्र महावीर (यज्ञियपात्र) भी दान में दिया।

**अर्चनानाः (आत्रेयः) तत्पुत्रः श्यावाश्वो रथवीतिर्दार्भ्यश्च—**

राजर्षिरभवद्दार्भ्यो रथवीतिरतिविश्रुतः।
स यक्ष्यमाणो राजात्रिम् अभिगम्य प्रसाद्य च।
आत्मानं कार्यमर्थं च ख्यापयन् प्राञ्जलिः स्थितः।
अवृणीतर्षिमात्रेयम् आर्त्विज्यायार्चनानसम्।
स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये।
श्यावाश्वश्चात्रिपुत्रस्य पुत्रः खल्वर्चनानसः।
साङ्गोपाङ्गान्सर्वान् वेदान् यः पित्राध्यापितो मुदा।
अर्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत्॥

स्नुषा मे राजपुत्री स्याद् इति तस्य मनोऽभवत् ।
श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः ।
संयुजस्व मया राजन्निति याज्यं सोऽब्रवीत् ।।
श्यावाश्वाय सुतां दित्सुर्महिषीं स्वां नृपोऽब्रवीत् ।
किं ते मतमहं कन्यां श्यावाश्वाय ददामि हि ।
अत्रिपुत्रोऽदुर्बलो हि जामाता त्वावयोरिति ।
राजानमब्रवीत्सापि नृर्षिकुलजा ह्यहम् ।
नानृषिर्नौ तु जामाता नैष मन्त्रान् हि दृष्टवान् ।
ऋषये दीयतां कन्या वेदस्याम्बा भवेत्तदा ।
ऋषिर्मन्त्रदृशं वेदपितरं मन्यते ततः ।
प्रत्याचष्टे स तं राजा सह संमन्त्र्य भार्यया ।
अनृषिर्नैव जामाता कश्चिद्भवितुमर्हति ।
प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्तत ।
श्यावाश्वस्य तु कन्याया मनो नैव न्यवर्तत ।
ततस्तौ तु निवर्तेताम् उभावेवाभिजग्मतुः ।
शशीयसीं तरन्तं च पुरुमीढं च पार्थिवम् ।
तरन्तपुरुमीढौ तु राजानौ वैददश्व्यृषी ।
ताभ्यां तौ चक्रतुः पूजाम् ऋषिभ्यां नृपतिः स्वयम् ।।
ऋषिपुत्रं महिष्याश्च दर्शयामास तं नृपः ।
तरन्तानुमता चैव प्रादाद् बहुविधं वसु ।
अजाविकं गवाश्वं च श्यावाश्वाय शशीयसी ।
अत्रिं याज्यार्चितौ गत्वा पितापुत्रौ स्वमाश्रमम् ।
अभ्यवादयतामत्रिं महर्षिं दीप्ततेजसम् ।
श्यावाश्वस्य मनस्यासीन्मन्त्रस्यादर्शनादहम् ।
न लब्धवानहं कन्यां हन्त सर्वाङ्गशोभनाम् ।
अप्यहं मन्त्रदर्शी स्यां भवेद्धर्षो महान्मम ।
इत्यरण्ये चिन्तयतः प्रादुरासीन्मरुद्गणः ।
ददर्श संस्थितान्पार्श्वे तुल्यरूपानिवात्मनः ।
समानवयश्चैव मरुतो रुक्मवक्षसः ।
तांस्तुल्यवयसो दृष्ट्वा देवान् पुरुषविग्रहान् ।
श्यावाश्वो विस्मितोऽपृच्छत् के ष्ठेति मरुतस्तदा ।
ततस्तु मरुतो देवान् रुद्रसूनुरबुध्यत ।

सुताः स्तुत्या तया प्रीता गच्छन्तः पृश्निमातरः ।
अवमुच्य स्ववक्षेभ्यो रुक्मं तस्मै तदा ददुः ।
मरुत्सु तु प्रयातेषु श्यावाश्वः सुमहायशाः ।
रथवीतेर्दुहितरं अगच्छन्मनसा तदा ।
स सद्य ऋषिरात्मानं प्रवक्ष्यन् रथवीतये ।।
एतं मे स्तोत्रमित्याभ्यां दौत्ये रात्रीं न्ययोजयत् ।
रथवीतिमपश्यन्तीं संप्रेक्ष्यार्षेण चक्षुषा ।
रम्ये हिमवतः पृष्ठे एष क्षेतीति चाब्रवीत् ।
ऋषेर्नियोगमाज्ञाय देव्या रात्र्या प्रचोदितः ।
आदाय कन्यां तां दार्भ्य उपेयायार्चनानसम् ।
पादौ तस्योपसंगृह्य स्थित्वा प्रह्वः कृताञ्जलिः ।
रथवीतिरहं दार्भ्य इति नाम शशंस ह ।
मया संगतिमिच्छन्तं त्वां प्रत्याचक्षि पुरा ।
तत्क्षमस्व नमस्तेऽस्तु मा च मे भगवन् क्रुधः ।
ऋषेः पुत्रः स्वयमृषिः पितासि भगवन्नृषेः ।
हन्त प्रतिगृहाणेमां स्नुषामित्येवमब्रवीत् ।
पाद्यार्घ्यमधुपर्कैश्च पूजयित्वा स्वयं नृपः ।
शुक्लमश्वशतं दत्त्वा अनुजज्ञे गृहान् प्रति ।
शशीयसीं तरन्तं च पुरुमीढं च पार्थिवम् ।
षड्भिः सनदिति स्तुत्वा जगामर्षिरपि क्षयम् ।। (५।७१-८१)

अर्थ—(इतिहास में) रथवीति नाम का एक प्रसिद्ध राजर्षि था। यज्ञ करने की इच्छा से वह अत्रि=(अर्चनानस् आत्रेय) ऋषि के पास गया। अपना तथा अपने कार्य का प्रयोजन बताकर जब वह हाथ जोड़कर खड़ा हुआ, तब उसने ऋत्विक्कर्म हेतु अर्चनाना आत्रेय को चुना। वह ऋषि अपने पुत्र के साथ यज्ञ-सिद्धि हेतु राजा के पास आये! उनके पुत्र का नाम श्यावाश्व था। उसको पिता ने हर्षपूर्वक वेद और वेदांगों का अध्ययन कराया था। अर्चनाना ऋषि ने अपने पुत्र के साथ जाकर राजा का यज्ञ सम्पन्न कराया।

जब यज्ञ चल रहा था, तब उसने राजा की यशस्विनी पुत्री को देखा। ऋषि के मन में विचार आया कि राजा की पुत्री मेरी पुत्रवधू बने। तब तक श्यावाश्व का मन भी उस पर आसक्त हो चुका था। ऋषि ने याजक (राजा) से कहा—'हे राजन्! आप मेरे साथ सम्बद्ध हो जाओ।' श्यावाश्व को अपनी पुत्री देने की इच्छा से राजा ने अपनी महिषी (महारानी) से पूछा—'तुम्हारा क्या मत

है ? क्या मैं कन्या को श्यावाश्व को दे दूं।' क्योंकि आत्रेय हमारे लिए एक दुर्बल जामाता नहीं होगा। तब रानी ने कहा—'मैं राजर्षियों के कुल में उत्पन्न हुई हूं। जो ऋषि नहीं है, वह हमारा जामाता नहीं होना चाहिये। इस श्यावाश्व ने मन्त्रों का दर्शन नहीं किया है। कन्या किसी ऋषि को ही दी जाय, इस प्रकार वह वेदमाता होगी क्योंकि मन्त्रद्रष्टा को वेदपिता कहा गया है।

अपनी पत्नी के साथ परामर्श करने के पश्चात् राजा ने आत्रेय से कहा — 'जो ऋषि नहीं है, वह हमारा जामाता नहीं हो सकता। राजा के द्वारा अस्वीकृति मिलने पर ऋषि यज्ञ समाप्त होने पर लौट आये। किन्तु श्यावाश्व का मन कन्या से नहीं लौटा। इस प्रकार दोनों लौटे। वे दोनों शशीयसी, तरन्त और राजा पुरुमीढ़ से मिले। तरन्त और पुरुमीढ़ ऋषि— दोनों राजा विददश्व के पुत्र थे। दोनों राजाओं ने ऋषि और ऋषिपुत्र का पूजन किया। राजा तरन्त ने ऋषिपुत्र का अपनी महारानी को दर्शन कराया और तरन्त की अनुमति से रानी शशयसी ने प्रचुर धन, भेड़-बकरियां, गायें और अश्व श्यावाश्व को दिये। इस प्रकार याजकों से सम्मानित होकर पिता-पुत्र अपने आश्रम आये।

श्यावाश्व के मन में था कि मैंने किसी मन्त्र का दर्शन नहीं किया, अतः मैं सर्वांगसुन्दरी कन्या को प्राप्त नहीं कर सका। यदि मैं मन्त्रदर्शी हो जाऊं तो मुझे महान् हर्ष होगा।

जब श्यावाश्व ने वन में इस प्रकार चिन्तन किया तब उसके सम्मुख मरुद्-गण प्रकट हुए। उसने अपने पास में ही अपने रूप के तुल्य सुवर्णवक्ष मरुतों को देखा। पुरुषरूपी तथा आयु में समान देखकर विस्मित श्यावाश्व ने पूछा—'के ष्ठ' 'कौन हो' और वह जान गया कि ये रुद्र के पुत्र मरुद्गण हैं। स्तुति की जाने पर और उन स्तुतियों से प्रसन्न होकर पृश्निपुत्र मरुद्गण जब जाने लगे तो उन्होंने अपने गले से स्वर्णनिष्क उतारकर ऋषिपुत्र को दे दिया। जब मरुद्गण वहां से चले गये तब महायशस्वी श्यावाश्व विचारों से वे रथवीति के पास पहुंच गये। उसने अपने को सद्य ऋषि सिद्ध करने के हेतु 'एतं मे स्तोमम्' सूक्त द्वारा रात्रि (भारद्वाजी) को दौत्यकर्म के लिए नियुक्त किया। रथवीति को न देखने वाली रात्रि को आर्षनेत्रों से देखकर 'एष क्षेति' मन्त्र द्वारा कि वह हिमालय के रम्यपृष्ठ पर रहते हैं। ऋषि की आज्ञा से रात्रि द्वारा प्रेरित दार्भ्य रथवीति कन्या को लेकर अर्चनाना के पास गये और उनसे क्षमा मांगते हुए बोले—'मैं दर्भ का पुत्र रथवीति हूं। मेरे साथ सम्बन्ध करने की आपकी इच्छा को मैंने अस्वीकार कर दिया था। आप मुझे क्षमा करें। मैं आपको नमस्कार करता हूं, आप क्रुद्ध न हों। आप ऋषिपुत्र, स्वयं ऋषि और ऋषिपिता हैं। कृपया, इस कन्या को

पुत्रवधू के रूप में स्वीकार कीजिये। राजा ने ऐसा कहकर स्वयं ही पाद्य, अर्घ्य और मधुपर्क द्वारा उनका पूजन किया। साथ ही उन्हें एक सौ सफेद घोड़े प्रदान करके घर जाने की अनुमति चाही। ऋषि ने 'सनत्' इत्यादि से आरम्भ करके शशीयसी, तरन्त और पुरुमीढ़ की स्तुति की और घर गये।

**सप्तवध्रिः; अश्वमेधो भारतश्च—**

सप्त कृत्वापराधान्वै विफले दारसंग्रहे।
ऋषिः कृतोऽश्वमेधेन भारतेनेति श्रुतिः।
तमष्टमेऽपराधे तु वृक्षद्रोण्यां स पार्थिवः।
ऋषीरे ह विनिक्षिप्य स्कन्नं रात्रौ न्यधारयत्।
सोऽश्विनाविति सूक्तेन तुष्टावर्षिः शुभस्पती।
तौ तं तस्मात्समुद्धृत्य चक्रतुः सफलं पुनः।

**अर्थ**—इतिहास है कि सात बार विफल हो जाने पर भरतवंशी राजा अश्वमेध ने (सप्तवध्रि) ऋषि को पुनः नियुक्त किया, क्योंकि वह पुत्रविहीन था। फिर आठवीं बार विफल हो जाने पर राजा ने ऋषि को वृक्षद्रोणी में रखकर एक गर्त में फेंककर वहीं पड़ा रहने दिया। वह रात्रि भर वहीं पड़े रहे। तब ऋषि ने सूक्त द्वारा शुभस्पती अश्विनौ की स्तुति की। उसे गर्त से ऊपर निकाल कर मरुतों ने पुनः उसे सफल कर दिया।

**भृग्वंगिरसोरत्रेश्च जन्मकथा—**

त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः।
आहरत्सहितः साध्यैर्विश्वैर्देवैः सहेति च।
तत्र वाग्दीक्षणीयायाम् आजगाम शरीरिणी।
तां दृष्ट्वा युगपत्तत्र कस्यस्य वरुणस्य च।
शुक्रं चस्कन्द तद्वायुरग्नौ प्रास्यद्यदृच्छया।
ततोऽर्चिभ्यो भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः।
प्रजापतिं सुतौ दृष्ट्वावागम्याभ्यभाषत।
आभ्यामृषिस्तृतीयोऽपि भवेदत्रैव मे सुतः।
प्रजापतिस्तथेत्युक्तः प्रत्यभाषत भारतीम्।
ऋषिरत्रिस्ततो जज्ञे सूर्यानलसमद्युतिः॥ (५।९७-१०१)

**अर्थ**—प्रजापति (वरुण) ने प्रजा की इच्छा से साध्यों और विश्वेदेवों के साथ तीन वर्ष का यज्ञसत्र किया। उस समय दीक्षा के अवसर पर शरीरिणी वाक् वहां आई। उसे देखकर प्रजापति और वरुण का शुक्र स्खलित होगया। उनकी इच्छा से वायु ने उस शुक्र को अग्नि में छोड़ दिया। तब ज्वालाओं से

भृगु (अथर्वा) और अंगारों से अंगिरा। दो पुत्रों को देखकर और स्वयं भी देखकर वाक् ने प्रजापति (वरुण) से कहा—'इन दो के अतिरिक्त एक 'तृतीय' भी मेरा पुत्र उत्पन्न हो। इस प्रकार प्रजापति ने भारती से कहा—ऐसा ही होगा। तब सूर्य और अग्नि के समान तेज वाले 'अत्रि' ऋषि उत्पन्न हुए।

**बृहस्पतिभरद्वाजौ—**

योऽङ्गारेभ्य ऋषिर्जज्ञे तस्य पुत्रो बृहस्पतिः।
बृहस्पतेर्भारद्वाजो विदथीति य उच्यते ॥ (५।१०२)

**अर्थ**—जो ऋषि अंगारों से उत्पन्न हुए, उन अंगिरा के पुत्र बृहस्पति थे। बृहस्पति के पुत्र थे—'भरद्वाज' जो 'विदथि' भी कहे जाते हैं।

**अभ्यावर्ती चायमानः प्रस्तोकः साञ्जयो भरद्वाजश्च—**

अभ्यावर्ती चायमानः प्रस्तोकश्चैव साञ्जयः।
आजग्मतुर्भरद्वाजं जितौ वारशिखैर्युधि।
अभिगम्योचतुस्तौ तं प्रसाद्याख्याय नामनी।
युधि वारशिखैर्ब्रह्मन्नावां विद्धि विनिर्जितौ।
भवेत्पुरोहितावावां क्षत्रबन्धूञ्जयेमहि।
क्षत्रं तदपि विज्ञेयं ब्रह्म यत्पाति शाश्वतम् ॥
ऋषिस्तौ तु तथेत्युक्त्वा पायुं पुत्रमभाषत।
अधर्षणीयौ शत्रूणां कुरुष्वैतौ नृपाविति। (५।१२४-१२७)
भरद्वाजोऽभिस्तुष्टाव पीतस्तेन पुरन्दरः।
अभ्यावर्तिनमभ्येत्य हर्युपीयानदीतटे।
सहितश्चायमानेन जघानैताञ्छचीपतिः।
तौ तु वारशिखाञ्जित्वा ततोऽभ्यावर्तिसाञ्जयौ ॥
भरद्वाजाय गुरवे ददतुर्विविधं वसु।
भरद्वाजश्च गर्गश्च दृष्टाविन्द्रेण वै पथि।
द्वयान् प्रस्तोक इत्यादिभिर्दानं तद्वै शशंसतुः ॥ (५।१३७-१४०)

**अर्थ**—अभ्यावर्ती चायमान और प्रस्तोक साञ्जय—दो राजा युद्ध में वारशिखों से पराजित होकर भरद्वाज ऋषि के पास आये। ऋषि को प्रसन्न करके वे बोले—'हे ब्रह्मन्! हमको युद्ध में वारशिखों ने पराजित कर दिया है अतः यह जानो! आप हमारे पुरोहित बनें जिससे हम नीच क्षत्रियों (दस्यु=म्लेच्छों) को जीत सकें। उसे ही 'क्षत्र' मानना चाहिए जो सदा 'ब्रह्म' की रक्षा करता है।

उन दोनों राजाओं से 'तथास्तु' कहकर भरद्वाज ऋषि ने अपने पुत्र 'पायु' से कहा—'हे पुत्र! इन दोनों राजाओं को अपराजेय बना दो।' अपने पिता से

'हां' कहकर पायु ने उनको पृथक्-पृथक् 'जीमूत' सूक्त (ऋ० ६।७५) द्वारा अभिषिक्त किया।

भरद्वाज ने चायमान की सहायतार्थ इन्द्र की स्तुति की। इमसे प्रसन्न होकर शचीपति पुरन्दर (इन्द्र) हर्युपीया नदी के तट पर चायमान के पास आये और उसको साथ लेकर शत्रुओं का वध किया।

वारशिखों को जीतने के पश्चात् अभ्यावर्ती चायमान और प्रस्तोक साञ्जंय ने गुरु भरद्वाज को प्रचुर धन दिया। मार्ग में इन्द्र ने गर्ग और भरद्वाज को देखा और 'द्वयान्' (ऋ० ६।२७।८) और 'प्रस्तोक' (ऋ० ६।४७।२२) से प्रारम्भ ऋचाओं द्वारा उस दान की प्रशंसा की।

**कश्यपमारीचः द्वादश आदित्याश्च—**

प्राजापत्यो मरीचिर्हि मारीचः कश्यपो मुनिः।
तस्य देव्योऽभवञ्जाया दाक्षायण्यस्त्रयोदश।
अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः।
क्रोधा विश्वा वरिष्ठा च सुरभिर्विनता तथा।
कद्रूश्चैवेति दुहितृः कश्यपाय ददौ स च।
तासु देवासुराश्चैव गन्धर्वोरगराक्षसाः।
वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः।
तत्रैका त्वदितिर्देवी द्वादशाजनयत्सुतान्।
भगश्चैवार्यमांशश्च मित्रो वरुण एव च।
धाता चैव विधाता च विवस्वांश्च महाद्युतिः।
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते॥ (५।१४३।१४८)

अर्थ—प्रजापति के पुत्र मरीचि हुए, मरीचि के पुत्र (या वंशज) कश्यप मुनि थे। दक्ष की तेरह पुत्रियां कश्यप की पत्नियां हुईं—अदिति, दिति, दनु, काला, दनायु, सिंहिका, मुनि, क्रोधा, विश्वा, वरिष्ठा, सुरभि, विनता और कद्रू! इनका विवाह दक्ष ने कश्यप से किया। इन कश्यप से ही देव, असुर, गन्धर्व, नाग, राक्षस, सुपर्ण (पक्षी) तथा अन्य मनुष्य जातियां उत्पन्न हुईं।

इनमें से एक अदिति देवी ने बारह पुत्रों को जन्म दिया (जो अदिति के पुत्र होने से आदित्य कहलाये)—भग, अर्यमा, अंश, मित्र, वरुण, धाता, विधाता, महातेजस्वी विवस्वान्, त्वष्टा, पूषा, इन्द्र और बारहवें विष्णु।

**मित्रावरुणाभ्यामगस्त्यवसिष्ठयोर्जन्म—**

द्वन्द्वं तस्यास्तु तज्जज्ञे मित्रश्च वरुणश्च ह।
तयोरादित्ययोः सत्रे दृष्ट्वाऽप्सरसमुर्वशीम्॥

रेतश्चस्कन्द तत्कुम्भे न्यपतद्वसतीवरे।
तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ।
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः।
बहुधा पतिते शुक्रे कलशेऽथ जले स्थिते।
स्थले वसिष्ठस्तु मुनिः संभूत ऋषिरुत्तमः।
कुम्भे त्वगस्त्यः संभूतो जले मत्स्यो महाद्युतिः।
उदियाय ततोऽगस्त्यः शम्यामात्रो महायशाः।
मानेन संमितो यस्मात् तस्मान्मान्य इहोच्यते।
यद्वा कुम्भादृषिर्जातः कुम्भेनापि मीयते।
कुम्भ इत्यभिधानं तु परिमाणस्य लक्ष्यते॥
ततोऽप्सु गृह्यमाणासु वसिष्ठः पुष्करे स्थितः।
सर्वत्र पुष्करं तत्र विश्वेदेवा अधारयन्।
उत्थाय सलिलात्तस्मात् अथ तेपे महत्तपः।
नामास्य गुणतो जज्ञे वसतेः श्रेष्ठ्यकर्मणः।
अदृश्यमृषिभिर्हीन्द्रं सोऽपश्यत्तपसा पुरा।
सोमभागानथो तस्मै प्रोवाच हरिवाहनः।
ऋषयो वा इन्द्रमिति ब्राह्मणात्तद्धि दृश्यते।
वसिष्ठश्च वासिष्ठाश्च ब्राह्मणा ब्रह्मकर्मणि।
सर्वकर्मसु यज्ञेषु दक्षिणीयतमास्तथा॥ (५।१४९-१५८)

**अर्थ**—वरुण और मित्र युग्म रूप से अदिति से उत्पन्न हुए। इनमें से इन दोनों आदित्यों ने अप्सरा उर्वशी को एक यज्ञसत्र में देखा तब उनका शुक्र स्खलित होगया और जल से भरे कुम्भ में गिर पड़ा और रातभर वहां पड़ा रहा। उसी क्षण वहां दो वीर्यवान्, तपस्वी ऋषि अगस्त्य और वसिष्ठ उत्पन्न होगये।

क्योंकि यह वीर्य विविध रूपों से कुम्भ, जल और स्थल पर गिरा था, अतः ऋषिश्रेष्ठ वसिष्ठ स्थल पर उत्पन्न हुए और अगस्त्य कुम्भ में तथा महाद्युतिमान् मत्स्य जल में उत्पन्न हुए।

अगस्त्य शम्यामात्र (खूंट के बराबर) उदित हुए। उनको मान से सीमित किए जाने के कारण उनका यहां 'मान्य' नाम पड़ा। इस ऋषि का कुम्भ से जन्म हुआ था और कुम्भ द्वारा नापा गया। कुम्भ नाम एक परिमाण का भी है, (अतः मान्य या कुम्भज नाम हुआ।)

जब जलों को ग्रहण किया जा रहा था तब वसिष्ठ एक पुष्कर (कमलपत्र) पर खड़े पाये गये। तब विश्वेदेवों ने चारों ओर से उस पुष्कर को पकड़ लिया।

जल से निकलने के कारण वसिष्ठ ने महान् तप किया। इनका नाम गुणों के आधार पर श्रेष्ठ कर्मों के अर्थवाली 'वस्' धातु से बना।

वसिष्ठ ने ही तप के द्वारा इन्द्र को देखा जो अन्य ऋषियों के लिए अदृश्य थे। हरिवाहन इन्द्र ने इनको सोमभागों को प्राप्त करने के लिए कहा—'ऋषयो वा इन्द्रम्' इत्यादि ब्राह्मणग्रन्थों के वचनों से यह ज्ञात होता है।

वसिष्ठ और वासिष्ठ ब्राह्मण सभी प्रकार के यज्ञकर्मों में दक्षिणा प्राप्त करने के लिए सर्वश्रेष्ठ माने जाते हैं।

**सुदासो पैजवनस्य (ऐक्ष्वाकस्य) दानम्—**

न किः सुदास इत्यस्यां दानं पैजवनस्य तु।
वसिष्ठेन चतुर्भिस्तु द्वे नप्तुरिति कीर्तितम्॥ (५।१६२)

**अर्थ**—'नकिः सुदासः' (ऋ० ७।३२।१०) से तथा 'द्वे नप्तुः' (ऋ० ७।१८।२२-२५) से आरम्भ चार ऋचाओं में वसिष्ठ (वासिष्ठ—अज्ञातनामा) द्वारा पैजवन सुदास (ऐक्ष्वाक) के दान का उल्लेख है।

**वरुणगृहे वसिष्ठः सारमेयश्च**

वरुणस्य गृहान् रात्रौ वसिष्ठः स्वप्न आचरत्।
प्राविवेशाथ तं तत्र श्वा नदन्नभ्यधावत।
क्रन्दन्तं सारमेयं स धावन्तं दष्टुमुद्यतम्।
यदर्जुनेति च द्वाभ्यां सान्त्वयित्वा व्यसुष्वपत्।
स तं प्रस्वापयामास जनमन्यं च वारुणम्।
ततस्तु वरुणो राजा स्वैः पाशैः प्रत्यबध्यत।
स बद्धः पितरं सूक्तैश्चतुर्भिरित उत्तरैः॥
अभितुष्टाव धीरेति मुमोचैनं ततः पिता।
ध्रुवासु त्वेति चोक्तायां पाशा अस्मात्प्रमोचिरे॥ (६।११-१५)

**अर्थ**—रात्रि के समय वसिष्ठ वरुण के घर आये और सोये। जब वसिष्ठ ने प्रासाद के अन्दर प्रवेश करना चाहा, तब वरुण का कुत्ता उन पर भौंका। काटने के लिए दौड़ने वाले और भौंकनेवाले कुत्ते को शान्त करते हुए 'यद् अर्जुन' (ऋ० ७।५५।२-) से आरम्भ दो ऋचाओं द्वारा उसे सुला दिया तथा उन्होंने वरुण के अन्य जनों को भी सुला दिया। तब राजा वरुण ने वसिष्ठ को अपने पाशों में बांध लिया। पाशबद्ध होने पर वसिष्ठ ने 'धीर' से आरम्भ होनेवाले चार सूक्तों (ऋ० ७।८६-८९) से वरुण की स्तुति की। तब उनके पिता ने उन्हें मुक्त कर दिया।

'ध्रुवासु त्वा' (ऋ० ७।८८।७) मन्त्र के कहने पर उनके पाश खुल गये।

**नाहुषः (ययातिः) सरस्वती च—**

राजा वर्षसहस्राय दीक्षिष्यन्नाहुषः पुरा।
चचारैकरथेनेमां ब्रुवन् सर्वाः समुद्रगाः।
यक्ष्ये वहत भागान्मे द्वन्दशो वाथ वैकशः।
प्रत्यूचुस्तं नृपं नद्यः स्वल्पवीर्या कथं वयम्।
वहेम भागान् सर्वांस्ते सत्रे वार्षसाहस्रिके।
सरस्वतीं प्रपद्यस्व सा ते वक्ष्यति नाहुष।
तथेत्युक्त्वा जगामाशु आपगां स सरस्वतीम्।
सा चैनं प्रतिजग्राह दुदुहे च पयोघृतम्॥

**अर्थ**— पूर्वकाल में राजा नाहुष (ययाति) ने एक सहस्र वार्षिक यज्ञ में दीक्षित होने की इच्छा से पृथिवी की सभी नदियों से यह कहते हुए कि 'मैं यज्ञ करने वाला हूं, इसके लिए या तो पृथक्-पृथक् अथवा इकट्ठा अपना भाग वहन करो।' रथ में बैठकर घोषणा करते रहे। नदियों ने राजा को उत्तर दिया— 'हम अत्यल्पशक्तिवाली हैं अतः आपके भागों को कैसे वहन कर सकती हैं ? अतः हे नाहुष ! आप सरस्वती की शरण में जाइये। वह तुम्हारे कार्यभार को वहन कर सकेगी।' 'ऐसा ही होगा' यह कहकर वह जल्दी ही सरस्वती नदी के पास गये और नदी ने उनका स्वागत किया तथा दूध और घी का दोहन किया।

**वसिष्ठः सौदासाश्च—**

ऋषिर्ददर्श राक्षोघ्नं पुत्रशोकपरिप्लुतः।
हते पुत्रशते तस्मिन् सौदासैर्दुःखितस्तदा।
हते पुत्रशते तस्मिन् वसिष्ठो दुःखितस्तदा।
रक्षाभूतेन शापात्तु सुदासेनेति वै श्रुतिः (६।२८, ३४)

**अर्थ**—जब सौदासों (पैजवन सुदास ऐक्ष्वाक के पुत्रों) द्वारा वसिष्ठ (वासिष्ठ अज्ञातनामा, शक्ति के पिता) ने पुत्रों के शोक से परिपूर्ण और सन्तप्त होकर राक्षसों के नाश के लिए राक्षोघ्नसूक्त का दर्शन किया।

उस समय वसिष्ठ (वासिष्ठ) ऋषि सुदास (सौदास कल्माषपाद) द्वारा वध किये जाने पर दुःखी थे, जो (सौदास) एक शाप के कारण राक्षस बन गये थे ऐसा इतिहास (श्रुति) में प्रसिद्ध है।

**कण्वप्रगाथयोः प्रसंगः—**

कण्वश्च प्रगाथश्च घोरपुत्रौ बभूवतुः।
गुरुणा तावनुज्ञातावूषतुः सहितौ वने।
वसतोस्तु तयोस्तत्र कण्वपत्न्याः शिरः स्वपत्।

कृत्वा कनीयान् कण्वस्य उत्संगे नान्वबुध्यत ।
शप्तुकामस्तु तं कण्वः क्रुद्धः पापाभिशङ्कया ।
बोधयामास पादेन दिधक्षन्निव तेजसा ।
विदित्वा तस्य तं भावं प्रगाथः प्राञ्जलिः स्थितः ।
मातृत्वे च पितृत्वे च वरयामास तावुभौ ।
स घोरो वाथ काण्वो वा वंशजैर्बहुभिस्सह ।
ददर्शान्यैश्च सहित ऋषिर्मण्डलमष्टमम् ।। (६।३५-३९)

**अर्थ**—घोर (ऋषि) के दो पुत्र थे—कण्व और प्रगाथ। गुरु से आज्ञा लेकर वे एक वन (आश्रम) में रहने लगे। वहां रहते हुए एक दिन प्रगाथ कण्वपत्नी की गोद में अपना शिर रखकर सो रहे थे और जागे नहीं, पाप की शंका से क्रुद्ध होकर शाप देने की इच्छा से कण्व ने पैर से जगाया मानो वह उसे भस्म कर देंगे। उनके भाव को जानकर प्रगाथ ने हाथ जोड़कर खड़े होकर उन दोनों का अपनी माता और पिता के रूप में वरण किया।

इस प्रकार घोर अथवा कण्व के पुत्र के रूप में प्रगाथ ने अपने वंशजों के साथ अष्टम मण्डल का दर्शन किया।

**दानस्तुतयः**—

शिक्षेदृग्भ्यां तु काश्यस्य बिभिन्दोः परिकीर्तितम् ।
पाकस्थाम्नस्तु भोजस्य चतुर्भिर्यमिति स्तुतम् ।। (६।४२)
ऐन्द्राणामिह सूक्तानाम् उत्तमस्योत्तमे तृचे ।
दानं राज्ञः कुरुङ्गस्य स्थूरं राध इति स्तुतम् ।। (६।४४)
इत्यर्धर्चो द्वृचश्चान्त्यः कशोर्दानस्तुतिः स्मृता ।। (६।४५)
तृचे तु शतमित्यस्मिन् दानं तैरिन्दिरं स्मृतम् ।। (६।४७)
आग्नेये स्तुती राजर्षेस्त्रसदस्योरदादिति ।
पञ्चाशतं वधूनां च गवां तिस्रश्च सप्ततीः ।
अश्वोष्ट्राणां तथैवासौ वासांसि विविधानि च ।
रत्नानि वृषभं श्यावं तासामग्रेसरं पतिम् ।
कृत्वा दारानृषिर्गच्छन्निन्द्रायैतच्छशंस च ।
वयं सूक्तेन शक्रं च प्रीतस्तेन पुरन्दरः ।।
ऋषे वरं वृणीष्वेति प्रह्वस्तमृषिरब्रवीत् ।
काकुत्स्थकन्याः पञ्चाशद् युगपद् रमये प्रभो ।
कामतो बहुरूपत्वं यौवनं चाक्षयां रतिम् ।
शंखनिधिं पद्मनिधिं मद्गृहेष्वनपायिनीम् ।।
प्रासादान् विश्वकर्मासौ सौवर्णांस्त्वत्प्रसादतः ।

कुर्वीत पुष्पवाटीं च पृथक्तासां सुरद्रुमः।
मा भूत् सपत्नीस्पर्धासां सर्वमस्त्विति चाब्रवीत् ॥ (५।५१-५७)

× × ×

आखुराजोऽभिमानाच्च प्रहर्षितमनाः स्वयम्।
संस्तुतो देववच्चित्र ऋषये तु गवां ददौ।
अयुतानां सहस्रं वै निजग्राह स्तुवन्नृषिः॥
ऋषिं चोवाच हृष्टात्मा नाहमर्हाम्यृषे स्तुतिम्।
तिर्यग्योनौ समुत्पन्नो देवताः स्तोतुमर्हसि ॥ (६।६०-६२)
वैश्वदेव्यो वरू राजा यच्चाददावृषये वसु। (६।६६)
वशामाश्व्याय यत्प्रादात् कानीतस्तु पृथुश्रवाः।
तदत्र संस्तुतं दानं आ स इत्येवमादिभिः॥ (६।७९-८०)
द्विचत्वारिंशकात्प्रीतास्त्रिशोकाय पुरन्दरः।
गिरिं निकृत्य वज्रेण गा ददावसुरैर्हृताः॥
ऋक्षाश्वमेधयोरत्र पञ्च दानस्तुतिः पराः।
आत्मानमात्मना स्तुत्वा स्तौति दानं श्रुतर्वणः।
आत्मदानाभिसंबन्धात् परुष्णीं च महानदीम् ॥ (६।८१-८२)

**काश्यः बिभिन्दुः**—'शिक्ष' से प्रारम्भ दो ऋचाओं (ऋ० ७।२।४१-४२) में काशिराज बिभिन्दु का कीर्तन है।

**पाकस्थामा भोजः**—'यम्' से आरम्भ चार ऋचाओं में (ऋ० ८।३।२१-२४) पाकस्थामा भोज की दानस्तुति है।

**कुरुङ्गदान**—अन्तिम ऐन्द्रसूक्त (ऋ० ८।४।१०) से आरम्भ होकर तीन ऋचाओं में राजा कुरुङ्ग की दानस्तुति है।

**चैद्यकशुः**—अर्धर्चा और अन्तिम दो ऋचाओं (८।५।३८-३९) में कशु (चैद्य) की दानस्तुति है।

**तैरिन्दरः**—'शतम्' से आरम्भ तीन ऋचाओं (ऋ० ८।६।४६-४८) में तिरिन्दर राजा की दानस्तुति है।

**त्रसदस्यु द्वारा सोभरि काण्व को दान**—'अदात्' से आरम्भ दो ऋचाओं (ऋ० ८।१९।३७-३९) में राजर्षि त्रसदस्यु की दानस्तुति कथित है।

त्रसदस्यु (ऐक्ष्वाक) ने कण्व सोभरि को पचास वधुयें, सत्तर गाय, सत्तर ऊंट और सत्तर अश्व तथा विभिन्न प्रकार के वस्त्र, रत्न, भूरे बैल और अग्रेसर (अग्रणी) ऋषभपति दान में दिये।

विवाह करने के पश्चात् जाते हुए मार्ग में ऋषि सोभरि काण्व ने इसका

इन्द्र से वर्णन 'वयम्' (ऋ० ८।२१) से शक्र की स्तुति की। इससे प्रसन्न होकर शचीपति ने कहा—'हे ऋषे ! वर मांगो।' तब ऋषि ने नम्रतापूर्वक उत्तर दिया—'प्रभो ! मैं काकुत्स्थ (ऐक्ष्वाक) वंशीय पचास कन्याओं के साथ रमण करूं और कामरूप बना सकूं तथा यौवन, अक्षय रति, शंखनिधि और पद्मनिधि सदा मेरे घर में रहें। आपकी कृपा से प्रसिद्ध विश्वकर्मा मेरे लिए सौवर्ण प्रासादों और उनमें प्रत्येक में पृथक्-पृथक् कल्पवृक्ष तथा पुष्पवाटिकाओं का निर्माण करें तथा सपत्नियों में कोई द्वेषभाव न हो।

**आखुराज चित्र का दान**—जब सोभरि काण्व ऋषि अपने पुत्र पौत्रों के साथ कुरुक्षेत्र में यज्ञ कर रहे थे तब चूहों ने उनके अन्न एवं हविष्यों का भक्षण कर लिया। ऋषि ने इन्द्र, चित्र (आखुराज) और सरस्वती की वन्दना की। तब आखुराज चित्र ने स्तुति से प्रसन्न होकर ऋषि को अनेक प्रकार की सहस्रों गायें प्रदान कीं। उनकी स्तुति करके ऋषि ने दान ग्रहण किया। हृष्टात्मा चित्र ने ऋषि से कहा—'मैं पशुयोनि में उत्पन्न होने के कारण ऋषि द्वारा स्तुषेय्य नहीं हूं। अतः आप देवों की स्तुति करें।

**वरु राजा** – वैश्वदेवस्तुति के पश्चात् 'ऋजम्' से आरम्भ तीन ऋचाओं में राजा वरु द्वारा ऋषि को दी गई सम्पत्ति का उल्लेख है।

**कानीत पृथुश्रवा**—कानीत पृथुश्रवा राजा ने वश अश्व्य ऋषि को जो दान दिया वह 'आ स' (ऋ० ८।४६।२१-२४) चार ऋचाओं में कथित है।

**त्रिशोक**—बयालीस ऋचाओं के सूक्त (ऋ० ८।४५) से प्रसन्न होकर पुरन्दर (इन्द्र) ने अपने वज्र से पर्वत को तोड़कर असुरों द्वारा चुराई गायें त्रिशोक को लाकर वापस दीं।

**ऋक्ष (पौरव) और अश्वमेध भारत**—ऋग्वेद सूक्त (८।६८) की पांच ऋचाओं में ऋक्ष और अश्वमेध (भरतवंशीय राजाओं) की दानस्तुतियां हैं।

**श्रुतर्वा राजा की दानस्तुति**—अपनी स्तुति करके श्रुतर्वा के दान की और उसने जो कुछ पाया उस सन्दर्भ में महानदी परुष्णी की स्तुति है।

**सावर्णिर्मनुः**—

यं सवर्णा मनुर्नाम लेभे पुत्रं विवस्वतः। (६।६८)

**अर्थ**—सवर्णा ने विवस्वान् से मनु (सावर्णि) नाम का पुत्र पाया।

**व्यंसदानवस्य स्वसा**—

अध इत्यत्र कन्या तं स्त्रीलिङ्गे नेन्द्रमब्रवीत्।<br>
स हि तां कामयामास दानवीं पाकशासनः।<br>
ज्येष्ठां स्वसारं व्यंसस्य तस्यैव युवकाम्यया॥ (६।७६-७७)

अर्थ—'अधः' (ऋ० ८।३३।१९) में एक कन्या ने स्त्रीलिंग से युक्त इन्द्र को सम्बोधित किया है। क्योंकि पाकशासन ने इन्द्र युवक की कामना से व्यंसदानव की ज्येष्ठ बहिन से प्रेम किया।

**अपाला (आत्रेयी)**—

अपालात्रिसुता त्वासीत् कन्या त्वग्दोषिणी पुरा।
तामिन्द्रश्चकमे दृष्ट्वा विजने पितुराश्रमे।
तपसा बुबुधे सा तु सर्वमिन्द्रचिकीर्षितम्।
उदकुम्भं समादाय अपामर्थं जगाम सा।
दृष्ट्वा सोममपामन्ते तुष्टावर्चा वने तु तम्।
कन्या वारिति चैतस्याम् एषोऽर्थः कथितस्ततः।
सा सुषाव मुखे सोमं सुत्वेन्द्रं चाजुहाव तम्।
असौ य एषीत्यनया पपाविन्द्रश्च तन्मुखात्।
अपूपांश्चैव सक्तूंश्च भक्षयित्वा स तद् गृहात्।
ऋग्भिस्तुष्टाव स चैनं जगादैनं तृचेन तु।
सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचम्।
रथछिद्रेण तमिन्द्रः शकटस्य युगस्य च।
प्रक्षिप्य निश्चकर्ष त्रिः सुत्वक् सा तु ततोऽभवत्॥ (६।९९-१०५)

**अर्थ**—अत्रि (आत्रेय-अज्ञातनामा) की पुत्री अपाला चर्मरोग से पीड़ित थी। अपने पिता के निर्जन आश्रम में उसे एकाकी देखकर इन्द्र उस पर आसक्त होगया। अपाला ने अपने तपोज्ञान से इन्द्र की इच्छा-चेष्टा को जान लिया। जल-कुम्भ लेकर वह पानी लेने गई। जल के अन्त में सोम को देखकर उसने वन में एक ऋचा से उसकी स्तुति की। उसने सोम को मुख में चबाकर सोम निकाला। ऋचा से इन्द्र को बुलाया। इन्द्र ने उसके घर से अपूप और सक्तू खाकर उसके मुख के सोम का पान किया। अपाला ने उसकी स्तुति की। तीन ऋचाओं (ऋ० ८।९१।४-६) द्वारा उससे कहा हे शक्र! मुझे सुलोम और सुत्वच कर श्रेष्ठ अंग वाली बनाओ। उसकी स्तुति से इन्द्र प्रसन्न हुए।

रथछिद्र, शकट और युग में डालकर इन्द्र ने उसे तीन बार खींचा और तब वह सुत्वच (सुन्दरी) होगई।

**सोमपलायनस्य प्रसंगः**—

अपक्रम्य तु देवेभ्यः सोमो वृत्रभयार्दितः।
नदीमंशुमतीं नाम्ना अभ्यतिष्ठत्कुरून् प्रति।

सोऽब्रवीन्नेति तं शक्रः स्वर्ग एव बलाद् बली।
इयाय देवानादाय तं पपुर्विधिवत्पुरा ॥ (६।११०, ११४)

**अर्थ**—वृत्र के भय से सोम देवों के पास से नदी अंशुमती के तट पर कुरु देश के पास भाग गया। इन्द्र ने उससे कहा—'नहीं' वह उसे लेकर स्वर्ग चले गये जहां देवों ने उसे विधिपूर्वक पीया।

**इन्द्राय विष्णुसाहाय्यम्**—

तं नाशकद्धन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत्।
वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्य ममान्तिके।
उद्यतस्य वज्रस्य द्यौर्ददातु ममान्तरम्।
तथेति विष्णुस्तच्चक्रे द्यौश्चास्य वितरं ददौ ॥ (६।११२-१२३)

**अर्थ**—जब इन्द्र वृत्र को नहीं मार सका तो वह विष्णु के पास आकर बोला—'हे विष्णो ! मैं वृत्र को मारूंगा ! आप पराक्रम करके मेरे पार्श्व में खड़े हों। मेरे उद्यत वज्र को आकाश स्थान देगा। 'तथास्तु' कहकर विष्णु ने वैसा ही किया और द्यौ ने स्थान भी दिया।

**शिशुराङ्गिरस ऋषिः (अपान्तरतमा नवमव्यासः, सारस्वतः दाधीचो वा)**

अनावृष्ट्यां तु वर्तन्त्यां पप्रच्छर्षीञ्छचीपतिः।
काले दुर्गे महत्यस्मिन् कर्मणा केन जीवथ।
शकटं शाकिनी गावः कृषिरस्यन्दनं वनम्।
समुद्रः पर्वतो राजा एवं जीवामहे वयम्।
स्तुवन्नेव शशंसास्य ऋषिराङ्गिरसः शिशुः।
नानानीयेन सूक्तेन ऋषीणामेव संनिधौ।
तानिन्द्रस्त्वाह सर्वांस्तु तपध्वं सुमहत्तपः।
न ह्यृते तपसः शक्यम् इदं कृच्छ्रं व्यपोहितुम्।
अथ ते वै सर्वे तपस्तेपुः स्वर्गजिगीषवः ॥ (६।१३७-१४१)

**अर्थ**—घोर अनावृष्टि के होने पर इन्द्र ने ऋषियों से पूछा—'इस महान् विपत्ति में तुम किस प्रकार जीवित हो ?' (उनमें से एक ने कहा)—'शकट, खेत, पशु, कृषि, न बहनेवाला जल, वन, समुद्र, पर्वत, राजा—इन साधनों से हम जीवित हैं।'

इन्द्र की स्तुति करते हुए (दध्यङ्) आंगिरस के पुत्र शिशु ऋषि ने अन्य ऋषियों की उपस्थिति में 'नाननम्' (ऋ० ९।११२) सूक्त द्वारा उनको बताया। तब इन्द्र ने सबसे कहा—आप सब लोग महान् तप करें, क्योंकि तप के बिना इस संकट से मुक्ति नहीं हो सकती।' अतः स्वर्ग की आकांक्षा से उन सबने तप किया।

**विश्वरूपस्त्रिशिराः पुरोहितः—**

अभवत्स हि देवानां पुरोधाः प्रियकाम्यया ।
असुराणां स्वसुः पुत्रस्त्रिशिरा विश्वरूपधृक् ॥
तमृषिं प्रहितं त्विन्द्रो देवेषु बुबुधेऽसुरैः ॥ (६।१४९-५०)
सोऽस्य वज्रेण तान्याशु शिरांसि त्रीण्यच्छिनत् ।

**अर्थ**—असुरों का प्रियकार्य साधने के लिये असुरों की बहिन का पुत्र त्रिशिरा विश्वरूप देवों का पुरोहित बन गया। इन्द्र को जब असुरों की चालाकी का पता चला तो इन्द्र ने वज्र से उसके तीन शिर काट डाले।

**यमयमी संवादः—**

मैथुनार्थमभीप्सन्तीं प्रत्याचष्टे यमीं यमः ।
तदो चिदिति संवादो विवस्वत्सुतयोस्तयोः (६।१५४)

**अर्थ**—मैथुन का निवेदन करनेवाली यमी को यम ने मना कर दिया। 'ओ चित्' (ऋ० १०।१०) सूक्त में विवस्वत् के इन दोनों पुत्रों (पुत्र पुत्रियों) के मध्य संवाद का उल्लेख है।

**सरण्यूकथा—**

अभवन्मिथुनं त्वष्टुः सरण्यूस्त्रिशिराः सह ।
स वै सरण्यूं प्रायच्छत् स्वयमेव विवस्वते ।
ततः सरण्वां जज्ञाते यमयम्यौ विवस्वतः ।
तौ चाप्युभौ यमावेव ज्यायांस्ताभ्यां वै यमः । (६।१६२-१६३)
सृष्ट्वा भर्तुः परोक्षं तु सरण्यूः सदृशीं स्त्रियम् ।
निक्षिप्य मिथुनं तस्याम् अश्वा भूत्वोपचक्रमे ।
अविज्ञानाद्विवस्वांस्तु तस्यामजनयन्मनुम् ।
राजर्षिरभवत्सोऽपि विवस्वानिव तेजसा ।
स विज्ञाय त्वपक्रान्तां सरण्यूमश्वरूपिणीम् ।
त्वाष्ट्रीं प्रति जगामाशु वाजी भूत्वा सलक्षणः ।
सरण्यूश्च विवस्वन्तं विदित्वा हयरूपिणीम् ।
मैथुनायोपचक्राम तां च तत्रारुरोह सः ।
ततस्तयोस्तु वेगेन शुक्रं तदपतद्भुवि ।
उपाजिघ्रच्च सा त्वश्वा तच्छुक्रं गर्भकाम्यया ।
आघ्रातमात्राच्छुक्रात्तु कुमारौ संबभूवतुः ।
नासत्यश्चैव दस्रश्च यौ स्तुतावाश्विनाविति ॥ (७।१-६)

**अर्थ**—त्वष्टा के सरण्यू और त्रिशिरा—दो युगल सन्तान उत्पन्न हुई।

मुनिश्च दुन्दिभिश्चैव सुता द्युतिमतस्तु वै ॥

X X X

ज्योतिष्मतः कुशद्वीपे सप्तैते सुमहौजसः ।
उद्भिदो वेणुमांश्चैव स्वैरथो लवणो धृतिः ।
षष्ठः प्रभाकरश्चैव सप्तमः कपिलः स्मृतः ॥

X X X

शाल्मलस्येश्वराः सप्त पुत्रास्ते तु वपुष्मतः ।
श्वेतश्च हरितश्चैव जीमूतो रोहितस्तथा ।
वैद्युतो मानसश्चैव सुप्रभः, सप्तमस्तथा ॥

X X X

सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरा नृपाः ।
ज्येष्ठः शान्तभयस्तेषां सप्त वर्षाणि तानि वै ।
तस्माच्छान्तभयश्चैव शिशिरस्तु सुखोदयः ।
आनन्दश्च ध्रुवश्चैव क्षेमकश्च शिवस्तथा ॥

X X X

आग्नीध्रं ज्येष्ठदायादं काम्यापुत्रं महाबलम् ।
प्रियव्रतोऽभ्यषिञ्चत्तं जम्बूद्वीपेश्वरं नृपम् ॥
तस्य पुत्रा बभूवुर्हि प्रजापतिसमौजसः ।
ज्येष्ठो नाभिरिति ख्यातस्तस्य किंपुरुषोऽनुजः ।
हरिवर्षस्तृतीयस्तु चतुर्थोऽभूदिलावृतः ।
रम्यः स्यात् पंचमः पुत्रो हरिन्मान् षष्ठ उच्यते ।
कुरुस्तु सप्तमस्तेषां भद्राश्वो ह्यष्टमः स्मृतः ।
नवमः केतुमालस्तु तेषां देशान्निबोधत ।

X X X

नाभेस्तु सर्गं वक्ष्यामि हिमाह्वे तान्निबोधत ।
नाभिस्त्वजनयत् पुत्रं मेरुदेव्यां महाद्युतिः ।
ऋषभं पार्थिवश्रेष्ठं सर्वक्षत्रस्य पूर्वजम् ॥
ऋषभाद् भरतो जज्ञे वीरः पुत्रशतात्मजः ।

**अर्थ**—मुनि और दुन्दुभि द्युतिमान् के पुत्र थे ।

**कुशद्वीपेश्वर ज्योतिष्मान् द्वारा विभाजन**—कुशद्वीप में ज्योतिष्मान् के ये सात पुत्र अधिपति थे—उद्भिद, वेणुमान्, स्वैरथ, लवण, धृति, प्रभाकर और सातवां कपिल ।

**शाल्मलिद्वीपेश्वर वपुष्मान् द्वारा विभाजन**—शाल्मलि द्वीप के विभिन्न भागों के सात अधिपति वपुष्मान् के ये सात पुत्र थे—श्वेत, हरित, जीमूत, रोहित, वैद्युत, मानस और सुप्रभ।

**प्लक्षद्वीपेश्वर मेधातिथि द्वारा विभाजन**—मेधातिथि के सात पुत्र प्लक्षद्वीप के सात वर्षों (भागों) के अधिपति हुए—ज्येष्ठ, शान्तमय, शिशिर, सुखोदय, ध्रुव, क्षेमक और शिव।

**जम्बूद्वीपेश्वर आग्नीध्र द्वारा विभाजन**—प्रियव्रत ने अपने ज्येष्ठपुत्र, काम्या के पुत्र आग्नीध्र, जो महाबली था, को जम्बूद्वीप के साम्राज्य पर अभिषिक्त किया।

आग्नीध्र के पुत्र प्रजापतियों के समान तेजस्वी थे—ज्येष्ठ पुत्र का नाम 'नाभि' था। उसका अनुज था 'किंपुरुष', तृतीय था—हरिवर्ष, चतुर्थ था इलावृत, पंचम हुआ रम्य, षष्ठ था हरिन्मान् और सातवां था कुरु, आठवां हुआ भद्राश्व तथा नवम था केतुमाल, ये ही नौ देशों के नाम हुए।

**नाभि और ऋषभ**—ज्येष्ठ आग्नीध्रपुत्र नाभि 'हिम' (या भारत) नाम के वर्ष (देश) के अधिपति थे। उनकी सन्तति सुनो।

तेजस्वी नाभि ने मरुदेवी से ऋषभदेव को उत्पन्न किया जो सभी क्षत्रिय राजाओं में सर्वश्रेष्ठ और उनके पूर्वज थे।

**ऋषभपुत्र और भारतवर्ष संज्ञा**—ऋषभ से भरत उत्पन्न हुए, जिनके (भरत के) सौ पुत्र थे।

सोऽभिषिच्याथ भरतं पुत्रं प्राव्राज्यमास्थितः।
हिमाह्वं दक्षिणं वर्षं भरताय न्यवेदयत्।
तस्मात्तद् भारतं वर्षं तस्य नाम्ना विदुर्बुधाः॥
भरतस्यात्मजो विद्वान् सुमतिर्नाम धार्मिकः।
बभूव तस्मिंस्तद्राज्यं भरतः संन्योयोजयत्।
पुत्रसंक्रामितश्रीको वनं राजा विवेश ह॥
तेजसस्तु सुतश्चापि प्रजापतिरमित्रजित्।
तेजस्यात्मजो विद्वानिन्द्रद्युम्न इति श्रुतः।
परमेष्ठी सुतश्चाथ निधने तस्य शोभनः।
प्रतिहारकुले तस्य नाम्ना जज्ञे तदन्वयात्।
प्रतिहर्तेति विख्यातो जज्ञे तस्यापि धीमतः।
उद्गीथस्तस्य पुत्रोऽभूत् प्रतापिश्चापि तत्सुतः।
प्रतापेस्तु विभुः पुत्रः पृथुस्तस्य सुतो मतः।

पृथोश्चापि सुतो नक्तो नक्तस्यापि गयः स्मृतः ।।
गयस्य तु नरः पुत्रो नरस्यापि सुतो विराट् ।
विराट्सुतो महावीर्यो धीमांस्तस्य सुतोऽभवत् ।
धीमतश्च महान् पुत्रो महतश्चापि भौवनः ।
भौवनस्य सुतस्त्वष्टा अरिजस्तस्य चात्मजः ।।
अरिजस्य रजः पुत्रः शतजिद्रजसो मतः ।
तस्य पुत्रशतं त्वासीद्राजानः सर्वं एव ते ।।
विश्वज्योतिःप्रधाना यैस्तैरिमा वर्द्धिताः प्रजाः ।।

(वायुपुराण १।३३ अध्याय)

**अर्थ**—ऋषभ ने (यथासमय) भरत को राज्य पर अभिषिक्त करके प्रव्रज्या (संन्यास-श्रमणधर्म) ग्रहण की ।

जिसका पूर्व नाम 'हिमवर्ष' था, वह ऋषभदेव ने भरत को समर्पित कर दिया और तब से इस देश का नाम भरत के नाम से 'भारतवर्ष' प्रसिद्ध हुआ ।

**भरतोत्तर वंश**—भरत का पुत्र विद्वान् और धार्मिक सुमति था । (यथासमय) भरत ने उसको अपने राज्य का उत्तराधिकारी बनाया । पुत्र को राज्य देने के पश्चात् राजा भरत ने तपःहेतु वन में आश्रय लिया ।

सुमति का पुत्र तेजस हुआ जो प्रजापति और शत्रुविजेता था । तेजस का पुत्र विद्वान् 'इन्द्रद्युम्न' इतिहास में प्रसिद्ध है । उसका पुत्र हुआ 'परमेष्ठी', उसका पुत्र हुआ 'शोभन', तदनन्तर उसके कुल में 'प्रतिहार' नाम का राजा हुआ । उस विद्वान् का पुत्र हुआ प्रतिहर्त्ता । उसका पुत्र हुआ उन्नेता, उसका पुत्र हुआ भुव, उसका पुत्र हुआ उद्‌गीथ, उसका पुत्र हुआ प्रतापि, प्रताषि का विभु, उसका पुत्र पृथु, उसका पुत्र नक्त, उसका पुत्र गय था । गय का पुत्र हुआ नर, उसका पुत्र हुआ विराट् । उसका पुत्र हुआ महावीर्य, उसका पुत्र हुआ धीमान्, उसका पुत्र हुआ 'महान्' । महान् का पुत्र हुआ भौवन, उसका पुत्र था त्वष्टा, उसका पुत्र हुआ अरिज, उसका पुत्र हुआ रज और उसका पुत्र था शतजित् ।

रज के सौ पुत्र थे, जो सभी राजा हुए, उनमें 'विश्वज्योति' प्रधान थे । इन सभी ने विपुल प्रजा की वृद्धि की ।

---

# द्वितीयोऽध्यायः

## (ऋषिवंशः) स्वायम्भुवेऽन्तरे

**भृगुवंशः—**

भृगोः ख्यातिर्विजज्ञेऽथ ईश्वरौ सुखदुःखयोः ।
देवौ धाताविधातारौ मन्वन्तरविचारणौ ।
तयोर्ज्येष्ठा तु भगिनी देवी श्रीर्लोकभावनी ।
सा तु नारायणं देवं पतिमासाद्य शोभनम् ।
द्वे कन्ये स्मृते भार्ये विधातुर्धातुरेव च ।
आयतिर्नियतिश्चैव तयोः पुत्रौ दृढव्रतौ ।
षण्डश्च मृकण्डुश्च ब्रह्मकोशौ सनातनौ ।
मनस्विन्यां मृकण्डोश्च मार्कण्डेयो बभूव ह ।
सुतो वेदशिरास्तस्य मूर्द्धन्यायामजायत ।
पीवर्यां वेदशिरसः पुत्रा वंशकराः स्मृताः ।
मार्कण्डेया इति ख्याता ऋषयो वेदपारगाः ॥
षण्डस्य च पुण्डरीकायां द्युतिमानात्मजोऽभवत् ।
उत्पन्नौ द्युतिमन्तश्च सृजवानश्च तावुभौ ॥ (वायु पुराण २७)

अर्थ—(स्वायम्भुव या प्रथम) भृगु ने पत्नी ख्याति से सुख-दुःख के नियन्ता देव धाता और विधाता नाम के दो पुत्रों को उत्पन्न किया, उनकी ज्येष्ठ पुत्री श्री (लक्ष्मी) थी,[1] उसने शोभायमान नारायण (वामनविष्णु) को पतिरूप में प्राप्त किया ।

आयति और नियति नाम की दो कन्यायें क्रमशः विधाता और धाता की पत्नियां हुई, उनके पुत्र दृढ़वती और सनातन वेद के निधान षण्ड[2] और मृकण्डु हुए ।

---

(१) यहां पुराण पाठ भ्रष्ट हुआ है । लक्ष्मी, भृगु वारुणि (भृगु द्वितीय) की पुत्री थी, पुराण अध्येता, इस तथ्य को सम्यक् रूप से समझ सकते हैं ।

(२) षण्ड—यह नाम भी शुद्ध या ठीक नहीं, षण्ड, उत्तरकालीन भार्गव शुक्र का पुत्र था ।

मृकण्डु के पुत्र (और वंशज) मार्कण्डेय कहलाये। उनके पुत्र वेदशिरा मार्कण्डेय हुए, जिनकी माता का नाम मूर्द्धनी था।

वेदशिरा मार्कण्डेय के वंशकर पुत्र 'पीवरी' पत्नी द्वारा उत्पन्न हुए जो सभी **'मार्कण्डेय'** कहलाते थे।

**षण्ड** द्वारा पुण्डरीका से 'द्युतिमान्' पुत्र उत्पन्न हुआ। उसके पुत्र द्युतिमन्त और सृजवान् हुए।

**च्यवनवंशः (ववस्वतेऽन्तरे)**—

भृगुर्महर्षिर्भगवान् ब्रह्मणा वै स्वयम्भुवा।
वरुणस्य क्रतौ जातः पावकादिति नः श्रुतम्।
भृगोः सुदयितः पुत्रश्च्यवनो नाम भार्गवः॥
च्यवनस्य दायादो प्रमतिर्नाम भार्गवः।
प्रमतेरप्यभूत् पुत्रो घृताच्यां रुरुरित्युत।
रुरोरपि सुतो जज्ञे शुनको वेदपारगः॥

(महा० आदिपर्वणि ५।८-१०)

**अर्थ**—महर्षि भृगु (द्वितीय जन्म में) स्वयम्भू ब्रह्मा (वरुण आदित्य) द्वारा वरुण (अपने) यज्ञ में अग्नि से उत्पन्न हुए, ऐसा इतिहास प्रसिद्ध है।

भृगु का प्रिय पुत्र च्यवन भार्गव था। च्यवन का पुत्र हुआ प्रमतिभार्गव। प्रमति द्वारा घृताची (अज्ञात अप्सरा) से रुरु (भार्गव) उत्पन्न हुआ और रुरु का पुत्र हुआ 'शुनक' वेदों का महान् विद्वान्। (शुनक के वंशज 'शौनक' कहलाये)।

**गोत्रप्रवराः भार्गवाः**—

भृगुश्च च्यवनश्चैव आप्नुवानस्तथैव च।
और्वश्च जमदग्निश्च वात्स्यो दण्डिर्नडायनः।
वैगायनो वीतिहव्यः पैलश्चैवात्र शौनकः।
शौनकायनः जीवन्तिरावेदः कार्पणिस्तथा।
वैहीनरिर्विरूपाक्षो रौहित्यायनिरेव च।
वैश्वानरिस्तथा नीलो लुब्धः सावर्णिकश्च सः॥
विष्णुः पौरोऽपि बालाकिरैलिकोऽनन्तभागिनः।
भृतभार्गयमार्कण्डः जविनो वीतिनस्तथा॥
मण्डमाण्डव्यमण्डूकफेनपास्तमितस्तथा।
स्थलपिण्डः शिखावर्णः शार्कराक्षिस्तथैव च।
जालधिः सौधकिः क्षुभ्यः कुत्सन्यो मौद्गलायनः।
कर्मायनो देवपतिः पाण्डुरोचि सगालवः।
साङ्कृत्यश्चातकिः सार्पिर्यज्ञपिण्डायनस्तथा।

गार्ग्यायनो गायनश्च ऋषिर्गोर्हायनस्तथा ।
गोष्ठायनो वात्स्यायनो वैशम्पायन एव च ।
वैकर्णिनिः शाङ्करवो याज्ञतेयिभ्राष्ट्रायनिः ।।
लालाटिर्नाकुलिश्चैव लौक्षिण्यपरिमण्डलौ ।।
आलुकिः सौचकिः कौत्सस्तथान्यः पैङ्गलायनिः ।
सात्यायनिर्मार्गायनिः कौटिलिः कौचहस्तिकः ।।
नैकजिह्वो जिह्मकश्च व्यद्याद्यो लौहवैरिणः ।
शारद्वतिकनेतिष्यौ लोगाक्षिश्चलकुण्डलः ।
वागायनिश्चानुमतिः पूर्णभागतिकोऽसकृत् ।। मत्स्यपुराणे १९४)

अर्थ–(प्रमुख गोत्रप्रवर्तक भार्गव ऋषि या ब्राह्मण इस प्रकार थे)—भृगु, च्यवन, आप्नुवान्, और्व, जमदग्नि, वात्स्य, दण्डि, नडायन, वैगायन, वीतिहव्य, पैल, शौनक, शौनकायन, जीवन्ति, रावेद, कार्पणि, वैहीनरि, विरूपाक्ष, रौहित्यायनि, वैश्वानरि, नील, लुब्ध, सावर्णिक, विष्णु, पौर, बालाकि, ऐलिक, अनन्तभागी, भृतमार्गेय, मार्कण्ड, जवी, वीति, मण्ड, माण्डव्य, मण्डूक, फेनप, तमित, स्थलपिण्ड, शिखावर्ण, शार्कराक्षि, जालधि, सौधकि, क्षुभ्य, कुत्सन्य, मौद्गलायन, कर्मायन, देवपति, पाण्डुरोचि, गालव, सांकृत्य, चातकि, सर्पियाज्ञ, पिण्डायन, गार्ग्यायन, गायन, गोर्हायन, गोष्ठायन, वात्स्यायन, वैशम्पायन, वैकर्णिनि, शाङ्करव, याज्ञतेयि, भ्राष्ट्रायनि, लालाटि, नाकुलि, लौक्षिण्य, परिमण्डल, आलुकि, सौचकि, कौत्स, पैङ्गलायनि, सात्यायनि, मार्गायनि, कौटिलि, कौचहस्तिक, नैकजिह्व, जिह्मक, व्यद्याद्य लौहवैरिण, शारद्वतिक, नेतिष्य, लौगाक्षि, चलकुण्डल, वागायनि, अनुमति और पूर्णभागातिक ।

**मरीचिवंशः—**

पत्नी मरीचेः सम्भूतिर्विजज्ञे सात्मसम्भवम् ।।
प्रजापतेः पूर्णमासं कन्याश्चेमा निबोधत ।
तुष्टिः पृष्टिस्त्विषा चैव तथा चापचितिः शुभा ।
पूर्णमासः सरस्वत्यां द्वौ पुत्रावुदपादयत् ।
विरजञ्चैव धर्मिष्ठं पर्वसं चैत्र तावुभौ ।
विरजस्यात्मजो विद्वान् सुधामा नाम विश्रुतः ।
सुधामसुतो वैराजः प्राच्यान्दिशि समाश्रितः ।
लोकपालः सुधर्मात्मा गौरीपुत्रः प्रतापवान् ।।
पर्वसः पर्वसायान्तु जनयामास वै सुतौ ।
यज्ञवामं च श्रीमन्तं सुतं काश्यपमेव च ।। (मत्स्यपुराण अ० १९४)

**अर्थ**—प्रजापति मरीचि की पत्नी सम्भूति ने पुत्र पूर्णमास को उत्पन्न किया। उनकी कन्याओं के नाम थे—तुष्टि, पृष्टि, त्विषा, अपचिति।

पूर्णमास ने पत्नी 'सरस्वती' से दो पुत्रों को उत्पन्न किया—विरजा और पर्वस। सुधामा का पुत्र वैराज पूर्व दिशा का लोकपाल था, वह अत्यन्त धार्मिक था तथा उसकी माता का नाम 'गौरी' था।

पर्वस ने पर्वसा से दो पुत्रों को उत्पन्न किया—यज्ञवाम और श्रीमान् 'काश्यप' (या कश्यप)।

**(मत्स्यपुराण अ० १६५)**

**स्वायम्भुवेऽन्तरे—**

स्मृतिश्चाङ्गिरसः पत्नी जज्ञे तावात्मसम्भवौ।
पुत्रौ कन्याश्चतस्रश्च पुण्यास्ता लोकविश्रुताः॥
सिनीवाली कुहूश्चैव राका चानुमतिस्तथा।
तथैव भरताग्निश्च कीर्तिमन्तं च तावुभौ।
अग्नेः पुत्रन्तु पर्जन्यं संहूतिः सुषुवे प्रयुम्।
हिरण्यरोमाणं पर्जन्यो मारीच्यामुदपादयत्।
आभूतसंप्लवस्थायी लोकपालः स वै स्मृतः॥
जज्ञे कीर्तिमतश्चापि धेनुका तावकल्मषौ।
वरिष्ठं धृतिमन्तं चाप्युभावङ्गिरसां वरौ॥

**अर्थ**—अंगिरा (स्वायम्भुव) की पत्नी स्मृति ने दो पुत्रों और चार कन्याओं को जन्म दिया—(चार पुत्रियां थीं)—सिनीवाली, कुहू, राका और अनुमति। (दो पुत्र थे)—भरताग्नि और कीर्तिमान्। भरताग्नि का पुत्र था पर्जन्य (प्रजापति), जिसको पत्नी संहूति ने उत्पन्न किया।

पर्जन्य ने मरीचिकन्या (मारीची) से 'हिरण्यरोमा' प्रजापति को उत्पन्न किया, जो जलप्रलय के समय तक दिग्पाल रहा। कीर्तिमान् ने धेनुका से 'वरिष्ठ' और धृतिमान् नाम के आंगिरसों को उत्पन्न किया।

**अङ्गिरावंशः—**

मरीचितनया राजन्! सुरूपा नाम विश्रुता।
भार्या चाङ्गिरसो देव्यास्तस्याः पुत्रा दशस्मृताः॥
आत्मायुर्दमनो दक्षः सदः प्राणस्तथैव च।
हविष्मांश्च गविष्ठश्च ऋतः सत्यश्च ते दश॥
एते चाङ्गिरसो नाम देवा वै सोमपायिनः॥
सुरूपा जनयामास ऋषीन् सर्वेश्वरानिमान्॥

बृहस्पतिङ्गौतमञ्च संवर्तमृषिमुत्तमम् ।
उतथ्यं वामदेवं च ग्रयास्यमृषिन्तथा ॥

आंगिरसवंश (द्वतीय) वैवस्वत युग में—

अर्थ—मरीचि की पुत्री सुरूपा ने, जो अंगिरा (वारुण) की भार्या थी, दश पुत्र उत्पन्न किये—आत्मा, आयु, दमन, दक्ष, सद, प्राण, हविष्मान्, गविष्ठ, ऋत और सत्य। ये सोमपायी आंगिरस देव थे। सुरूपा ने ही इन आंगिरस ऋषियों को जन्म दिया—बृहस्पति, गौतम, संवर्त, उतथ्य, वामदेव और अयास्य आंगिरस।

**वैवस्वतेऽन्तरे (गोत्रप्रवर्तकाः)**

अङ्गिरा प्रथमस्तेषां द्वितीयश्च बृहस्पतिः ।
तृतीयश्च भरद्वाजः प्रवराः परिकीर्तिताः ॥

अर्थ - प्रथम गोत्रप्रवर्तक अंगिरा (वारुण) हुए, द्वितीय गोत्रप्रवर्तक थे—बृहस्पति तथा तृतीय थे—भरद्वाज।

**आङ्गिरसा वैवस्वतमन्वन्तरे—**

शृणुताङ्गिरसो वंशमग्नेः पुत्रस्य धीमतः ।
यस्यान्वये सम्भूताः भारद्वाजा सगौतमाः ।
देवाश्चांगिरसो मुख्यास्त्विषमन्तो महौजसः ॥
सुरूपा चैव मारीची कार्दमी च तथा स्वराट् ।
मथ्या च मानवीकन्या तिस्रो भार्यास्त्वथर्वणः ।
इत्येताङ्गिरसः पत्न्यस्तासु वक्ष्यामि सन्ततिम् ।

अर्थ—अग्नि या अंगिरा नाम के (वरुण) पुत्र का वंश सुनिये जिसके वंश में तेजस्वी और महाबली भारद्वाज और गौतम ब्राह्मण उत्पन्न हुए।

अथर्वा (या अंगिरा) की तीन पत्नियां थीं—मारीची (मरीचिपुत्री) सुरूपा, कार्दमी (कर्दमपुत्री)—स्वराट् और (मनुपुत्री) मानवी मथ्या। अब इन तीनों पत्नियों की सन्तानों के नाम सुनिये।

बृहस्पतिः सुरूपाया गौतमं सुषुवे स्वराट् ।
अवन्ध्यं वामदेवं च उतथ्यमुशिजन्तथा ॥
धिष्णुः पुत्रस्तु पथ्यायाः संवर्तश्चैव मानसः ॥
विचित्तिश्च तथायास्यः शरद्वांश्चाप्युतथ्यजः ॥
ग्रौशिजो दीर्घतमा बृहदुक्थो वामदेवजः ।
धिष्णोः पुत्राः सुधन्वान ऋषभश्च सुधन्वनः ॥
रथकाराः स्मृताः देवा ऋषयो ये परिश्रुताः ।
बृहस्पतेर्भरद्वाजो विश्रुतः सुमहायशाः ॥

अङ्गिरसस्तु संवर्त्तो देवानङ्गिरसः शृणु ।
बृहस्पतेर्यवीयांसो देवा ह्यङ्गिरसः स्मृताः ॥
औरसाङ्गिरसः पुत्राः सुरूपायां विजज्ञिरे ।
औदायुरायुर्दनुर्दक्षो दर्भः प्राणस्तथैव च ।
हविष्मांश्च हविष्णुश्च क्रतुः सत्यश्च ते दश ।
अयास्यस्तु उतथ्यश्च वामदेवस्तथोशिजः ।
भारद्वाजा सांकृतिका गार्ग्यकाण्वरथीतराः ।
मुद्गला विष्णुवृद्धाश्च हरिता वायवस्तथा ।
तथा भाक्षा भरद्वाजा आर्षभाः किम्मयास्तथा ।
एते ह्यङ्गिरस पक्षा विज्ञेया दश पंच च ॥

अर्थ—सुरूपा ने बृहस्पति को और स्वराट् ने गौतम को उत्पन्न किया। पथ्या (मथ्या) ने अवन्ध्य, वामदेव, उतथ्य, उशिज् और धिष्णु को उत्पन्न किया। संवर्त, अंगिरा का मानसपुत्र था। ऐसे ही विचित्ति (विप्रचित्ति ?) और अयास्य मानसपुत्र थे।

शरद्वान् उतथ्य का पुत्र था। दीर्घतमा उशिक् का पुत्र था। वामदेव का पुत्र बृहदुक्थ था।

धिष्णु का पुत्र सुधन्वा था और सुधन्वा का पुत्र ऋषभ (तीन ऋभुगण) था। ये ऋभुगण ही रथकार, देव और ऋषि माने गये हैं।

प्रसिद्ध महायशस्वी भरद्वाज ऋषि बृहस्पति के पुत्र थे। संवर्त भी अंगिरा के पुत्र (या वंशज) थे। बृहस्पति से छोटे आंगिरस, आंगिरस देवगण थे—वे अंगिरा और सुरूपा के औरसपुत्र थे—औदायु, आयु, दनु, दक्ष, दर्भ, प्राण, हविष्मान्, हविष्णु, क्रतु और सत्य—ये दश देव थे

आंगिरसों के पन्द्रह पक्ष या गोत्रवर्तक थे—अयास्य, उतथ्य, वामदेव, भरद्वाज, सांकृतिक, गार्ग्य, काण्व, रथीतर, मुद्गल, विष्णुवृद्ध, हरित, वायु, भाक्ष, भारद्वाज (भारद्वाजयना) आर्षभ (आर्भव-ऋभुवंशज) और किम्मय।

**अत्रिवंशः (स्वायम्भुवमन्वन्तरे)—**

अनसूयापि जज्ञे तान् पंचात्रेयानकल्मषान् ।
कन्याञ्चैव श्रुतिं नाम माता शङ्खपदस्य या ।
कर्दमस्य या पत्नी पुलहस्य प्रजापतेः ।
सत्यनेत्रश्च हव्यश्च आपोमूर्तिः शनैश्चरः ।
सोमश्च पंचमस्तेषामासीत् स्वायम्भुवेऽन्तरे ।

अर्थ—स्वायम्भुव मन्वन्तर (युग) में अनसूया ने अत्रि ऋषि से पांच निष्पाप आत्रेयों और एक कन्या श्रुति को उत्पन्न किया, जो पौलह (पुलहपुत्र) कर्दम प्रजापति की पत्नी और शंखपद प्रजापति की माता थी।

पांच आत्रेय थे—सत्यनेत्र, हव्य, आयोमूर्ति, शनैश्चर और सोम।

**अत्रिवंशः (वैवस्वतमन्वन्तरे)**—

अत्रेर्वंशं प्रवक्ष्यामि तृतीयस्य प्रजापतेः।
तस्य पत्न्यश्च सुन्दर्यो दशैवासन् पतिव्रताः॥
भद्राश्वस्य घृताच्या वै दशाप्सरसि सूनवः।
भद्रा शूद्रा च मद्रा च शलदा मलदा तथा॥
वेला खला च सप्तैता या च गोचपला स्मृता॥
तथा मानरसा चैव रत्नकूटा च ता दश॥
आत्रेयवंशकृत्तासां भर्त्ता नाम्ना प्रभाकरः।
भद्राया जनयामास सोमं पुत्रं यशस्विनम्।

× × ×

दश तास्वेव महता तपसा भावितप्रभाः।
स्वस्त्यात्रेया इति ख्याता ऋषयो वेदपारगाः॥
तेषां विख्यातयशसौ ब्रह्मिष्ठौ सुमहौजसौ।
दत्तात्रेयस्तस्य ज्येष्ठो दुर्वासस्तस्य चानुजः॥
यवीयसी सुता तस्यापाला ब्रह्मवादिनी।
अत्रेः पुत्रं महात्मानं शान्तात्मानमकल्मषम्।
दत्तात्रेयं तनुं विष्णोः पुराणज्ञाः प्रचक्षते।
तस्य गोत्रान्वये जाताश्चत्वारः प्रथिता भुवि।
श्यामाश्च मुद्गलाश्चैव बलारकगविष्ठिराः॥

(वायु उत्तरार्द्ध अ० ९)

अर्थ—(वरुण के तृतीयपुत्र और सप्तर्षियों में तृतीय) प्रजापति अत्रि के वंश का वर्णन करता हूं।

भद्राश्व (वर्ष या राजा) की पुत्रियां दश अप्सरायें थीं—भद्रा, शूद्रा, मद्रा, शलदा, मलदा, वेला, खला, गोचपला, मानरसा और रत्नकूटा। इनका पति आत्रेयवंशीय प्रभाकर आत्रेय था प्रभाकर ऋषि (आत्रेय) ने भद्रा से 'सोम' नाम के यशस्वीपुत्र को उत्पन्न किया।

इन्हीं दश पत्नियों से प्रभाकर ने दश और पुत्र उत्पन्न किये। वे 'स्वस्त्यात्रेय' नाम के विख्यात दश ऋषि वेदपारंगत थे। उनमें दो महातेजस्वी

अति प्रसिद्ध ब्रह्मिष्ठ (वेदज्ञ) ऋषि थे—'दत्तात्रेय' और 'दुर्वासा', इनमें दत्तात्रेय ज्येष्ठ और दुर्वासा अनुज थे। (प्रभाकर आत्रेय की) छोटी पुत्री इनकी बहिन थी—'अपाला', जो ब्रह्मवादिनी थी।

पुराणज्ञ विद्वान् दत्तात्रेय को विष्णु का अवतार मानते हैं। अत्रि के वंश में चार गोत्रप्रवर्तक ऋषि हुए—श्याम, मुद्गल, बलारक और गविष्ठिर।

**पुलस्त्यवंशः (स्वायम्भुवेऽन्तरे)—**

प्रीत्यां पुलस्त्यभार्यायां दत्तालिस्तत्सुतोऽभवत्।
पूर्वजन्मनि सोऽगस्त्यः स्मृतः वैवस्वतेऽन्तरे॥
मध्यमो देवबाहुश्च विनीतो नाम ते त्रयः।
स्वसा यवीयसी तेषां सद्वती नाम विश्रुता।
पर्जन्यजननी शुभ्रा पत्नी त्वग्नेः स्मृता शुभा।
पौलस्यस्य ऋषेश्चापि प्रीतिपुत्रस्य धीमतः।
दत्तालेः सुषुवे पत्नी सुजङ्घादीन् बहून् सुतान्।
पौलस्त्या इति विख्याताः स्मृताः स्वायम्भुवेऽन्तरे।

(वायुपुराण अ० २८)

**अर्थ**—पुलस्त्य भार्या प्रीति का पुत्र 'दत्तालि' नाम का ऋषि हुआ। यही पूर्व जन्म का 'अगस्त्य ऋषि' था, जो वैवस्वतयुग में (अगस्त्य नाम से) हुआ।

(दत्तालि का भ्राता) देवबाहु मध्यम पुत्र और विनीत तृतीय पुत्र था। 'सद्वती' उनकी छोटी बहिन थी। जो प्रसिद्ध प्रजापति पर्जन्य की माता और अग्नि (या अंगिरा) की पत्नी थी।

विद्वान् प्रीतिपुत्र पौलस्त्य दत्तालि ऋषि की पत्नी ने सुजंघ आदि बहुत से पुत्रों को उत्पन्न किया, जो स्वायम्भुवमन्वन्तर में 'पौलस्त्य (ऋषि)' नाम से विख्यात हुए।

**पुलहवंशः (स्वायम्भुवेऽन्तरे)—**

क्षमा तु सुषुवे पुत्रान् पुलहस्य प्रजापतेः।
ते चाग्निवर्चसः सर्वे येषां कीर्तिः प्रतिष्ठिताः॥
कर्दमश्चाम्बरीषश्च सहिष्णुश्चेति ते त्रयः।
ऋषिर्धनकपीवांश्च शुभा कन्या च पीवरी।
कर्दमस्य श्रुतिः पत्नी आत्रेय्यजनयत् सुतान्।
पुत्रं शङ्खपदं चैव कन्यां काम्यां तथैव च॥
स वै शङ्खपदः श्रीमान् लोकपालः प्रजापतिः॥
दक्षिणस्यां दिशि रतः काम्यां दत्वा प्रियव्रते।

काम्या प्रियव्रताल्लेभे स्वायम्भुवसमान् सुतान्।
दश कन्याद्वयं चैव यैः क्षत्रं संप्रवर्तितम् ॥
पुत्रो धनकपीवांश्च सहिष्णुर्नाम विश्रुतः।
यशोधारी विजज्ञे वै कामदेवः सुमध्यमः॥

(वायुपुराणे अ० २८)

**अर्थ**—पुलह प्रजापति की पत्नी क्षमा ने अग्नि के समान तेजस्वी और यशस्वी पुत्रों को उत्पन्न किया—कर्दम, अम्बरीष और सहिष्णु—ये तीन तथा धन ऋषि, कपीवान् और पीवरी कन्या हुई। कर्दम की पत्नी 'आत्रेयी श्रुति' ने पुत्र शंखपद और कन्या काम्या को उत्पन्न किया। वह शंखपद प्रसिद्ध लोकपाल और प्रजापति था। वह दक्षिणी भूमण्डल का शासक (लोकपाल) था।

कर्दम ने अपनी कन्या 'काम्या' प्रियव्रत (स्वायम्भुव) को ब्याही, जिससे प्रियव्रत ने स्वायम्भुवमनु के समान प्रतापी दश पुत्रों को उत्पन्न किया तथा दो कन्यायें भी उत्पन्न कीं।

पुत्र धनकपीवान् ही सहिष्णु नाम से विख्यात हुआ जो बड़ा यशधारक एवं सुमध्यम कामदेव के समान रूपवान् था।

**क्रतुवंशः (स्वायम्भुवमन्वन्तरे)**—

क्रतोः क्रतुसमः पुत्रो विजज्ञे सन्ततिः शुभा।
नैषां भार्यास्ति पुत्रो वा सर्वे ते ह्यूर्ध्वरेतसः।
षष्ट्येतानि सहस्राणि बालखिल्या इति श्रुताः।
स्वसारौ तु यवीयस्यौ पुण्यात्मसुमती च ते।
पर्वसस्य स्नुषे ते वै पूर्णमाससुतस्य वै। (वायु० अ० २९)

**अर्थ**—क्रतु के क्रतु समान पुत्र उत्तम सन्तति उत्पन्न हुई—वे 'साठ सहस्र बालखिल्य' (बौने) नाम के ऋषि थे। उनकी दो छोटी बहिनें थीं—पुण्यात्मा और सुमति। वे दोनों पूर्णमास (मारीच) के पुत्र 'पर्वस' की पुत्रवधुएं थीं।

**वसिष्ठपक्षाः**—

वसिष्ठस्य कपिञ्चल्यां घृताच्यां समपद्यत।
कुशीतियः समाख्यात इन्द्रप्रतिम उच्यते॥
पृथोः सुतायाः सम्भूतः पुत्रस्तस्या भवद्वसुः।
उपमन्युः सुतस्तस्य यस्येमे उपमन्यवः॥
मित्रावरुणयोश्चैव कुण्डिनो ये परिश्रुताः।
एकार्षेयास्तथैवान्ये वसिष्ठा नाम विश्रुताः॥
इत्येते पक्षा वसिष्ठानां स्मृता एकादशैव तु॥ (वायुपुराणे)

**वसिष्ठों के पक्ष (पृथक् गोत्रादि)—**

**अर्थ**—(किसी वसिष्ठ या) वसिष्ठ के कपिञ्चला अप्सरा से 'कुशीतिय' या 'इन्द्रप्रतिमं' पुत्र हुआ। 'पृथु' की पुत्री से उसका पुत्र 'भवद्वसु' उत्पन्न हुआ। उसका पुत्र 'उपमन्यु' हुआ। जिसके वंशज उपमन्यव (या औपमन्यव) कहलाये। मैत्रावरुणि वसिष्ठ के जो वंशज 'कुण्डिन' नाम के 'एकार्षेय' वासिष्ठ नाम से विख्यात हुए। इस प्रकार वसिष्ठों के ग्यारह पक्ष हैं।

**पाराशराः (पक्षाः)**—

श्वेताः कृष्णाश्च गौराश्च श्यामा धूम्राः समूलिकाः।
उष्मपा दारकाश्चैव नीलाश्चैव पराशराः॥
पराशराणामष्टौ ते पक्षाः प्रोक्ता महात्मनाम्॥

**अर्थ**—श्वेत, कृष्ण, गौर, श्याम, मूलिक, उष्मप, दारक और नील—ये पाराशरों के आठ पक्ष हैं।

**वसिष्ठवंशः**—

ऊर्जायान्तु वसिष्ठस्य पुत्रा वै सप्त जज्ञिरे।
ज्यायसी च स्वसा तेषां पुण्डरीका सुमध्यमा।
जननी सा द्युतिमतः पाण्डोस्तु महिषी प्रिया।
अस्याः त्विमे यवीयांसो वासिष्ठाः सप्तविश्रुताः।
रजः पुत्रोऽर्द्धबाहुश्च सवनश्चाधनश्च यः।
सुतपाः शुक्ल इत्येने सर्वे सप्तर्षयः स्मृताः।
रजसो वाप्यजनयन्मार्कण्डेयी यशस्विनी।
प्रतीच्यां दिशि राजन्यं केतुमन्तं प्रजापतिम्॥

(वायुपुराण अ० २९)

**अर्थ**—वसिष्ठ की पत्नी ऊर्जा के सात पुत्र उत्पन्न हुए, उनकी बड़ी बहिन सुमध्यमा (सुन्दरी) 'पुण्डरीका' थी। वह द्युतिमान् की माता और पाण्डु की प्रियरानी थी।

(ऊर्जा के) सात पुत्र थे जो पुण्डरीका से छोटे और सभी वासिष्ठ (या वसिष्ठ या ऊर्जा संज्ञक) सप्तर्षि थे—रजस्, पुत्र, अर्धबाहु, सवन, अधन, सुतपा और शुक्ल।

रजस् (वासिष्ठ) से यशस्विनी मार्कण्डेयी (मार्कण्डेय पुत्री) ने 'केतुमान्) नाम का पुत्र उत्पन्न किया, जो पश्चिमी भूभाग का दिग्पाल 'प्रजापति' हुआ।

**वैवस्वतमन्वन्तरे (वशिष्ठवंशः)**

अरुन्धत्यां वसिष्ठस्तु शक्तिमुत्पादयत्प्रभुः।
………शक्ते रदृश्यन्ती पराशरम्।

काली पराशराज्जज्ञे कृष्णद्वैपायनं प्रभुम् ।
द्वैपायनादरण्यां वै शुको जज्ञे गुणान्वितः ॥

अर्थ वसिष्ठ (अज्ञातनामा उत्तरकालीन वासिष्ठ) ने अरुन्धती (भ्रान्तनाम) से शक्ति को उत्पन्न किया। शक्ति से 'अदृश्यन्ती' ने पराशर को उत्पन्न किया। 'काली' (=मत्स्यगन्धा—सत्यवती) ने पराशर (पाराशर=पाराशर्य=द्विप) से 'कृष्ण द्वैपायन' पाराशर्य को उत्पन्न किया। द्वैपायन से 'अरणी' ने गुणवान् पुत्र 'शुक' को उत्पन्न किया।

**च्यवनवंशः, भार्गववंशः (वैवस्वतमन्वन्तरे)—**

जनयामास द्वौ पुत्रौ सुकन्यायां च भार्गवः ।
आप्नुवसं दधीचं च तावुभौ साधुसम्मतौ ॥
सारस्वतः सरस्वत्यां दधीचाच्चोपपद्यते ।
रुची पत्नी महाभागा आप्नुवानस्य नाहुषी ॥
तस्य ऊर्वोर्ऋषिर्जज्ञे ऊरू भित्त्वा महायशाः ।
और्वश्चासीदृचीकस्तु दीप्ताग्निसमप्रभः ॥
जमदग्निर्ऋचीकस्य सत्यवत्यां व्यजायत ।
भृगोश्च रुचिपर्याये रौद्रवैष्णवयोस्तथा ॥
जमनाद्वैष्णावस्याग्नेर्जमदग्निरजायत ।
रेणुका जमदग्नेस्तु शक्रतुल्यपराक्रमः ॥
ब्रह्मक्षत्रमयं रामं सुषुवेऽमिततेजसम् ॥
और्वस्यासीत्पुत्रशतं जमदग्निपुरोगमम् ।
वत्सो विश्वोऽश्विषेणश्च पाण्डः पथ्यः सशौनकः ।
गोत्रेण सप्तमा ह्येते पक्षा ज्ञेयास्तु भार्गवाः ॥ (वायुपुराणे)

अर्थ—च्यवन भार्गव ने सुकन्या से आप्नुवान् और 'दधीचि'--नाम के दो श्रेष्ठ पुत्र उत्पन्न किये। दधीचि ने सरस्वती से सारस्वत (अपान्तरतमा=(शिशु आंगिरस) को उत्पन्न किया। आप्नुवान् की नाहुषी (नहुषपुत्री) 'रुचि' नाम की पत्नी थी। उसका पुत्र 'ऊर्व' हुआ, जो 'उरु' (जंघा) को फोड़कर उत्पन्न हुए। ऊर्व के पुत्र ऋचीक थे, जो दीप्ताग्नि के तुल्य तेजस्वी थे।

ऋचीक के सत्यवती से 'जमदग्नि' उत्पन्न हुए। वैष्णव अग्नि के संयमन के कारण उनका नाम 'जमदग्नि' नाम पड़ा। जमदग्नि से रेणुका ने इन्द्र के समान पराक्रमी और अमिततेजस्वी ब्रह्मक्षत्रमय राम (परशुराम) को उत्पन्न किया। ऋचीक और्व के जमदग्नि इत्यादि सौ पुत्र थे।

**भार्गवों के सात पक्ष**—भार्गवों के सात पक्ष ये हैं—वत्स, विश्व, अश्विषेण, पाण्ड, पथ्य, शौनक (और भार्गव)।

(वायुपुराण अ० ९)

**कश्यपवंशः—**

पुनरेव महाभागः प्रजानां पतिरीश्वरः ।
कश्यपो गोत्रकामस्तु चचार परमं तपः ॥
पुत्रौ गोत्रकरौ मह्यं भवेतामित्यचिन्तयत् ॥
तस्य प्रध्यायमानस्य कश्यपस्य महात्मनः ।
ब्रह्मणोऽशौ सुतौ पश्चात् प्रादुर्भूतौ महौजसौ ।
वत्सारश्चासितश्चैव तावुभौ ब्रह्मवादिनौ ।
वत्साराग्निध्रुवो जज्ञे रैभ्यश्च स महायशाः ॥
रैभ्यस्य रैभ्या विज्ञेया निध्रुवस्य निबोधत ।
च्यवनस्य सुकन्यायां सुमेधः समपद्यत ॥
निध्रुवस्य तु सा पत्नी भार्या वै कुण्डपायिनाम् ॥
असितस्यैकपर्णायां ब्रह्मिष्ठः समपद्यत ।
शाण्डिल्यानां वच श्रुत्वा देवलः सुमहायशाः ।
निध्रुवाः शाण्डिल्या रैभ्यास्त्रयः पश्चातु काश्यपाः ॥
.. ................ देवलस्य प्रजास्त्विमाः ।
मानसस्य चरिष्यतस्तस्य पुत्रो दमः किल ।
मानसस्तस्य दायादस्तृणविन्दुरिति श्रुतः ।
त्रेतायुगमुखे राजा तृतीये सम्बभूव ह ।
तस्य कन्या त्विडविडा रूपेणाप्रतिमाभवत् ॥
पुलस्त्याय स राजर्षिस्तां कन्यां प्रत्यपादयत् ॥
ऋषिरिडविडायान्तु विश्रवा समपद्यत ।
तस्य पत्न्यश्चतस्रस्तु पौलस्त्यकुलवर्धनाः ॥
बृहस्पतेर्बृहत्कीर्तिर्देवाचार्षस्य कीर्तिताः ।

अर्थ—महाभाग्यशाली प्रजापति कश्यप ने गोत्रप्रवर्तन के लिए पुनः महान् तप किया— उन्होंने संकल्प किया कि 'मेरे दो गोत्रप्रवर्तक पुत्र उत्पन्न हों' ऐसे सोचकर महर्षि कश्यप ने ध्यान किया। तब उनके उत्तरकाल में ब्रह्मांश से दो महातेजस्वी पुत्र उत्पन्न हुए—वत्सार और असित, जो दोनों ही वेद पारंगत थे।

वत्सार से निध्रुव उत्पन्न हुआ तथा दूसरा पुत्र रैभ्य (रेभ) था। 'रेभ' के वंशज 'रैभ्य' कहलाये। अब 'निध्रुव' के विषय में जानिये। च्यवन ने सुकन्या से सुमेधा (कन्या) को उत्पन्न किया, जो निध्रुव की पत्नी हुई और जो 'कुण्डपायी' ब्राह्मणों का भरण-पोषण करती थी।

असित ने एकपर्ण द्वारा ब्रह्मिष्ठ देवल ऋषि को उत्पन्न किया। देवल ने शाण्डिल्यों का वचन सुना।

निध्रुव, शाण्डिल्य और रैभ्य—ये तीन तथा पश्चात् (अन्तिम गोत्र) चतुर्थ 'काश्यप' पक्ष है।

**नारदपर्वतौ—अरुन्धतीचः—**

काश्यपान्नारदश्चैव पर्वतोऽरुन्धती तथा।

**अर्थ**—कश्यप से ही नारद, पर्वत और अरुन्धती (वसिष्ठ पत्नी) उत्पन्न हुई।

**कौशिकब्राह्मणवंशः—**

विश्वामित्रस्तु धर्मात्मा नाम्ना विश्वरथः स्मृतः।
जज्ञे भृगुप्रसादेन कौशिकवंशवर्द्धनः।
विश्वामित्रस्य पुत्रस्तु शुनःशेफोऽभवन्मुनिः।
हरिश्चन्द्रस्य यज्ञे तु पशुत्वे नियुतः स वै।
दैवैर्दत्तः स वै यस्माद्देवरातस्ततोऽभवत्॥ (वायुपुराणे)

**अर्थ**—धर्मात्मा 'विश्वामित्र' (पहिले) 'विश्वरथ' के नाम से प्रसिद्ध थे। वह भृगु (भार्गव) ऋषि की कृपा से कौशिक वंश को बढ़ाने वाले हुए।

विश्वामित्र का (ज्येष्ठ कृत्रिम) पुत्रः शुनःशेफ मुनि था, जो हरिश्चन्द्र के यज्ञ में वलि का पशु बनाया गया। देवों द्वारा वह विश्वामित्र को 'दत्त' (या रक्षित) था अतः उसका नाम 'देवरात' प्रख्यात हुआ।

**महाभारते—**

मधुच्छन्दश्च भगवान् देवरातश्च वीर्यवान्।
अक्षीणश्च शकुन्तश्च बभ्रुः कालपथस्तथा॥
याज्ञवल्क्यश्च विख्यातस्तथा स्थूणो महाव्रतः।
उलूको यमदूतश्च तथर्षिः सैन्धवायनः॥
वल्गुजङ्घश्च भगवान् गालवश्च महानृषिः।
ऋषिर्वज्रस्तथा ख्यातः सालंकायन एव च॥
लीलाढ्यो नारदश्चैव तथा कूर्चामुखः स्मृतः।
वादुलिर्मुसलश्चैव वक्षोग्रीवस्तथैव च।
अंघ्रिको नैकदृक् चैव शिलायूपः शितः शुचिः।
चक्रको मारुतन्तव्यो वातघ्नोऽथाश्वलायनः।
श्यामायनोऽथ गार्ग्यश्च जाबालिः सुश्रुतस्तथा।
कारीषिरथ संश्रुत्यपरपौरवतन्तवः।

महानृषिश्च कपिलस्तथर्षिस्ताडकायनः ।
तथैव चोपगहनस्तथर्षिश्चासुरायणः ॥
मार्दमर्षिर्हिरण्याक्षो जङ्गारिर्बाभ्रवायणिः ।
भूतिर्विभूतिः सूतश्च सुरकृत् तु तथैव च ।
अरालिर्नाचिकश्चैव चाम्पेयोज्जपनस्तथा ॥
नवतन्तुर्बकनखः सेयनो यतिरेव च ॥
अम्भोरुहश्चारुमत्स्यः शिरीषी चाथ गार्दभिः ।
ऊर्जयोनिरुदापेक्षी नारदी च महानृषिः ॥
विश्वामित्रात्मजाः सर्वे मुनयो ब्रह्मवादिनः ॥

(महाभारते, अनुशासनपर्वणि अ० ४)

**अर्थ—महाभारत में विश्वामित्र के एक सौ एक (अनेक) पुत्रों के नाम—** मधुच्छन्दा, देवरात, अक्षीण, शकुन्त, बभ्रु, कालपथ, याज्ञवल्क्य, स्थूण, उलूक, यमदूत, सैन्धवायन, वल्गुजङ्घ, गालव, वज्र, सालंकायन, लीलाढ्य, नारद, कूर्चामुख, वादुलि, मुसल, वक्षोग्रीव, अंघ्रिक, नैकदृक्, शिलायूप, शित, शुचि, चक्रक, मारुतन्तव्य, वातघ्न, आश्वलायन, श्यामायन, गार्ग्य, जाबालि, सुश्रुत, कारीषि, संश्रुत्य, पर, पौरव, तन्तु, कपिल, ताडकायन, उपगहन, आसुरायण, मार्दम, हिरण्याक्ष, जङ्गारि, बाभ्रवायणिः, भूति, विभूति, सूत, सुरकृत्, अरालि, नाचिक, चाम्पेय, उज्जपन, नवतन्तु, बकनख, सेयन, यति, अम्भोरुह, चारुमत्स्य, शिरीषी, गार्दभि, ऊर्जयोनि, उदापेक्षी, नारदी—ये सभी विश्वामित्र के पुत्र (या वंशज) ब्रह्मवादी मुनि थे ।

**गोत्राणि पक्षाश्च—**

कच्छपः पूरणश्चैव विश्वामित्रसुतास्तु वै ।
तेषां गोत्राणि बहुधा कौशिकानां महात्मनाम् ।
उदुम्बरा उदुम्बनास्तारका ·····।
लोहित्यो रेणवश्चैव तथा कारीषवः स्मृताः ।
बभ्रवः पाणिनश्चैव ध्यानजप्यास्तथैव च ॥
शालावत्याः हिरण्याक्षाः स्यङ्कृता गालवाः स्मृताः ।
देवला यामदूताश्च शालङ्कायनवाष्कलाः ।

× × ×

दृषद्वतीसुतश्चापि विश्वामित्रात्तथाष्टकः ॥ (वायुपुराणे)

**अर्थ**—कच्छप और पूरण इत्यादि विश्वामित्र के पुत्र थे । उन कौशिकों के अनेक गोत्र थे— उदुम्बरा, उदुम्बना, तारका, लोहित्या, रेणु, करीषा, बभ्रु,

पाणिनि, व्यानजप्य, शालवत्या, हिरण्याक्षा सांकृत्या, गालव, देवन, यामदूत, शालकायन और बाष्कल।

विश्वामित्र से दृषद्वती—(माधवी)--पुत्र अष्टक था, (जो राजा बना)।

**गृत्समदवंशः—**

वीतहव्यो महाराज ब्रह्मवदित्वमेव च।
तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः।
शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत्।
ऋग्वेदे वर्तते चाग्र्या श्रुतिर्यस्य महात्मनः॥

× × ×

पुत्रो गृत्समदस्यापि सुचेता अभवद् किल।
वर्चाः सुचेतसः पुत्रो विहव्यस्तस्य चात्मजः।
विहव्यस्य तु पुत्रस्तु वितत्यस्तस्य चात्मजः।
वितत्यस्य सुतः सत्यः संतः सत्यस्य चात्मजः॥
श्रवास्तस्य सुतश्चर्षिः श्रवसश्चाभवत् तमः।
तमसश्च प्रकाशोऽभूत् तनयो द्विजसत्तमः॥
प्रकाशस्य च वागिन्द्रो बभूव जयतां वरः।
तस्यात्मजश्च प्रमतिर्वेदवेदाङ्गपारगः॥
घृताच्यां तस्य पुत्रस्तु रुरुर्नामोदपद्यत।
प्रमद्वरायां तु रुरोः पुत्रः समुदपद्यत॥
शुनको नाम विप्रर्षिर्यस्य पुत्रोऽथ शौनकः।

(महाभारत अनुशा० ३०)

**अर्थ**—(भार्गव-शौनक) राजर्षि वीतहव्य का पुत्र गृत्समद था, जो इन्द्र के समान ही रूपवाला था। उसको शक्र (इन्द्र) समझकर दैत्यों ने पकड़ लिया था। उसकी ऋग्वेद (द्वितीय मण्डल) में श्रुतियां (मन्त्र) हैं।……

गृत्समद का पुत्र सुचेता हुआ, सुचेता का पुत्र वर्चा, उसका पुत्र विहव्य, उसका पुत्र वितव्य, उसका पुत्र सत्य, उसका पुत्र सन्त, उसका पुत्र श्रवा ऋषि, श्रवा का पुत्र तम, उसका पुत्र प्रकाश, उसका पुत्र वागिन्द्र, उसका पुत्र प्रमति, जो वेदवेदांगों में पारंगत था तथा उसने घृताची (अप्सरा) से रुरु को उत्पन्न किया। जिसका पुत्र हुआ शुनक और उसका पुत्र शौनक (वंश) हुआ।

————

तृतीयोऽध्याय

# पांचजन्यवंशाः

**देववंशाः—**

यक्षगन्धर्वकिन्नरनागगुह्यकअसुरदैत्यराक्षसवंशाः
**अर्थ—**(असुर यक्षराक्षस किन्नर नाग सुपर्णादि के वंश)
(हरिवंशपुराण अ० ३)

**दैत्यवंशः—**

दित्याः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम् ।
हिरण्यकशिपुश्चैव हिरण्याक्षश्च वीर्यवान् ॥
सिंहिका चावभवत् कन्या विप्रचित्ते परिग्रहः ।
सैंहिकेया इति ख्यातास्तस्याः पुत्रा महाबलाः ।
गणैश्च सह राजेन्द्र दशसाहस्रमुच्यते ॥

× × ×

हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः ।
अनुह्लादश्च ह्लादश्च प्रह्लादश्चैव वीर्यवान् ।
संह्लादश्च चतुर्थोऽभूत् ह्लादपुत्रो ह्रदस्तथा ।
संह्लादपुत्रौ सुन्दश्च निसुन्दस्तावुभौ स्मृतौ ।
अनुह्लादसुतौ ह्यायुः शिबिकालस्तथैव च ।
विरोचनश्च प्रह्लादिर्बलिर्जज्ञे विरोचनात् ॥
बलेः पुत्रशतं त्वासीद् बाणज्येष्ठ नराधिप ।
धृतराष्ट्रश्च सूर्यश्च चन्द्रमाश्चेन्द्रतापनः ।
कुम्भनाभो गर्दभाक्षः कुक्षिरित्येवमादयः ॥
बाणस्तेषामतिबलो ज्येष्ठ पशुपतेः प्रियः ।

× × ×

हिरण्याक्षसुताः पञ्च विद्वांसः महाबलाः ।
झर्झरः शकुनिश्चैव भूतसंतापनस्तथा ॥
महानाभश्च विक्रान्तः कालनाभस्तथैव च ॥

**अर्थ**—(पूर्वदेव=असुर) कश्यप द्वारा दिति से दो पुत्र उत्पन्न हुए—हिरण्यकशिपु और हिरण्याक्ष—यह इतिहास में अति प्रसिद्ध हैं।

सिंहिका कन्या हुई जो विप्रचित्ति को ब्याही। उसके पुत्र (और वंशज) 'सैंहिकेय' कहलाये, जो प्रसिद्ध तथा बलशाली थे। गणों के उन सैंहिकेयों की संख्या दश हजार थी।

**हिरण्यकशिपु के पुत्र और वंशज**—हिरण्यकशिपु के परमतेजस्वी चार पुत्र हुए—प्रह्लाद, अनुह्लाद, ह्लाद और संह्लाद।

ह्लाद का पुत्र था ह्रद, संह्लाद के पुत्र थे—सुन्द और निसुन्द, अनुह्लाद के पुत्र थे—आयु और शिबिकाल।

'प्रह्लाद' का पुत्र था विरोचन, विरोचन का पुत्र हुआ बलि। बलि से सौ पुत्र हुए—जिनमें 'बाण' ज्येष्ठ था।

(बलि के अन्य पुत्र थे)—धृतराष्ट्र, सूर्य, चन्द्रमा, इन्द्रतापन, कुम्भनाभ, गर्दभाक्ष, कुक्षि इत्यादि।

इन सबमें 'बाणासुर' ज्येष्ठ और अति बलवान् था, जो पशुपति शिव को अति प्रिय था।

**हिरण्याक्ष के पांच पुत्र**—हिरण्याक्ष के पांच महाबलि और महाविद्वान् पुत्र थे—झर्झर, शकुनि, भूतसंतापन, महानाभ और महाविक्रमी 'कालनाभ' (=कालनेमि)।

**देववंशः (आदित्याः)**—

मारीचात् कश्यपाज्जातास्तेऽदित्या दक्षकन्यया।
तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि।
अर्यमा चैव धाता च त्वष्टा पूषा च भारत।
विवस्वान् सविता चैव मित्रो वरुण एव च।
अंशो भगश्चातितेजा आदित्या द्वादश स्मृताः॥

(देव वंश या आदित्य वंश) द्वादश आदित्य—

**अर्थ**—मरीचिपुत्र (या वंशज) कश्यप से दक्षपुत्री अदिति द्वारा बारह पुत्र उत्पन्न हुए, जो 'अदिति' के पुत्र होने से 'आदित्य' कहलाये। वे थे—विष्णु, शक्र (इन्द्र), अर्यमा, धाता, त्वष्टा, पूषा, विवस्वान्, सविता, मित्र, वरुण अंश और अति तेजस्वी भग।

**वरुणस्य (ब्रह्मणः) सन्ततिः—(सप्तर्षयः)**—

स्वायम्भुवेऽन्तरे शप्ता सप्तार्थं ते भवेन तु।
जज्ञिरे वै पुनस्ते ह जनलोकाद्दिवं गताः॥

देवस्य महतो यज्ञे वारुणीं बिभ्रतस्तनुम् ।
ऋषयो जज्ञिरे पूर्वं द्वितीयमिति नः श्रुतम् ।
भृगुरङ्गिरा मरीचि पुलस्त्यः पुलहः क्रतुः ।
अत्रिश्चैव वसिष्ठश्च अष्टौ ते ब्रह्मणः सुताः ।

× × ×

वारुणाः भृगवस्तस्मात्तदपत्यं च स प्रभुः ।

X X X

तस्मादङ्गिराश्चापि आग्नेया इति नः श्रुतम् ।

X X X

मरीचिः प्रथमस्तत्र मरीचिभ्यः समुत्थितः ।
क्रतौ तस्मिन् सुतो जज्ञे यस्तस्मात्स वै क्रतुः ।
अहं तृतीय इत्यर्थस्तस्मादत्रिः स कीर्त्यते ।
केशैश्च निशितैर्भूतः पुलस्त्यस्तेन स स्मृतः ।
केशैर्लम्बैः समुद्भूतः तस्माद् तु पुलहः स्मृतः ।
वसुमध्यात्समुत्पन्नो वसुमान् वसुधाश्रयः ।
वसिष्ठ इति तत्त्वज्ञैः प्रोच्यते ब्रह्मवादिभिः ।।

**अर्थ**—स्वायम्भुव मन्वन्तर (या प्राग्देव युग) में रुद्र (शिव) ने जिन सप्तर्षियों को शाप दिया था, वे जनलोक से दिव्यलोक (स्वर्ग) में जाकर पुनः इस पृथिवीलोक में उत्पन्न हुए ।

**ज्येष्ठ आदित्य या आदिदेव (या ब्रह्मा)** के महान् यज्ञ में वारुणी शरीर (वरुण से उत्पन्न) से सप्तर्षियों ने द्वितीय बार जन्म लिया, ऐसा प्रसिद्ध इतिहास है । भृगु, अंगिरा, मरीचि, पुलस्त्य (अगस्त्यरूप में) पुलह, क्रतु, अत्रि और वसिष्ठ—ये ब्रह्मा (वरुण) के आठ[1] पुत्र थे ।

भार्गव ऋषिगण या ब्राह्मण प्रमुख रूप से वरुण के वंशज हैं और वरुण ही उनका आदिपूर्वज है ।

(वरुण यज्ञ में) अंगारों से अंगिरा उत्पन्न हुए । (अंगिरा को ही अग्नि भी कहते हैं) अतः उनके वंशज आग्नेय' नाम से प्रसिद्ध हैं । (आदिम सप्तर्षियों में) – मरीचि प्रथम थे, जो मरीचि (अग्निकिरणों) से उत्पन्न हुए । क्रतु (यज्ञ)

---

(१) वास्तव में—भृगु, अंगिरा, अगस्त्य, अत्रि और वसिष्ठ–ये पांच ही ऋषि द्वितीय जन्म में वरुण के पुत्र थे । अगस्त्य को छोड़ दिया जाये तो चार ऋषि, जिनका गीता (१०।६) में 'चत्वार' नाम से उल्लेख है, जिनकी प्रजा वर्तमान मानव जाति है ।

में जो पुत्र उत्पन्न हुआ, अतः उसका नाम 'क्रतु' हुआ। 'मैं तृतीय हूं' इससे तृतीय ऋषि 'अत्रि' नाम के हुए। केशों (बालों) द्वारा बंधा हुआ, उत्पन्न हुआ, अतः चतुर्थ ऋषि 'पुलस्त्य' कहलाया। लम्बे केशों के साथ उत्पन्न होने के कारण पंचम ऋषि 'पुलह' कहलाये। वसुओं के मध्य उत्पन्न होने तथा वसुमान् (धनवान्) तथा पृथिवी पर आश्रय लेने के कारण छठे ऋषि 'वसिष्ठ' कहलाये।

**भृगुवंशः (वैवस्वतेऽन्तरे)—**

भार्ये भृगोरप्रतिमे उत्तमेऽभिजने शुभे।
हिरण्यकशिपोः कन्या दिव्या नाम परिश्रुता।
पुलोम्नश्चापि पौलोमी दुहिता वरवर्णिनी॥
भृगोस्त्वजनयद्दिव्या काव्यं वेदविदां वरम्।
देवासुराणामाचार्यं शुक्रङ्कविसुतं गुहम्॥
स शुक्रश्चोशना ख्यातः स्मृतः काव्योऽपि नामतः।

× × ×

शुक्रस्य भार्याङ्गी नाम विजज्ञे चतुरः सुतान्।
त्वष्टा वरुत्री द्वावेतौ शण्डामर्कौ च तावुभौ।
रंजनः पृथुरश्मिश्च विद्वान् यश्च बृहद्गिराः।
वरुत्रिणः सुता ह्येते ब्रह्मिष्ठा सुरयाजकाः॥

× × ×

यजन्यां देवयानी च शुक्रस्य दुहिताऽभवत्।
त्रिशिरा विश्वरूपस्तु त्वष्टुः पुत्रोऽभवन्महान्।
विश्वरूपानुजश्चापि विश्वकर्मा यश्च स्मृतः।
भृगोस्तु भृगवो देवा जज्ञिरे द्वादशात्मजाः॥
देव्या तान्सुषुवे सर्वान्काव्यांश्चौत्मजान्प्रभुः।
भुवनो भावनश्चैव अन्यश्चान्यायतस्तथा।
क्रतुश्रवाश्च मूर्द्धा च व्यजनो व्यश्रुषश्च यः।
प्रसवश्चाप्ययजश्चैव द्वादशोऽधिपतिः स्मृतः॥
पौलोम्यजनयत्पुत्रं ब्रह्मिष्ठं वशिनं प्रभुम्।
च्यवनं ........................————॥
जनयामास पुत्रौ द्वौ सुकन्यायां च भार्गवः।
आप्नुवानसं दधीचञ्च तावुभौ साधुसम्मतौ।
सारस्वतः सरस्वत्यां दधीचाच्चोत्पद्यते॥

(वायुपुराण अध्याय ४७)

**अर्थ—भृगुसन्तति (शुक्राचार्य)**—भृगु की दो अनुपम भार्यायें थीं। जिनका श्रेष्ठ कुल था। हिरण्यकशिपु की कन्या थी—'दिव्या'। दानव पुलोमा की पुत्री थी पौलोमी (या पुलोमा) जो उसकी श्रेष्ठ पुत्री थी। भृगु से 'दिव्या' ने उशना काव्य (शुक्राचार्य) को उत्पन्न किया जो वेदों के महान् ज्ञाता और ऋषि थे। वे देवासुरों (पूर्वदेव दैत्यों) के गुरु (पुरोहित) थे, जो शुक्र, कविसुत (काव्य) कहे जाते हैं (और उन्हीं के नाम से) शुक्रग्रह प्रसिद्ध है। उन्हीं के उशना, काव्य और शुक्र नाम प्रसिद्ध हैं।

**शुक्र की सन्तति**—शुक्राचार्य की भार्या आंगी ने चार पुत्रों को उत्पन्न किया—त्वष्टा, वरुत्री, शण्ड और मर्क ! (ये दोनों जोड़े प्रसिद्ध हैं—त्वष्टावरुत्री और शण्डामर्कौं।)

**वरुत्री पुत्रत्रयी**—वरुत्री के तीन पुत्र हुए—रंजन, पृथुरश्मि और बृहद्गिरा ये तीनों महान् वेदवेत्ता (ऋषि), विद्वान् और असुरों के याजक (पुरोहित) थे।

**शुक्रदुहिता देवयानी**—यजनी (जयन्ती-शक्र-इन्द्रपुत्री) से शुक्र ने 'देवयानी' को उत्पन्न किया।

**त्वष्टा सन्तति**—शुक्रपुत्र त्वष्टा का ज्येष्ठपुत्र 'विश्वरूप' था, जिसका अन्य नाम 'त्रिशिरा' भी था। विश्वरूप त्रिशिरा का छोटा भाई 'विश्वकर्मा' (मयासुर) था।

**भृगु के द्वादश पुत्र**—भृगु के अन्य द्वादश पुत्र उत्पन्न हुए जो भृगु या भार्गवदेव कहलाये। इनको तथा द्वादश पुत्रों को भृगु ने 'दिव्या' से उत्पन्न किया। भुवन, भावन, अन्य, अन्यायत, क्रतुश्रवा, मूर्द्धा, व्यजन, व्यश्रुष, प्रसव, अज और अधिपति।

**भृगुपत्नी पौलोमी की सन्तति**—भृगु की दूसरी पत्नी पौलोमी ने ब्रह्मिष्ठ और संयमी ऋषि च्यवन को उत्पन्न किया। ...

'च्यवन' ने सुकन्या में 'आप्नवान्' और दधीचि को उत्पन्न किया। दधीचि ने सरस्वती में 'सारस्वत' (अपान्तरतमा शिशु आंगिरस ऋषि) को उत्पन्न किया।

**दानववंशः**—

अभवन् दनुपुत्राश्च शतं तीव्रपराक्रमाः।
तपस्विनो महावीर्याः प्राधान्येन निबोध तान् ॥
द्विमूर्धा शकुनिश्चैव तथा शंकुशिरा विभुः।
शंकुकर्णो विराधश्च गवेष्ठी दुन्दुभिस्तथा।
अयोमुखः शम्बरश्च कपिलो वामनस्तथा ॥
मरीचिर्मघवांश्चैव इरा शंकुशिरा वृकः।

विक्षोभणश्च केतुश्च केतुवीर्यशतह्रदौ ।
इन्द्रजित् सत्यजिच्चैव वज्रनाभस्तथैव च ।
महानाभश्च विक्रान्तः कालनाभस्तथैव च ॥
एकचक्रो महाबाहुस्तारकश्च महाबलः ।
वैश्वानरः पुलोमा च विद्रावणमहासुरौ ॥
स्वर्भानुर्वृषपर्वा च तुहुण्डश्च महासुरः ।
सूक्ष्मश्चैवातिचन्द्रश्च उर्णनाभो महागिरिः ॥
असिलोमा च केशी च शठश्च बलको मदः ।
तथा गगनमूर्धा च कुम्भनाभो महासुरः ॥
प्रमदो मयः कुपथो हयग्रीवश्च वीर्यवान् ।
वैसृपः सविरूपाक्षसुपथौऽथ हराहरौ ॥
हिरण्यकशिपुश्चैव शतमायश्च शम्बरः ।
शरभः शलभश्चैव विप्रचित्तिश्च वीर्यवान् ॥
एते सर्वे दनोः पुत्राः कश्यपादभिजज्ञिरे ।
विप्रचित्तिप्रधानास्ते दानवाः सुमहाबलाः ।

X X X

स्वर्भानोस्तु प्रभा कन्या पुलोम्नश्च सुतात्रयम् ।
उपदानवी ह्यशिराः शर्मिष्ठा वार्षपर्वणी ॥
पुलोमा कालिका चैव वैश्वानरसुते उभे ।

X X X

पौलोमाः कालकेयाश्च दानवास्ते महाबलाः ।
अवध्या देवतानां च हिरण्यपुरवासिनः ॥

**कश्यपपत्नी दनु के सौ पुत्र**—दनु के सौ पुत्र (या अनेक वंशज) भयानक रूप से पराक्रमी थे । उनमें से अनेक तपस्वी (ऋषि) भी हुए। उन महाबलशालियों में कुछ प्रधान थे—द्विमूर्धा, शकुनि, शंकुशिरा, शंकुकर्ण, विराध, गवेष्ठि, दुन्दुभि, अयोमुख, शम्बर, कपिल, वामन, मरीचि, मघवान्, इरा, शंकुशिरा, वृक, विक्षोभण, केतु, केतुवीर्य, शतह्रद, इन्द्रजित्, सत्यजित्, वज्रनाभ, महानाभ, कालनाभ, एकचक्र, महाबाहु; तारक, वैश्वानर, पुलोमा (वैश्वानर और पुलोमा महासुर और महापराक्रमी थे) ।

स्वर्भानु, वृषपर्वा, तुहुण्ड, सूक्ष्म, अतिथि, उर्णनाभ, महागिरि, असिलोमा, केशी, शठ, बलक, मद, गगनमूर्धाः, कुम्भनाभ, प्रमद, मय, कुपथ, हयग्रीव, वैसृप, सरूपाक्ष, सुपथ, हर, अहर, हिरण्यकशिपु और सौभाग्यवाला शम्बर, शरभ,

शलभ और 'विप्रचित्ति'—ये सभी दनुपुत्र कश्यप द्वारा उत्पन्न हुए। इनमें विप्रचित्ति ज्येष्ठ एवं प्रधान था।

(विप्रचित्ति के पुत्र सैंहिकेय) स्वर्भानु (राहु) की कन्या प्रभा थी। पुलोमा दानव की तीन पुत्रियां थीं—उपदानवी, हयशिरा (और एक अन्य)। वृषपर्वा की पुत्री शर्मिष्ठा थी।

**पौलोमा और कालकेय दानवगण**—वैश्वानर दानव की दो अति प्रसिद्ध पुत्रियां थीं—पुलोमा और कालिका। इनके पुत्र (और वंशज भी) 'पौलोम' और 'कालकेय' 'दानवगण' कहलाये, जो 'हिरण्यपुर' नाम के प्रसिद्ध दानवनगर में रहते थे। वे (प्रायः) देवों के लिए भी अबध्य थे—(अपराजेय थे)।

**सैंहिकेयाः—**

व्यंशः शल्यश्च बलिनौ नभश्चैव महाबलः।
वातापिर्नमुचिश्चैव इल्वलः खसृतस्तथा।
अञ्जिको नरकश्चैव कालनाभस्तथैव॥
शुक्रः पोतरणश्चैव वज्रनाभश्चैव वीर्यवान्॥
राहुर्ज्येठस्तु तेषां वै सूर्यचन्द्रविमर्दनः।
मूकश्चैव तुहुण्डश्च ह्लादपुत्रौ बभूवतुः॥

(हरिवंश अध्याय ३)

**दानवगण**—(विप्रचित्तिपत्नी सिंहिका के पुत्र)—व्यंस, शल्य, नभ, वातापि, 'नमुचि', 'इल्वल', खसृम, अञ्जिक, नरक, कालनाभ, शुक्र, पातेरण, वज्रनाभ और राहु (स्वर्भानु)—जो इनमें सबसे बड़ा था और जिसने सोम सूर्य का मर्दन किया।

**ह्लादपुत्र**—मूक और तुहुण्ड-असुर ह्लाद के पुत्र थे।

**दानववंशः—**

चतुस्त्रिशत् दनोः पुत्राः ख्याताः सर्वत्र भारत।
तेषां प्रथमजो राजा विप्रचित्तिर्महाबलः।
शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः।
असिलोमा च केशी च दुर्जयश्चैव दानवः।
अयःशिरा अश्वशिरा अश्वशंकुश्च वीर्यवान्।
तथा गगनमूर्धा च वेगवान् केतुमांश्च यः।
स्वर्भानुरश्वोऽश्वपतिर्वृषपर्वाजकस्तथा।
अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महाबलः।
इषुपादेकचक्रश्च विरूपाक्षो हराहरौ।

निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा ।
शरभः शलभश्चैव सूर्याचन्द्रमसौ तथा ॥ (१।६५।२१-२५)

X X X

दनुपुत्रा महाराज दश दानववंशजाः ।
एकाक्षो मृतपा वीरः प्रलम्बनरकावपि ।
वातापी शत्रुतपनः शठश्चैव महासुरः ।
गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः ॥ (१।६५।२८-३०)
दनायुषः पुनः पुत्राश्चत्वारोऽसुरपुङ्गवाः ।
विक्षरौ बलवीरौ च वृत्रश्चैव महासुरः ॥ (महाभारते १।६५।२६)

**अर्थ**—(महाभारत में) दनु के जगत् विख्यात चौबीस पुत्र थे—इनमें प्रथम विप्रचित्ति महाबली दानवों का राजा था। अन्य थे—शम्बर, नमुचि, पुलोमा, असिलोमा, केशी, दुर्जय, अयःशिरा, अश्वशिरा, अश्वशंकु, गगनमूर्धा, वेगवान्, केतुमान्, स्वर्भानु, अश्व, अश्वपति, वृषपर्वा, अजक, अश्वग्रीव, सूक्ष्म, तुहुण्ड, इषुपाद, एकचक्र, विरूपाक्ष, हर, अहर, निचन्द्र, निकुम्भ, कुपट, कपट, शरभ, शलभ तथा सूर्य और चन्द्रमा।

**दश प्रसिद्ध दानव वंश**—इन दश दानवों के वंश प्रसिद्ध हुए—एकाक्ष, मृतपा, वीर, प्रलम्ब, नरक, वातापि, शत्रुतपन, शठ, गविष्ठ, वनायु और 'दीर्घजिह्व'।

**चार दनायु पुत्र**—(कश्यप की तृतीय पत्नी) दनायु के चार महान् असुर पुत्र थे विक्षर, 'बल', वीर और 'वृत्रासुर'।

**सुपर्णवंशः**—

विनतायास्तु पुत्रौ द्वावरुणौ गरुडस्तथा ।
सुपर्णः पततां श्रेष्ठो दारुणः स्वेन कर्मणा ।
(हरिवंशे ३।१०६)

वैनतयसुतैः सूत षड्भिस्ततमिदं कुलम् ।
सुमुखेन सुनाम्ना च सुनेत्रेण सुवर्चसा ॥
सुरुचा पक्षिराजेन सुबलेन च मातले ।

× × ×

कश्यपस्य ततो वंशे जातैर्भूतविवर्धनैः ।
नामानि चैषां वक्ष्यामि तथा प्राधान्यतः श्रृणु ॥
सुवर्णचूडो नागाशी दारुणश्चण्डतुण्डकः ।
अनिलश्चानलश्चैव विशालाक्षोऽथ कुण्डली ॥

पंकजिद् वज्रविष्कम्भो वैनतेयोऽथ वामनः ।
वातवेगो दिशाचक्षुर्निमिषोऽनिमिषस्तथा ।
त्रिरावः सप्तरावश्च वाल्मीकि द्वीपकस्तथा ।
दैत्यद्वीपः सरिद्वीपः सारसः पद्मकेतनः ॥
सुमुखश्चित्रकेतुश्च चित्रबर्हस्तथानघः ।
मेषहृत् कुमुदो दक्षः सर्पान्तः सहभोजनः ।
गुरुभारः कपोतश्च सूर्यनेत्रश्चिरान्तकः ।
विष्णुधर्मा कुमारश्च परिबर्हो हरिस्तथा ।
सुस्वरो मधुपर्कश्च हेमवर्णस्तथैव च ॥
मालयो मातरिश्वा च निशाकरदिवाकरौ ॥
एते प्रदेशमात्रेण मयोक्ता गरुडात्मजाः ॥

(महाभारते, उद्योग० १६ अध्याय)

तस्माज्जातोऽहमरुणात् सम्पातिश्च ममाग्रजः ।
जटायुरिति मां विद्धि श्येनीपुत्रमरिन्दम ॥ (रामायणे ३।१४।३३)

**अर्थ—वैनतेय सुपर्ण = अरुण और गरुड**—(कश्यपपत्नी) विनता के दो पुत्र हुए—अरुण और गरुड । इनमें सुपर्ण (गरुड) अति भयंकर और महाबली श्रेष्ठ पक्षी (पंखयुक्त) मानव था, जिसने अपने कर्मों से बड़ी ख्याति पाई ।

**छः विनतापुत्र सुपर्ण**—विनता के छः पुत्रों से विनता कुल विस्तृत हुआ—ये थे—सुमुख, सुनामा, सुनेत्र, सुवर्चा, सुरुच और महान् पक्षिराज सुबल ।

**गरुड वंशज – प्रधान प्रधान सुपर्ण मानव** – प्राणियों (मनुष्यों) की संख्या बढ़ानेवाले काश्यप गरुड के वंश में जो प्रधान प्रधान सुपर्ण हुए, उनके नाम सुनिये—सुवर्णचूड, नागाशी, दारुण, चण्डतुण्डक, अनिल, अनल, विशालाक्ष, कुण्डवी, पंकजित्, वज्रविष्कम्भ, वामन, वैनतेय, वातवेग, दिशाचक्षु, निमिष, अनिमिष, त्रिराव, सप्तराव, वाल्मीकि, द्वीपक, दैत्यद्वीप, सरिद्वीप, सारस, पद्मकेतन, सुमुख, चित्रकेतु, चित्रबर्ह, अनघ, मेषहृत्, कुमुद, दक्ष, सर्पान्त, सहभोजन, गुरुभार, कपोत, सूर्यनेत्र, चिरान्तक, विष्णुधर्म, कुमार, परिबर्ह, हरि, सुस्वर, मधुपर्क, हेमवर्ण, मालय, मातरिश्वा, निशाकर और दिवाकर—ये गरुड़ के कुछ वंशज संक्षेप में कहे गये हैं ।

**जटायु और सम्पाति**—मेरा जन्म अरुण के वंश में हुआ है; सम्पाति मेरा बड़ा भाई है और मेरा नाम जटायु है, मैं श्येनीपुत्र हूं ।

**नागवंशः—**

सुरसायाः सहस्रं तु सर्पाणाममितौजसाम् ।

अनेकशिरसां तात खेचराणां महात्मनाम् ॥

× × ×

तेषां प्रधानाः सततं शेषवासुकितक्षकाः ।
ऐरावतो महापद्म कम्बलाश्वतरावुभौ ॥
एलापत्रस्तथा शङ्खः कर्कोटकधनंजयौ ॥
महानीलमहाकर्णौ धृतराष्ट्रबलाहकौ ॥
कुहरः पुष्पदंष्ट्रश्च दुर्मुखः सुमुखस्तथा ।
शङ्खश्च शङ्खपालश्च कपिलो वामनस्तथा ॥
नहुषः शङ्खरोमा च मणिरित्येवमादयः ॥

(हरिवंशे ३।११२-११५)

वासुकिस्तक्षकश्चैव कर्कोटकधनंजयौ ।
कालियो नहुषश्चैव कम्बलाश्वतरावुभौ ॥
बाह्यकुण्डो मणिर्नागस्तथैवापूरणः खगः ।
वामनश्चैलपत्रश्च कुकुरः कुकुणस्तथा ॥
आर्यको नन्दकश्चैव तथा कलशपोतकौ ।
कैलाशकः पिञ्जरको नागश्चैरावतस्तथा ॥
सुमनोमुखो दधिमुखः शङ्खो नन्दोपनन्दकौ ।
प्राप्तः कोटरश्चैव शिखी बिष्ठूरिकस्तथा ॥
तित्तिरिहस्तभद्रश्च कुमुदो माल्यपिण्डकः ।
द्वौ पद्मौ पुण्डरीकश्च पुष्पो मुद्गरपर्णकः ।
करवीरः पीठरकः संवृतो वृत्त एव च ।
पिण्डारो बिल्वपत्रश्च मूषिकादः शिरीषकः ।
दिलीपः शङ्खशीर्षश्च ज्योतिष्कोऽथापराजितः ॥
कौरव्यो धृतराष्ट्रश्च कुहुरः कृशकस्तथा ॥
विरजा धारणश्चैव सुबाहुर्मुखरो जयः ।
बधिरान्धौ विशुण्डिश्च विरसः ।
एते चान्ये च बहवः कश्यपस्यात्मजाः स्मृताः ॥

(महाभारते उद्योग १०३ अध्याय)

(तथा नागनामानि महाभारते १।२५)

अर्थ—(कद्रू पुत्रनागगण) सुरसा (कद्रू ?) के सहस्र पुत्र बड़े तेजस्वी, अनेक शिर वाले और आकाशगामी थे।......

उनमें प्रधान थे—वासुकि, तक्षक, ऐरावत, महापद्म, कम्बर, अश्वतर,

एलापत्र, शंख, कर्कोटक, धनंजय, महानील, महाकर्ण, धृतराष्ट्र, बलाहक, कुहर, पुष्पदंष्ट्र, दुर्मुख, सुमुख, शंख, शंखपाल, कपिल, वामन, नहुष, शंखरोमा और मणिनाग इत्यादि।

**प्रमुख काद्रवेय नागगण**—वासुकि, तक्षक, कर्कोटक, धनंजय, कालिय, नहुष, कम्बल, अश्वतर, बाह्यकुण्ड, मणिनाग, अपूरण, खग, वामन, ऐलपत्र, कुकुर, कुकुण, आर्यक, नन्दक, कलश, पोतक, कैलाशक, पिञ्जरक, ऐरावत, सुमनोमुख, दधिमुख, शंख, नन्द, उपनन्दक, आप्त, कोटर, शिखी, बिठूरिक, तित्तिर, हस्तभद्र, कुमुद, माल्यपिण्डक, पद्मनाभ के दो नाग, पुण्डरीक, पुष्प, मुद्गर, पर्णक, करवीर, पीठरक, संवृत, वृत्त, पिण्डार, बिल्वपत्र, मूषिकाद, शिरीषक, दिलीप, शंखशीर्ष, ज्योतिष्क, अपराजित, कौरव्य, धृतराष्ट्र, कुहुर, कृशक, विरजा, धारण, सुबाहु, मुखर, जय, बधिर, अन्ध, विशुण्डि, विरस इत्यादि बहुत से काश्यपेय-काद्रवेय नाग थे।

**एकादशरुद्राः**—

सुरभी कश्यपाद् रुद्रानेकादश विनिर्ममे।
महादेवप्रसादेन तपसा भाविता सती।
अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च भारत॥
हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः।
वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा।
मृगव्याधश्च सर्पश्च कपाली च विशाम्पते।

(हरिवंशपुराण ३)

**अर्थ**—महादेव की कृपा से सती सुरभी कश्यपपत्नी ने एकादश रुद्रों को जन्म दिया। उनके नाम थे—अजैकपात्, अहिर्बुन्ध्य, त्वष्टा, रुद्र, हर, बहुरूप, त्र्यम्बक, अपराजित, शम्भु, कपर्दी, रैवत, मृगव्याध, सर्प और कपाली।

**राक्षसवंशः (प्राक्पौलस्त्यवंशः)**—

**(रामायण, उत्तरकाण्ड सर्ग ७)**

तत्र हेतिः प्रहेतिश्च भ्रातरौ राक्षसाधिपौ।
मधुकैटभसंकाशौ बभूवतुररिंदमौ॥
प्रहेतिर्धार्मिकस्तत्र तपोवनं गतस्तदा।
हेतिर्दारक्रियार्थं परं यत्नमथाकरोत्।
स कालभगिनीं कन्यां भयां नाम महाभयाम्।
उदावहदमेयात्मा स्वयमेव महामतिः।
तस्यां च जनयामास हेती राक्षसपुङ्गवः।

पुत्रं पुत्रवतां श्रेष्ठो विद्युत्केशमिति श्रुतम् ॥
विद्युत्केशो हेतिपुत्र स दीप्तार्कसमप्रभः ।
संध्यादुहितरं सोऽथ संध्यातुल्या प्रभावतः ॥

× × ×

केनचित्त्वथ कालेन राम सालकटंकटा ।
विद्युत्केशाद् गर्भमाप धनराजिरिवार्णवात् ॥

× × ×

ततः सुकेशो वरदानगर्वितः……………।

× × ×

ततः काले सुकेशस्तु जनयामास राघव ।
माल्यवन्तं सुमालिं च मालिं च बलिनां वरम् ॥

× × ×

एतस्मिन्नेव काले तु यथाकामं च राघव ।
नर्मदा नाम गन्धर्वी बभूव रघुनन्दन ।
तस्या कन्यात्रयं ह्यासीद्ह्रीश्रीकीर्तिसमद्युति ।
ज्येष्ठक्रमेण सा तेषां राक्षसानाराक्षसी ।
कन्यास्ताः प्रददौ हृष्टा पूर्णचन्द्रनिभाः ।

× × ×

ततो माल्यवतो भार्या सुन्दरी नाम नामतः ।
स तस्यां जनयामास यदपत्यं निबोध तत् ।
वज्रमुष्टिर्विरूपाक्षो दुर्मुखश्चैव राक्षसः ।

**अर्थ**—हेति और प्रहेति नाम के दो भाई राक्षसों के अधिपति थे—जो मधु और कैटभ असुरों के समान थे । उनमें प्रहेति धर्मातमा था, अतः तपस्या हेतु वन में चला गया । हेति ने विवाह के लिए प्रयत्न किया, उसने काल (गन्धर्व) की भगिनी भया, जो भयंकर रूपवाली थी, से विवाह किया । राक्षसराज हेति ने उससे 'विद्युत्केश' नाम का पुत्र उत्पन्न किया । विद्युत्केश प्रदीप्तसूर्य के समान तेजस्वी था । उसने संध्यातुल्य प्रभाववाली संध्या की पुत्री सालकटंकटा' से विवाह किया । उसने विद्युत्केश से गर्भ धारण किया और 'सुकेश' नाम का पुत्र उत्पन्न किया ।……

सुकेश वरदानों से गर्वित था ।……

**सुकेशपुत्रत्रयी**—यथासमय सुकेश के तीन महाबली पुत्र उत्पन्न हुए—माल्यवान्, सुमाली और माली । इसी समय किसी गन्धर्व की नर्मदा नाम की

गन्धर्वी पत्नी थी। उसकी तीन कन्यायें थीं, जो क्रमशः ह्री, श्री और कीर्ति (देवपत्नियों) के समान शोभावाली थीं। वे अराक्षसी (गन्धर्वी) तीनों राक्षसराजों को ब्याही गईं—इनमें माल्यवान् की पत्नी 'सुन्दरी' नामवाली थी।

**माल्यवान् की सन्तान**—माल्यवान् ने 'सुन्दरी' नाम की पत्नी से जिन सन्तानों को उत्पन्न किया, वे थे—वज्रमुष्टि, विरूपाक्ष, दुर्मुख।

सुप्तघ्नो यज्ञकोपश्च मत्तोन्मत्तौ तथैव च।
अनला चाभवत् कन्या सुन्दर्यां राम सुन्दरी ॥
सुमाली जनयामास यदपत्यं निशाचरः।
केतुमत्यां महाराज तन्निबोधानुपूर्वशः ॥
प्रहस्तोऽकम्पनश्चैव विकटः कालिकामुखः।
धूम्राक्षश्चैव दण्डश्च सुपार्श्वश्च महाबलः।
संह्रादि प्रघसश्चैव भासकर्णश्च राक्षसः।
राका पुष्पोत्कटा चैव कैकसी च शुचिस्मिताः ॥
कुम्भीनसी च इत्येते सुमालेः प्रसवाः स्मृताः।

X X X

अनिलश्चानलश्चैव हरः सम्पातिरेव च।
एते विभीषणामात्या मालेयास्ते निशाचराः ॥

वाल्मीकि रामायणे ७।४-५ सर्ग)

**अर्थ**—सुप्तघ्न, यज्ञकोप, मत्त, उन्मत्त और एक कन्या अनला माल्यवान् ने सुन्दरी से उत्पन्न की।

**सुमाली सन्तति**—सुमाली ने 'केतुमती' पत्नी से जो सन्तान उत्पन्न की, उसके नाम हैं—प्रहस्त, अकम्पन, विकट, कालिकामुख, धूम्राक्ष, दण्ड, सुपार्श्व, संह्रादि, प्रघस और भासकर्ण राक्षस।

**कन्यायें थीं**—राका, पुष्पोत्कटा, कैकसी और कुम्भीनसी—ये सुमाली की पुत्रियां थीं।

**माली के चार पुत्र**—अनिल, अनल, हर और सम्पाति—ये चारों राक्षस, विभीषण के मन्त्री थे।

**पौलस्त्यवंशः**—

स्वयम्भूः सर्वलोकानां प्रभुः स्रष्टा महातपाः।
पुलस्त्यो नाम तस्यासीन्मानसो दयितः सुतः ॥

X X X

स जज्ञे विश्रवा नाम तस्यात्मार्धेन वै द्विजः।

तस्य वैश्रवणो नाम गवि पुत्रोऽभवत् प्रभुः।
यक्षाणामाधिपत्यं च राजराजत्वमेव च ॥
स राजराजो लङ्कायां न्यवसन्नरवाहनः।
राक्षसीः प्रददौ तिस्रः पितुर्वै परिचारिकाः ॥
पुष्पोत्कटा च राका च मालिनी च विशाम्पते ॥
पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ।
कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि ॥
मालिनी जनयामास पुत्रमेकं विभीषणम्।
राकायां मिथुनं जज्ञे खरः शूर्पणखा तथा।

(महाभारत अध्याय ३।२७४, २०५)

अर्थ—समस्त मानव जातियों के आदिजनक प्रभु, महातपा स्वयम्भू (या स्वायम्भुव मनु) थे। उनके प्रिय मानस पुत्र पुलस्त्य थे।

(पुलस्त्य के वंश में किसी) पौलस्त्य ऋषि के पुत्र विश्रवा हुए। उनका पुत्र किसी 'गौ' नाम वाली पत्नी से हुआ, उसका नाम 'वैश्रवण कुबेर' था। वह यक्षों का राजाओं का भी राजा यक्षाधिपति था। वह 'राजराज' या 'यक्षराज' 'नरवाहन' लंका में शासन करता था। कुबेर ने अपने पिता की सेवा में तीन परिचारिकायें दीं—पुष्पोत्कटा, राका और मालिनी,।

पुष्पोत्कटा के दो पुत्र उत्पन्न हुए—दशग्रीव (रावण) और कुम्भकर्ण—जो प्रसिद्ध राक्षसराज और बल में अप्रतिम थे। मालिनी के एकमात्र पुत्र विभीषण उत्पन्न हुआ और राका के खर (राक्षस) और शूर्पणखा उत्पन्न हुई।

**यक्षवंशः (वैश्रवणः)—**

ज्येष्ठं वैश्रवणं तस्य सुषुवे देववर्णिनी।
दिव्येन विधिना युक्तमार्षेणैव श्रुतेन च।
राक्षसेन च रूपेण आसुरेण बलेन च ॥

X X X

पिता दृष्ट्वाब्रवीत् तत्र कुबेरोऽयमिति स्वयम्।
कुत्सायां क्विति शब्दोऽयं शरीरं बेरमुच्यते ॥
कुबेरः कुशरीरत्वान्नाम्ना तेन च सोऽङ्कितः।
यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव।
तस्माद्वैश्रवणो नाम नाम्ना लोके भविष्यति ॥
ऋद्धायां कुबेरोऽयजद्विश्रुतं नलकूबरम् ॥

अर्थ—वैश्रवणकुबेर (नरवाहन) यक्षराज—विश्रवा के ज्येष्ठ पुत्र वैश्रवण

कुबेर को उनकी पत्नी देववर्णिनी ने उत्पन्न किया। वह वैश्रवण कुबेर दिव्य आर्ष श्रौतविधि से संस्कृत हुआ। वह रूप में राक्षस और बल में आसुरी बल से सम्पन्न था।

उसे उत्पन्न होते ही पिता (विश्रवा) ने कहा—यह 'कुबेर' है–'कु' शब्द निन्दार्थक है तथा 'बेर' कहते हैं 'शरीर' को। अतः कुत्सित शरीर के कारण वह 'कुबेर' कहलाया। विश्रवा का पुत्र विश्रवा के सदृश ही था। अतः उसका नाम लोक में 'वैश्रवण कुबेर' विख्यात हुआ।

कुबेर ने 'ऋद्धि' नाम की पत्नी से अपने पुत्र नलकूबर (नल कौबेरक) को उत्पन्न किया।

**राक्षसवंशः—**

महोदरः प्रहस्तश्च महापाशः खरस्तथा।
पुष्पोत्कटायाः पुत्रास्ते कन्या कुम्भीनसी तथा।
त्रिशिरा दूषणश्चैव विद्युज्जिह्वश्च राक्षसः॥
कन्या ह्यसलिका चैव वाकायाः प्रसवाः स्मृताः।
इत्येते क्रूरकर्माणः पौलस्त्या राक्षसा दश।

**अर्थ—(दश प्रसिद्ध राक्षस)** महोदर, प्रहस्त, महापाश, खर—ये पुष्पोत्कटा के पुत्र थे तथा उसकी एक कन्या थी—कुम्भीनसी। वाका (या राका) के पुत्र थे—त्रिशिरा, दूषण और विद्युज्जिह्व राक्षस तथा कन्या थी–असलिका। पौलस्त्य वंश के ये दश क्रूरकर्मा राक्षस थे।

**सप्त विद्या राक्षसाः—**

पौलस्त्या नैर्ऋताश्चैव आगस्त्याः कौशिकास्तथा।
यातुधाना ब्रह्मधाना वार्ताश्चैव निशाचराः॥
इत्यैता सप्त तेषां वै जातयो राक्षसाः स्मृताः॥

X X X

अन्नादाः पिशितादाश्च पुरुषादाश्च ते स्मृताः। (वायुपुराणे)

**अर्थ**—राक्षसों की सात जातियां थीं—पौलस्त्य, नैर्ऋत, आगस्त्य, कौशिक, यातुधान, ब्रह्मधान, वार्त और निशाचर।

राक्षसों को ही 'अन्नाद' पिशिताद (पिशाच) और पुरुषाद कहा जाता है।

**गन्धर्ववंशः—**

भीष्मसेनोग्रसेनौ च सुपर्णो वरुणस्तथा।
गोपतिर्धृतराष्ट्रश्च सूर्यवर्चाश्च सप्तमः।
सत्यवागर्कपर्णश्च प्रयुतश्चापि विश्रुतः।

भीमश्चित्ररथश्चैव विख्यातः सर्वविद् वशी ।
तथा शालिशिरा राजन् पर्जन्यश्च चतुर्दशः ।
कलिः पंचदशस्तेषां नारदश्चैव षोडशः ।
इत्येते देवगन्धर्वा मौनेयाः परिकीर्तिताः ॥

(महाभारत १।६५।४२-४४)

**अर्थ**—कश्यपपत्नी मुनि के सोलह देव गन्धर्व पुत्र थे—भीमसेन, उग्रसेन, सुपर्ण, वरुण, गोपति, धृतराष्ट्र, सूर्यवर्चा, सत्यवाक्, अर्कपर्ण, प्रयुत, भीम, चित्ररथ, शालिशिरा, पर्जन्य, कलि और सोलहवें नारद ।

(हरिवंश १।अ० ४)

**आद्या अधिपतयः**—

अभिषिच्याधिराज्ये तु पृथुं वैन्यं पितामहः ।
ततः क्रमेण राज्यानि व्यादेष्टुमुपचक्रमे ।
द्विजानां वीरुधां चैव नक्षत्रग्रहयोस्तथा ।
यज्ञानां तपसां चैव सोमं राज्येऽभ्यषेचयत् ॥
अपां तु वरुणं राज्ये राज्ञां वैश्रवणं प्रभुम् ।
बृहस्पतिं तु विश्वेषां ददावाङ्गिरसं पतिम् ॥
भृगूणामधिपं चैव काव्यं राज्येऽभ्यषेचयत् ।
आदित्यानां तथा विष्णुं वसूनामथ पावकम् ।
प्रजापतीनां दक्षं तु मरुतामथ वासवम् ।
दैत्यानां दानवानां च प्रह्लादममितौजसम् ॥
वैवस्वतं च पितृणाम् यमं राज्येऽभ्यषेचयत् ।

× × ×

नारायणं तु साध्यानां रुद्राणां वृषभध्वजम् ॥
विप्रचित्तिं तु राजानं दानवानामथादिशत् ।

× × ×

गन्धर्वाणामधिपतिं चक्रे चित्ररथं प्रभुम् ।
नागानां वासुकिं चक्रे सर्पाणामथ तक्षकम् ॥
वारणानां च राजानमैरावतमथादिशत् ।
उच्चैःश्रवसमश्वानां गरुडं चैव पक्षिणाम् ॥

× × ×

**दिशापालाः**—

पूर्वस्यां दिशि पुत्रं वैराजस्य प्रजापतेः ।

दिशपालं सुधन्वानं राजानं चाभ्यषेचयत् ।
दक्षिणस्यां महात्मानं कर्दमस्य प्रजापतेः ।
पुत्रं शङ्खपदं नाम राजानं सोऽभ्यषेचयत् ।
पश्चिमायां दिशि तथा रजसः पुत्रमच्युतम् ।
केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयत् ।
तथा हिरण्यरोमाणं पर्जन्यस्य प्रजापतेः ।
उदीच्यां दिशि दुर्धर्षं राजानं सोऽभ्यषेचयत् ॥

(हरिवंशे १।४)

**अर्थ**—आदिम जातियों के प्रथम अधिपति या प्रमुख अधिपति—प्रजापति ने पृथिवी के राज्य पर सर्वप्रथम पृथुवैन्य को अभिषिक्त किया। अन्य राज्यों के अधिपतियों का निर्देश क्रमशः इस प्रकार किया गया— ब्राह्मणों और वनस्पतियों, ग्रह और नक्षत्रों का अधिपति (पृथिवी पर) सोम (और आकाश में चन्द्रमा) बनाया गया। सोम यज्ञ और तप का भी अधिपति था। समुद्र (या समुद्रीय द्वीपों) का अधिपति वरुण हुआ। राजाओं (या यक्षों) का अधिपति वैश्रवण कुबेर को बनाया। सभी आंगिरसों के अधिपति बृहस्पति आंगिरस थे। भार्गवों के अधिपति उशना काव्य (शुक्राचार्य) हुए। आदित्यों (देवों) के अधिपति विष्णु बनाये गये और वसुओं का अधिपति 'अग्नि' हुआ। प्रजापति के अध्यक्ष दक्ष प्राचेतस बनाये गये। मरुतों के राजा हुए इन्द्र। दैत्यों और दानवों के इन्द्र (अधिपति) दैत्येन्द्र प्रह्लाद हुए। पितरों के राज्य पर वैवस्वतयम का अभिषेक हुआ।

साध्य देवगण के अधिपति नारायण हुए, रुद्रों के अधिपति महादेव हुए और दानवों के अधिपति (राजा) विप्रचित्ति थे।

गन्धर्वों का प्रमुख राजा चित्ररथ था। नागों का प्रथम राजा वासुकि और सर्पों का तक्षक था। हाथियों का राजा ऐरावत, अश्वों का उच्चैःश्रवा तथा सुपर्णों का प्रथम राजा गरुड़ था।

**आदिम दिग्पालगण**—(पृथु से पूर्व) पूर्व दिशा के दिग्पाल वैराज प्रजापति के पुत्र सुधन्वा हुए। दक्षिणी भूभाग के दिग्पाल कर्दम प्रजापति के पुत्र शंखपाद थे। पश्चिम दिशा में रज के पुत्र अच्युत केतुमान् का अभिषेक हुआ तथा उत्तर दिशा में, दुर्धर्ष राजा हिरण्यरोमा जो प्रजापति पर्जन्य के पुत्र थे, का राज्याभिषेक हुआ।

**आदित्याः**—

अदित्यां द्वादशादित्या संभूता भुवनेश्वराः ।

धाता मित्रोऽर्यमा शक्रो वरुणस्त्वंश एव च ।
भगो विवस्वान् पूषा च सविता दशमस्तथा ।
एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते ।
जघन्यजस्तु सर्वेषामादित्यानां गुणाधिकः ।।

(महा० १।६५।१४-१६)

अर्थ—अदिति से बारह पुत्र आदित्य उत्पन्न हुए जो भुवनों के ईश्वर (अधिपति) थे । उनके नाम थे—धाता, मित्र, अर्यमा, शक्र, वरुण, अंश, भग, विवस्वान्, पूषा, सविता, त्वष्टा और बारहवें विष्णु—इनमें सबसे कम आयु के थे, परन्तु गुणों में सर्वाधिक थे ।

**दैत्यवंशः—**

एक एव दिते पुत्रोः हिरण्यकशिपुः स्मृतः ।
नाम्ना ख्यातास्तु तस्येमे पञ्चपुत्रा महात्मनः ।
प्रह्लादः पूर्वजस्तेषां संह्लादस्तदनन्तरम् ।
अनुह्लादस्तृतीयोऽभूत् तस्माच्च शिबिवाष्कलौ ।।
प्रह्लादस्य त्रयः पुत्राः ख्याताः सर्वत्र भारत ।।
विरोचनश्च कुम्भश्च निकुम्भश्चेति भारत ।
विरोचनस्य पुत्रोऽभूद् बलिरेक प्रतापवान् ।
बलेश्च प्रथितः पुत्रो बाणो नाम महासुरः । (१।६५।१७-२०)

अर्थ—दिति का एक ही (विशिष्ट) पुत्र हिरण्यकशिपु था, उसके पांच विख्यात पुत्र थे—सबसे बड़ा प्रह्लाद, उससे छोटा संह्लाद, तृतीय अनुह्लाद, चतुर्थ शिबि और पंचम वाष्कल। प्रह्लाद के तीन प्रख्यात पुत्र थे—विरोचन, कुम्भ और निकुम्भ । विरोचन का एक मात्र प्रतापी पुत्र बलि हुआ। बलि का एकमात्र प्रसिद्ध पुत्र महान् असुर बाणासुर था ।

**दनायुवंशः—**

दनायुषः पुनः पुत्राश्चत्वारोऽसुरपुङ्गवाः ।
विक्षरो बलवीरौ च वृत्रश्चैव महासुरः । (१।६५।३३)

अर्थ—दनायु के चार असुरेन्द्र पुत्र थे—विक्षर, बल, वीर और महासुर वृत्र (अहिदानव) ।

**कालकेयाः—**

कालायाः प्रथिताः पुत्राः कालकल्पाः प्रतारिणः ।
प्रविख्याता महावीर्या दानवेषु परंतपाः ।।
विनाशनश्च क्रोधश्च क्रोधहन्ता तथैव च ।।
क्रोधशत्रुस्तथैवान्ये कालकेया इति श्रुताः ।। (१।६५।३४-३५)

**अर्थ—कालिका के पुत्र दानव कालकेय**—काला के प्रख्यात पुत्र कालकेय थे। वे कालतुल्य संहारक योद्धा थे। वे दानवों में शत्रुघाती एवं महाबली थे। विनाशन, क्रोध, क्रोधहन्ता, क्रोधशत्रु तथा अन्य कालकेय इतिहास में प्रसिद्ध हुए।

**शुक्रवंशः**—

असुराणामुपाध्यायः शुक्रस्त्वथिसुतोऽभवत्।
ख्याताश्चोशनसः पुत्राश्चत्वारोऽसुरयाजकाः।
त्वष्टाधरस्तथात्रिश्च द्वावन्यौ रौद्रकर्मिणौ ॥ (१।६५।३६-३७)

**अर्थ**—शुक्र के चार पुत्र—असुरों के उपाध्याय (पुरोहित) भृगु के पुत्र थे। उनके चार विख्यात पुत्र हुए, जो महान् असुर पुरोहित थे—त्वष्टा, धर (वरुत्री) और दो अन्य (शण्ड और मर्क) रौद्रकर्म (भयंकर कर्म) में निपुण थे।

**सुपर्णाः**—

तार्क्ष्यश्चारिष्टनेमिश्च तथैव गरुडारुणौ।
आरुणिर्वारुणिश्चैव वैनतेयाः प्रकीर्तिताः ॥ (१।६५।४०)

**अर्थ**—तार्क्ष्य, अरिष्टनेमि, गरुड़, अरुण, आरुणि और वारुणि—ये वैनतेय (विनता के पुत्र या वंशज) थे।

**नागवंशः**—

शेषोऽनन्तो वासुकिश्च तक्षकश्च भुजङ्गमः।
कूर्मश्च कुलिकश्चैव काद्रवेयाः प्रकीर्तिताः ॥ (१।६५।४१)

**अर्थ**—शेष, अनन्त, वासुकि, तक्षक, कूर्म और कुलिक—ये कद्रू के वंशज नाग थे।

**देवगन्धर्वाः**—

भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा।
गोपतिर्धृतराष्ट्रश्च सूर्यवर्चाश्च सप्तमः।
सत्यवागर्कपर्णश्च प्रयुतश्चापि विश्रुतः।
भीमश्चित्ररथश्चैव विख्यातः सर्वविद् वशी ॥
तथा शालिशिरा राजन् पर्जन्यश्च चतुर्दशः।
कलिः पञ्चदशस्तेषां नारदश्चैव षोडशः।
इत्येते देवगन्धर्वा मौनेयाः परिकीर्तिताः ॥ (१।६५।४२-४४)

**अर्थ**—भीमसेन, उग्रसेन, सुपर्ण, वरुण, गोपति, धृतराष्ट्र और सप्तम सूर्यवर्चा, सत्यवाक्, अर्कपर्ण और विख्यात प्रयुत, भीम, चित्ररथ, जो विख्यात और सर्वज्ञ संयमी पुरुष था, शालिशिरा, पर्जन्य चौदहवां, पन्द्रहवां कलि और सोलहवां गन्धर्व नारद था। ये देव गन्धर्व कश्यपपत्नी मुनि के पुत्र थे। अतः 'मौनेय' कहे जाते थे।

**एकादशरुद्राः—**

एकादश सुताः स्थाणोः ख्याताः परमतेजसः ।
मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी च परंतपः ।
दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः ।
स्थाणुर्भवश्च भगवान् रुद्रा एकादश स्मृताः ॥ (१।६६-१-३)

**अर्थ**—स्थाणु महातेजस्वी महादेव शिव के ग्यारह विख्यात पुत्र थे—मृगव्याध, सर्प, महायशस्वी निर्ऋति, अजैकपात्, अहिर्बुध्न्य, परंतप पिनाकी, दहन, ईश्वर, महातेजस्वी कपाली, स्थाणु, भव—ये एकादश रुद्र थे ।

**आङ्गिरसाः (अङ्गिरःपुत्राः)—**

त्रयस्त्वङ्गिरसः पुत्राः लोके सर्वत्र भारत ।
बृहस्पतिरुतथ्यश्च संवर्तश्च धृतव्रताः ॥ (१।६६।५)

**अर्थ**—लोक में अंगिरा के तीन विख्यात पुत्र थे—बृहस्पति, उतथ्य और धैर्यवान् संवर्त ।

**रावणजन्मः—**

कस्यचित् त्वथ कालस्य सुमाली नाम राक्षसः ।
रसातलम्मर्त्यलोकं सर्वं वै विचचार ह ॥१॥
अथाब्रवीत् सुतां रक्षः कैकसीं नाम नामतः ॥२॥
जनयामास बीभत्सं रक्षोरूपं सुदारुणम् ॥२८॥
दशग्रीवं महादंष्ट्रं नीलाञ्जनचयोपमम् ॥
ताम्रोष्ठं विंशतिभुजं महास्यं दीप्तमूर्धजम् ॥२९॥
दशग्रीवः प्रसूतोऽयं दशग्रीवो भविष्यति ॥३३॥
तस्य त्वनन्तरं जातः कुम्भकर्णो महाबलः ।
प्रमाणाद् यस्य विपुलं प्रमाणं नेह विद्यते ॥३४॥
ततः शूर्पणखा नाम संजज्ञे विकृतानना ॥
विभीषणश्च धर्मात्मा कैकस्याः पश्चिमः सुतः ॥३५॥ (रामा० ७।९)

**अर्थ**—किसी समय सुमाली नाम का राक्षसराज रसातल (सोमाली लैंड—अफ्रीका) से आकर मर्त्यलोक (भारतवर्ष) में सर्वत्र भ्रमण करता रहा। अतः वह अपनी पुत्री कैकसी से बोला—कैकसी ने विश्रवा द्वारा भयंकर रावण राक्षस को उत्पन्न किया, जिसका नाम दशग्रीव रावण था, उसके दांत बड़े बड़े और शरीर काले कोयले के समान था । ताम्र के समान लाल ओष्ठ, बीस भुजायें, विशाल मुख, बाल प्रदीप्त । उसके दशग्रीवा (गर्दनें) थीं अतः उसका नाम दशग्रीव होगा। उसके पश्चात् महाबली कुम्भकर्ण उत्पन्न हुआ । उसके शरीर से बढ़कर दूसरा नहीं हुआ । उसकी बहिन भयंकर मुखवाली शूर्पणखा थी । कैकसी का सबसे छोटा पुत्र धर्मात्मा विभीषण था ।

———

## चतुर्थोऽध्याय

# सूर्यवंशः

**सूर्य। (विवस्वान्)–आदित्यसन्ततिः—**

विवस्वान् कश्यपाज्जज्ञे दाक्षायण्यामरिंदम ।
तस्य भार्याभवत् संज्ञा त्वाष्ट्री देवी विवस्वतः ॥
सुरेणुरिति विख्याता त्रिषु लोकेषु भारत ॥

× × ×

त्रीण्यपत्यानि कौरव्य संज्ञायां तपतां वरः ।
आदित्यो जनयामास कन्यां द्वौ च प्रजापती ।
मनुर्वैवस्वतः पूर्वं श्राद्धदेवः प्रजापतिः ।
यमश्च यमुना चैव यमजौ सम्बभूवतुः ।

× × ×

द्वितीयायां तु संज्ञायां संज्ञेयमिति चिन्तयन् ।
आदित्यो जनयामास पुत्रमात्मसमं तदा ॥
पूर्वजस्य मनोस्तात सदृशोऽयमिति प्रभुः ।
सवर्णत्वान्मनोभूयः सावर्ण इति चोक्तवान् ॥
मनुरेवाभवन्नाम्ना सावर्ण इति चोच्यते ॥
द्वितीयो सुतस्तस्याः स विज्ञेयः शनैश्चरः ॥

X X X

देवौ तस्यामजायेतामश्विनौ भिषजां वरौ ।
नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति ।
मार्तण्डस्यात्मजावेतावष्टमस्य प्रजापतेः ।
संज्ञायां जनयामास वडवायां स भारत ॥

(हरिवंश० १।९)

**अर्थ**—कश्यप द्वारा दाक्षायणी अदिति से विवस्वान् (सूर्य) आदित्य का जन्म हुआ । विवस्वान् की भार्या (पत्नी) त्वष्टा (औशनस) की पुत्री 'संज्ञा' या

'सुरेणु' (सरण्यू) थी जो तीनों लोकों (देवों, असुरों और नागों) में विख्यात थी ।

**अपत्यत्रयी**—'संज्ञा' (सरण्यू) से विवस्वान् आदित्य ने तीन सन्तानें उत्पन्न कीं—उनमें दो पुत्र 'प्रजापति' थे और एक कन्या थी ।

मनु वैवस्वत श्राद्धदेव बड़े पुत्र—प्रजापति थे और यम वैवस्वत (द्वितीय प्रजापति) तथा यमुना (यमी) मिथुन सन्तान थी ।

**सावर्णमनुः (अन्तिम मनु)=श्रुतश्रवा=शनैश्चर**— द्वितीय संज्ञा (सवर्णा) में, उसको संज्ञा समझकर विवस्वान् आदित्य ने अपने समान पुत्र उत्पन्न किया और सोचा यह भी पूर्वजमनु (श्राद्धदेवमनु) के समान हो, अतः मनु के सवर्ण (समान) होने से उसका 'सावर्णमनु' हुआ। वह द्वितीय पुत्र भी मनु (सावर्णमनु) या शनैश्चर (या अनुश्रवा) नाम से प्रख्यात हुआ ।

**अश्विनीकुमारद्वयी**—'अश्वा' (वडवा) रूपिणी 'सरण्यू' से अष्टम आदित्य (अदितिपुत्र) विवस्वान् प्रजापति ने देवद्वयी अश्विनीकुमारों को उत्पन्न किया, जो यथासमय देवों के वैद्य बने, जिनका नाम इतिहास में 'नासत्य' और दस्र प्रसिद्ध है ।

**वैवस्वतमनुसन्ततिः**—

मनोर्वैवस्वतस्यासन् पुत्रा वै नव तत्समाः ।
इक्ष्वाकुश्चैव नाभागो धृष्णुः शर्यातिरेव च ॥
नरिष्यंश्च तथा प्रांशुर्नाभागनेदिष्टसप्तमाः ।
करुषश्च पृषध्रश्च नवैते भरतर्षभ ॥

X X X

दिव्यसंहनना चैव इला जज्ञे इति श्रुतिः ।

X X X

सुद्युम्न इति विख्यातस्त्रिषु लोकेषु शोभने ।
जगत्प्रियो धर्मशीलो मनोर्वंशविवर्धनः ॥

**अर्थ**—वैवस्वतमनु के उन्हीं के समान नौ पुत्र हुए—इक्ष्वाकु, नाभाग, धृष्णु, शर्याति, नरिष्यन्, प्रांशु, नाभानेदिष्ट, करूष और पृषध्र ।

**इला**—दिव्यरूप (शरीर) वाली एक पुत्री 'इला' उत्पन्न हुई ।......

**सुद्युम्न**—(जो पुरुष रूप में) 'सुद्युम्न' नाम से प्रसिद्ध हुई जो तीनों लोकों में विख्यात थी, जो अति लोकप्रिय, धर्मशील और मनुवंश (सोमवंश) बढ़ाने वाला था ।

**सुद्युम्नपुत्राः**—

सुद्युम्नस्य तु दायादास्त्रयः परमधार्मिकाः ।

उत्कलश्च गयश्चैव विनताश्वश्च भारत ॥
उत्कलस्योत्कला राजन् विनताश्वस्य पश्चिमाः ।
दिक् पूर्वा भरतश्रेष्ठ गयस्य तु गया पुरी ॥

× × ×

उत्कलस्य त्रयः पुत्रास्त्रिषु लोकेषु विश्रुताः ।
धृष्टकश्चाम्बरीषश्च दण्डश्चेति सुतास्त्रयः ॥

**अर्थ—सुद्युम्न की सन्तति**=(पुत्रत्रयी)—सुद्युम्न के तीन पुत्र राज्याधिकारी हुए—उत्कल, गय और विनताश्व। उत्कल के वंशज उत्कल क्षत्रिय कहलाये, विनताश्व के वंशज पश्चिमी देशों में शासक हुए और पूर्व में गय की गयापुरी विख्यात हुई।

**उत्कल सन्तति**—उत्कल के तीन जगद्विख्यात पुत्र उत्पन्न हुए—धृष्टक, अम्बरीष और दण्ड (दण्डक)।

**नरिष्यन्तपुत्राः—**

नरिष्यतः शकाः पुत्रा नाभागस्य तु भारत ।

**अर्थ**—नरिष्यन्त के वंशज 'शक' क्षत्रिय कहलाये।

**नाभागपुत्रः—**

अम्बरीषोऽभवत् पुत्रः पार्थिवार्षभसत्तमः ॥

**अर्थ**—नाभाग का पुत्र राजश्रेष्ठ अम्बरीष हुआ।

**धृष्टवंश—**

धृष्णोस्तु धार्ष्टकं क्षत्रं रणधृष्टं बभूव ह ॥ (हरिवंश १।१०)

**अर्थ**—धृष्ट के वंशज धार्ष्टक क्षत्रिय हुए जो युद्ध में अत्यन्त धृष्ट (वीर) थे।

**पृषध्रः—**

पृषध्रो हिंसयित्वा तु गुरोर्गावमभक्षयत् ।
शापाच्छूद्रत्वमापन्नश्च्यवनस्य महात्मनः ॥

पृषध्र ने गुरु की गाय मारकर खा ली अतः वह महर्षि च्यवन के शाप से शूद्र होगया।

**करुषः—**

करुषस्य तु कारुषाः क्षत्रियाः युद्धदुर्मदाः ॥

(वायुपुराणे १।२३।२)

**अर्थ**—करुष के वंशज युद्ध में अदम्य 'कारुष क्षत्रिय' हुए।

(वायुपुराण अ० २३)

**नाभागारिष्टवंशः—**

नाभागारिष्टपुत्रस्तु विद्वानासीत् भलन्दनः ।
भलन्दनस्य पुत्रोऽभूत् प्रांशुर्नाम महाबलः ॥
प्रांशोरेकोऽभवत् पुत्रः प्रजानिरिति विश्रुतः ।
प्रजानेरभवत् पुत्रः खनित्रो नाम वीर्यवान् ।
तस्य पुत्रोऽभवच्छ्रीमान् क्षुपो नाम महायशाः ॥
क्षुपस्य विंशः पुत्रः तस्य प्रतिमा न बभूव ह ।
विंशपुत्रस्तु कल्याणो विंविशो नाम धार्मिकः ।
विंविशपुत्रो धर्मात्मा खनिनेत्रः प्रतापवान् ॥
करन्धमस्तस्य पुत्रस्त्रेतायुगमुखेऽभवत् ॥
करन्धमसुतश्चापि आविक्षिन्नाम वीर्यवान् ।
आविक्षितो व्यत्यक्रामत् पितरं गुणवत्तया ।
मरुत्तो नाम धर्मात्मा चक्रवर्त्तिसमो नृपः ॥

× × ×

मरुत्तश्चक्रवर्ती स नरिष्यन्तमवाप्तवान् ।
नरिष्यन्तस्य दायादो राजा दण्डधरो दमः ॥
तस्य पुत्रस्तु विक्रान्तो राजासीद्राष्ट्रवर्धनः ॥
सुधृती तस्य पुत्रस्तु नरः सुधृतिनः सुतः ॥
केवलस्तस्य पुत्रस्तु बन्धुमान् केवलात्मजः ।
अथ बन्धुमतः पुत्रो धर्मात्मा वेगवान् नृपः ।
बुधो वेगवतः पुत्रस्तृणबिन्दुर्बुधात्मजः ।
त्रेतायुगमुखे राजा त्रयोविंशे बभूव ह ॥
कन्या तु तस्य इडविडा माता विश्रवसो हि सा ॥
पुत्रश्चास्य विशालोऽभूद् राजा परमधार्मिकः ॥

**अर्थ**—नाभाग (नभाक) या नाभागारिष्ट का पुत्र विद्वान् (ऋषि) भलन्दन हुआ, भलन्दन का पुत्र प्रांशु हुआ, जो महाबली था। प्रांशु का पुत्र एकमात्र प्रजानि हुआ, जो विश्वविख्यात था। प्रजानि का पुत्र हुआ बलवान् 'खनित्र', उसका पुत्र था – क्षुप महायशस्वी। क्षुप का पुत्र था विंश, जिसका प्रतिद्वन्द्वी या सदृश कोई नहीं था। विंश का पुत्र कल्याणकारक विंविश धार्मिक राजा था। विंविश का पुत्र खनिनेत्र प्रतापी और धर्मात्मा था। करन्धम उसका पुत्र था, जो त्रेतायुगमुख में हुआ। करन्धम का पुत्र आविक्षित् प्रतापी था।

आविक्षित् के पुत्र मरुत्त ने अपने पिता के गुण और प्रताप का अतिक्रमण किया जो महान् चक्रवर्ती तथा धर्मात्मा सम्राट् हुआ।

चक्रवर्ती मरुत्त का पुत्र नरिष्यन्त (द्वितीय) हुआ। नरिष्यन्त का पुत्र राजा महान् दण्डधर था। दम का पुत्र विक्रमी राजा राष्ट्रवर्धन था। उसका पुत्र हुआ—सुधृती, सुधृती का पुत्र हुआ नर, उसका पुत्र हुआ एकमात्र बन्धुमान्, उसका पुत्र हुआ धर्मात्मा वेगवान् उसका पुत्र हुआ राजा बुध। बुध का पुत्र हुआ तृणबिन्दु, जो तेइसवें त्रेतायुगमुख (परिवर्तयुग) में राजा था। उसकी पुत्री 'इडविडा' थी, जो 'विश्रवा' की माता थी। (उसका अन्य) पुत्र 'विशाल' नाम का परम धार्मिक राजा था।

विशालस्य सुतो राजा हेमचन्द्रो महाबलः।
सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तरम्॥
सुचन्द्रतनयो राजा धूम्राश्व इति विश्रुतः।
धूम्राश्वतनयो विद्वान् सृंजयः समपद्यत॥
सृंजयस्य सुतः श्रीमान् सहदेवः प्रतापवान्।
कृशाश्वः सहदेवस्य पुत्रः परमधार्मिकः।
कृशाश्वस्य महातेजाः सोमदत्तः प्रतापवान्।
सोमदत्तस्य राजर्षेः सुतोऽभूत् जनमेजयः।
जनमेजयस्यात्मजश्चैव प्रमितिर्नाम विश्रुतः॥

(वायुपुराणे अ० २४)

**अर्थ**—विशाल का पुत्र महाबली राजा हेमचन्द्र हुआ। हेमचन्द्र के अनन्तर, उसका उत्तराधिकारी (पुत्र) सुचन्द्र विख्यात हुआ। धूम्राश्व का पुत्र विद्वान् (ऋषि) सृंजय हुआ। सृंजय का पुत्र सहदेव हुआ। सहदेव का पुत्र परम धार्मिक कृशाश्व हुआ। कृशाश्व का पुत्र महातेजस्वी और प्रतापी सोमदत्त हुआ। राजर्षि सोमदत्त का पुत्र जनमेजय हुआ। जनमेजय का पुत्र विख्यात प्रमिति नाम का राजा हुआ।

**शर्यातिवंशः**—

शर्यातेर्मिथुनं त्वासीदानर्तो नाम विश्रुतः।
पुत्रः सुकन्या कन्या च भार्या या च्यवनस्य तु॥
आनर्तस्य तु दायादो रेवोनामा तु वीर्यवान्।
आनर्तो विषयो यस्य पुरी चापि कुशस्थली।
रेवस्य रैवतः पुत्रः ककुद्मी नाम धार्मिकः।
येषामेते महाराज शार्याता इति विश्रुताः। (वायुपुराणे अ० २४)

**अर्थ**—शर्याति की मिथुन सन्तान—एक पुत्र 'आनर्त' और एक कन्या

'सुकन्या' उत्पन्न हुई। यह सुकन्या च्यवन की पत्नी बनी। आनर्त का पुत्र बलवान् 'रेव' नाम का राजा हुआ जिसका राज्य आनर्त (गुजरात) था और पुरी (राजधानी) कुशस्थली थी।

रेव का पुत्र हुआ 'रैवत', जिसका दूसरा नाम 'ककुद्मी' था। ये सभी राजा 'शार्यात' या 'शर्यातवंशीय' थे।

**नाभागवंश—**

नभगस्य च दायादो नाभागो नाम वीर्यवान्।
अम्बरीषस्तु नाभागिर्विरूपस्तस्य चात्मजः।
पृषदश्वो विरूपस्य तस्य पुत्रो रथीतरः।
एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसः स्मृताः।
रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः॥ (वायुपुराणे अ० २४)

**अर्थ**—नभग का पुत्र नाभाग कहलाया। उसका पुत्र नाभागि अम्बरीष था। उसका पुत्र हुआ विरूप (आंगिरस) उसका पुत्र हुआ वृषदश्व, उसका पुत्र था रथीतर। ये क्षत्रिय वंश से उत्पन्न होकर पुनः आंगिरस (ब्राह्मण) बन गये। रथीतर के प्रवर (गोत्रप्रवर्तक) क्षत्रोपेत ब्राह्मण थे।

**वायुपुराण १।२६ अ०**

**इक्ष्वाकुवंशः—**

क्षुवतश्च मनोस्तात इक्ष्वाकुरभवत् सुतः।
तस्य पुत्रशतं त्वासीदिक्ष्वाकोर्भूरिदक्षिणम्॥
तेषां विकुक्षिर्ज्येष्ठस्तु विकुक्षित्वादयोदधात्।
प्राप्तः परमधर्मज्ञः सोऽयोध्यापतिः प्रभुः॥
शकुनिप्रमुखास्तस्य पुत्राः पंचाशदुत्तमाः।
उत्तरापथदेशस्था रक्षितारो महीपते।
चत्वारिंशदथाष्टौ च दक्षिणस्यां तथा दिशि॥
शशादप्रमुखाश्चान्ये रक्षितारो विशाम्पते॥

× × ×

शशादस्य तु दायादः ककुत्स्थो नाम वीर्यवान्।

× × ×

अनेनास्तु ककुत्स्थस्य पृथुरानेनसः स्मृतः॥
निष्टशश्वः पृथोः पुत्रस्तस्मादार्द्रस्तु अजायत॥
आर्द्रस्य युवनाश्वस्तु श्रावस्तस्तस्य चात्मजः।
श्रावस्तस्य तु दायादो बृहदश्वो महायशाः।

कुबलाश्वसुतस्तस्य राजा परमधार्मिकः ।
यः स धुन्धुवधाद् राजा धुन्धुमारत्वमागतः ।।

× × ×

तस्य पुत्रास्त्रयः शिष्टाः दृढ़ाश्वो ज्येष्ठ उच्यते ।
चन्द्राश्वकपिलाश्वौ तु कुमारौ कनीयसौ ।
धौन्धुमारिर्दृढ़ाश्वस्तु हर्यश्वस्तस्य चात्मजः ।
हर्यश्वस्य निकुम्भोऽभूत् क्षत्रधर्मरतः सदा ।।
संहताश्वो निकुम्भस्य पुत्रो रणविशारदः ।
अकृशाश्वः कृशाश्वश्च संहताश्वसुतौ नृपः ।।
तस्य हैमवती कन्या सतां माता दृषद्वती ।
विख्याता त्रिषु लोकेषु पुत्रश्चास्याः प्रसेनजित् ।।
लेभे प्रसेनजिद् भार्यां गौरीं नाम पतिव्रताम् ।।
अभिशप्ता तु सा भर्त्रा नदी वै बाहुदाभवत् ।
तस्याः पुत्रो महानासीद् युवनाश्वो महीपतिः ।
मान्धाता युवनाश्वस्य त्रिलोकविजयी सुतः ।।

**अर्थ**—मनु का (ज्येष्ठ) पुत्र 'इक्ष्वाकु' हुआ । इक्ष्वाकु के बहुत दक्षिणा देने वाले सौ पुत्र हुए। उनमें 'विकुक्षि' ज्येष्ठ था, जो परमधर्मज्ञ अयोध्या का शासक हुआ । इक्ष्वाकु के शकुनिप्रधान पचास ज्येष्ठपुत्र उत्तरी देशों के शासक हुए तथा शशाद प्रमुख अड़तालीस पुत्र दक्षिणी देशों के शासक हुए ।

शशाद का उत्तराधिकारी प्रतापी ककुत्स्थ हुआ । ककुत्स्थ का पुत्र अनेना था । अनेना का पुत्र पृथु हुआ । उसका पुत्र आर्द्र हुआ । आर्द्र का पुत्र युवनाश्व (प्रथम) था । उसका पुत्र श्रावस्त हुआ । श्रावस्त का उत्तराधिकारी महायशस्वी सम्राट् बृहदश्व हुआ । उसका पुत्र कुवलाश्व था जो परमधार्मिक था तथा धुन्धु असुर को मारने के कारण धुन्धुमार भी कहलाया ।

(युद्ध में) उसके केवल तीन पुत्र शेष रहे—ज्येष्ठ पुत्र दृढाश्व और कनिष्ठ चन्द्राश्व तथा कपिलाश्व । धुन्धुमार कुवलाश्व का पुत्र हर्यश्व हुआ । हर्यश्व का पुत्र निकुम्भ था, जो सदा ही क्षत्रिय धर्म में निरत रहता था । निकुम्भ का पुत्र रणविशारद संहताश्व था । संहताश्व के पुत्र थे—अकृशाश्व और कृशाश्व । हैमवती (हिमवतराजा की) कन्या दृषद्वती उनकी माता थी । कृशाश्व का पुत्र प्रसनेजित् हुआ । प्रसनेजित् की महिषी का नाम गौरी था । पति के द्वारा अभिशप्त वह 'बाहुदा' नदी होगई । गौरी का पुत्र महान् राजा युवनाश्व था । युवनाश्व का पुत्र राजा मान्धाता त्रिलोकविजयी था ।

तस्य चैत्ररथी भार्या शशबिन्दोः सुताभवत् ।
साध्वी बिन्दुमती नाम रूपेणासदृशी भुवि ॥
तस्यामुत्पादयामास मान्धाता द्वौ सुतौ नृपः ।
पुरुकुत्सं च धर्मज्ञं मुचुकुन्दं च धार्मिकम् ॥
पुरुकुत्ससुतस्त्वासीत् त्रसदस्युर्महीपतिः ॥
नर्मदायामथोत्पन्नः सम्भूतस्तस्य चात्मजः ।
सम्भूतस्य तु दायादः सुधन्वा नाम पार्थिवः ॥
सुधन्वनः सुतश्चासीत् त्रिधन्वा रिपुमर्दनः ।
राज्ञस्त्रिधन्वनस्त्वासीद् विद्वांस्त्रयारुणः सुतः ॥
तस्य सत्यव्रतो नाम कुमारोऽभूत्महाबलः ।

× × ×

तस्य सत्यरथा नाम भार्या कैकयवंशजा ।
कुमारं जनयामास हरिश्चन्द्रमकल्मषम् ॥
स वै राजा हरिश्चन्द्रस्त्रैशङ्कव इति स्मृतः ।
आहर्ता राजसूयस्य स सम्राडिति विश्रुतः ॥

× × ×

हरितो रोहितस्याथ चंचुर्हारीत उच्यते ।
विजयश्च सुदेवश्च चंचुपुत्रौ बभूवतुः ।
रुरुकस्तनयस्तस्य राजधर्मार्थकोविदः ।
रुरुकस्य वृकः पुत्रो वृकाद् बाहुस्तु जज्ञिवान् ।
सगरस्तु सुतो बाहोर्जज्ञे सह गरेण च ।

× × ×

द्वे भार्ये सगरस्यास्तां तपसा दग्धकिल्विषे ।
ज्येष्ठा विदर्भदुहिता केशिनी नाम विश्रुता ॥
कनीयसी तु या तस्य पत्नी परमधर्मिणी ।
अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ॥
केशिन्यसूत सगरादसमंजसमात्मजम् ॥
राजा पंचजनो नाम बभूव सुमहाबलः ।
इतरा सुषुवे तुम्बीं बीजपूर्णमिति श्रुतिः ॥
तत्र षष्टि सहस्राणि गर्भास्ते तिलसम्मिताः ।

अर्थ—उसकी भार्या बिन्दुमती चैत्ररथी (चित्ररथपुत्री) शशबिन्दु की पुत्री

थी। महान् सती साध्वी तथा रूप में भूमण्डल पर अनुपम थी। सम्राट् मान्धाता ने उससे दो पुत्र उत्पन्न किये—पुरुकुत्स धर्मज्ञ और मुकुकुन्द धार्मिक।

पुरुकुत्स का पुत्र त्रसदस्यु था जो नर्मदा से उत्पन्न हुआ। त्रसदस्यु का पुत्र हुआ सम्भूत। सम्भूत का उत्तराधिकारी हुआ सुधन्वा नाम का राजा। सुधन्वा का पुत्र त्रिधन्वा शत्रुनाशक हुआ। राजा त्रिधन्वा का पुत्र विद्वान् (ऋषि) त्र्यरुण था। उसका पुत्र महाबली सत्यव्रत (त्रिशंकु) हुआ। सत्यव्रत त्रिशंकु की रानी कैकयवंशजा सत्यरथा थी। उसने निष्पाप कुमार हरिश्चन्द्र को उत्पन्न किया। वह राजा हरिश्चन्द्र त्रैशङ्कव (त्रिशंकुपुत्र) कहा जाता है, जो राजसूय करने वाला सम्राट् हुआ। हरिश्चन्द्र का पुत्र रोहित और उसका पुत्र हरित था। हरित का पुत्र चंचु था। चंचु के पुत्र थे—विजय और सुदेव। विजय का पुत्र रुरुक हुआ। रुरुक का पुत्र हुआ वृक। उसका पुत्र हुआ बाहु। बाहु का पुत्र हुआ सगर।

सगर की दो पत्नियां थीं, जिन्होंने तप (व्रतादि) से पाप को नष्ट कर दिया था। विदर्भराज की पुत्री केशिनी (कैशिकी) ज्येष्ठ रानी थी। अरिष्टनेमि की पुत्री अति सुन्दरी और परमधार्मिक छोटी पत्नी (सुमति) थी।

केशिनी से सगर द्वारा असमञ्जा पुत्र उत्पन्न किया जो कि 'पंचजन' नाम से भी महाबली राजा हुआ।

ऐसा इतिहास (श्रुति) है कि दूसरी पत्नी सुमति ने एक तुम्बी को उत्पन्न किया, जिसमें गर्भबीज थे। उसमें तिल के बराबर साठ हजार बीजगर्भ थे।

षष्टिः पुत्रसहस्राणि तस्यैवमभवन् नृप।
एकपंचजनो नाम पुत्रो राजा बभूव ह।
सुतः पंचजनस्यासीदंशुमान् नाम वीर्यवान्।
दिलीपस्तनयस्तस्य खट्वाङ्ग इति विश्रुतः।
दिलीपस्य तु दायादो महाराजो भगीरथः॥
भगीरथसुतो राजा श्रुत इत्यभिविश्रुतः।
नाभागस्तु श्रुतस्यासीद् पुत्रः परमधार्मिकः॥
अम्बरीषस्तु नाभागिः सिन्धुद्वीपपिताभवत्।
अयुताजित् तु दायादः सिन्धुद्वीपस्य वीर्यवान्॥
अयुताजितसुतस्त्वासीदृतुपर्णो महायशाः।
दिव्याक्षहृदयज्ञो वै राजा नलसखो बली।
ऋतुपर्णसुतस्यासीदार्तुपर्णिर्महीपतिः।
सुदासस्तस्य तनयो राजा त्विन्द्रसखोऽभवत्।

सुदासस्य सुतस्त्वासीत् सौदासो नाम पार्थिवः ।
ख्यातः कल्माषपादो वै नाम्ना मित्रसहस्तथा ।।
कल्माषपादस्य सुतः सर्वकर्मेति विश्रुतः ।।
अनरण्यस्तु पुत्रोऽभूत् विश्रुतः सर्वकर्मणः ।
अनरण्यसुतो निघ्नो निघ्नपुत्रौ बभूवतुः ।
अनमित्रो रघुश्चैव पार्थिवर्षभसत्तमौ ।।
अनमित्रस्य धर्मात्मा विद्वान् दुलिदुहोऽभवत् ।
दिलीपस्तनयस्तस्य रामप्रतितामहः ।।
दीर्घबाहुर्दिलीपस्य रघुनाम्नाभवत् सुतः ।
अजस्तु रघुतो जज्ञे अजाद् दशरथोऽभवत् ।
रामो दशरथाज्जज्ञे धर्मात्मा सुमहायशाः ।
रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः ।
अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः ।
निषधस्तु नलपुत्रो नभः पुत्रो नलस्य तु ।
नभस्य पुण्डरीकस्तु क्षेमधन्वा ततः स्मृतः ।।
क्षेमधन्वसुतस्त्वासीद् देवानीक प्रतापवान् ।
आसीदहीनगुर्नाम देवानीकसुतः प्रभुः ।।

**अर्थ**—उस तूम्बी गर्भ से साठ सहस्र पुत्र उत्पन्न हुए। उनमें एक पुत्र 'पंचजन' नाम का राजा हुआ। पंचजन का पुत्र 'अंशुमान्' नाम का प्रतापी राजा हुआ। उसका पुत्र दिलीप हुआ, जो खट्वांग नाम से भी विख्यात है।

दिलीप का उत्तराधिकारी महाराज भगीरथ हुआ। भगीरथ का पुत्र राजा श्रुत हुआ। श्रुत का पुत्र परमधार्मिक राजा नाभाग हुआ। उसका पुत्र अम्बरीष हुआ। उसका पुत्र सिन्धुद्वीप था। सिन्धुद्वीप का पुत्र महाबली अयुताजित् हुआ। उसका पुत्र यशस्वी ऋतुपर्ण हुआ जो दिव्याक्षहृदय (अक्षविशेषज्ञ) और राजा नल का सखा था। राजा ऋतुपर्ण का पुत्र महान् सुदास (पैजवन) इन्द्र का परमसखा था। सुदास पैजवन का पुत्र सौदास कल्माषपाद था, जिसका (पूर्व) नाम मित्रसह था। कल्माषपाद का पुत्र हुआ विख्यात सर्वकर्मा। सर्वकर्मा का पुत्र हुआ अनरथ। उसका पुत्र हुआ निघ्न। निघ्न के दो श्रेष्ठ राजा पुत्र थे—अनमित्र और रघु।

अनमित्र का पुत्र धर्मात्मा और विद्वान् राजा दुलिदुह था। उसका पुत्र हुआ दिलीप (द्वितीय) जो राम दशरथि का पितामह था। दिलीप का पुत्र हुआ 'दीर्घबाहु' जिसका दूसरा नाम रघु (द्वितीय) भी था। रघु का पुत्र था अज। उसका पुत्र हुआ दशरथ। दशरथ से राम उत्पन्न हुए जो धर्मात्मा और महान् यशस्वी थे।

राम के पुत्र हुए कुश, उसका पुत्र हुआ अतिथि, उसका पुत्र था निषध, उसका पुत्र हुआ नल और नल का पुत्र था नभ। उसका पुत्र हुआ पुण्डरीक और उसका पुत्र हुआ क्षेमधन्वा।

क्षेमधन्वा का पुत्र था देवानीक। उसका पुत्र हुआ अहीनगु।

अहीनगोस्तु दायादः सुधन्वा नाम पार्थिवः।
सुधन्वनः सुतश्चैव ततो जज्ञेऽनलो नृपः॥
उक्थो नाम स धर्मात्मा नलपुत्रो बभूव ह।
वज्रनाभः सुतस्तस्य उक्थस्य च महात्मनः॥
शङ्खस्तस्य सुतो विद्वान् व्युषिताश्व इति श्रुतः।
पुष्पस्तस्य सुतो विद्वानर्थसिद्धिस्तु तत्सुतः॥
सुदर्शनः सुतस्तस्य अग्निवर्णः सुदर्शनात्।
अग्निवर्णस्य शीघ्रस्तु शीघ्रस्य तु मरुः सुतः।
तस्यासीद् विश्रुतवतः पुत्रो राजा बृहद्बलः॥

(हरिवंश १।अध्याय ११-१५)

**अर्थ**--अहीनगु का उत्तराधिकारी हुआ सुधन्वा। सुधन्वा का पुत्र हुआ अनल। अनलपुत्र हुआ उक्थ। उसका पुत्र हुआ वज्रनाभ। उसका पुत्र हुआ शंख। शंख का पुत्र था व्युषिताश्व--जो इतिहास में प्रसिद्ध है। उसका पुत्र था पुष्प, जो विद्वान् (ऋषि) भी था। उसका पुत्र हुआ 'अर्थसिद्धि', उसका पुत्र हुआ सुदर्शन। सुदर्शन का पुत्र हुआ 'अग्निवर्ण', अग्निवर्ण का पुत्र था 'शीघ्र', उसका पुत्र हुआ मरु। इस विश्रुत मरु का पुत्र था राजा बृहद्बल।

(वायुपुराण अ० २७)

**जनकवंशः**—

नेमिर्नाम सुधर्मात्मा सर्वसत्वनमस्कृतः।
आसीत् पुत्रो महाप्राज्ञ इक्ष्वाकोर्भूरितेजसः॥
स शापेन वसिष्ठस्य विदेहः समपद्यत।
तस्य पुत्रो मिथिर्नाम जनितः पर्वभिस्त्रिभिः॥
अरण्यां मथ्यमानायां प्रादुर्भूतो महायशाः।
नाम्ना मिथिरिति ख्यातो जननाज्जनकोऽभवत्॥
मिथिर्नाम महावीर्यो येनासौ मिथिलाऽभवत्।
राजासौ जनको नाम जनकाच्चाप्युदावसुः॥
उदावसोः सुधर्मात्मा जनितो नन्दिवर्द्धनः।
नन्दिवर्द्धनः शूरः सुकेतुर्नाम धार्मिकः॥

सुकेतोरपि धर्मात्मा देवरातो महाबलः ।
देवरातस्य धर्मात्मा बृहदुक्थ इति श्रुतिः ।।
बृहदुक्थस्य तनयो महावीर्यः प्रतापवान् ।
महावीर्यस्य धृतिमान् सुधृतिस्तस्य चात्मजः ।।
सुधृतेरपि धर्मात्मा धृष्टकेतुः परन्तपः ।
धृष्टकेतुसुतश्चापि हर्यश्वो नाम विश्रुतः ।।
हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रतित्वकः ।
प्रतित्वकस्य धर्मात्मा राजा कीर्तिरथः सुतः ।।
पुत्रः कीर्तिरथस्यापि देवमीढ़ इति श्रुतः ।
देवमीढ़स्य विबुधो विबुधस्य सुतो धृतिः ।।
महाधृतिसुतो राजा कीर्तिराजः प्रतापवान् ।
कीर्तिराजात्मजो विद्वान् महारोमेति विश्रुतः ।।
महारोमणस्तु विख्यातः स्वर्णरोमा व्यजायत ।
स्वर्णरोमात्मजश्चापि ह्रस्वरोमाभवन्नृपः ।
ह्रस्वरोमात्मजो विद्वान् सीरध्वज इति श्रुतिः ।।
उद्भिन्ना कृषता येन सीता राज्ञा यशस्विनी ।
रामस्य महिषी साध्वी सुव्रतातिपतिव्रता ।।

× × ×

अर्थ—सभी प्राणियों में पूजनीय अत्यन्त तेजस्वी सुधर्मात्मा महाप्राज्ञ नेभि इक्ष्वाकु का पुत्र था। वह वशिष्ठ के शाप से विदेह (शरीररहित) होगये। तीन पर्वों द्वारा अरणी के मथे जाने पर उसका पुत्र महायशस्वी मिथि (जनक) उत्पन्न हुआ, जनन करने से ही उसका नाम 'जनक' हुआ। वह महावीर मिथि था, जिसने मिथिला बसाई।

राजा जनक का पुत्र उदावसु था। उदावसु का पुत्र अत्यन्त धर्मात्मा नन्दिवर्धन हुआ। नन्दिवर्धन के ही नाम 'शूर' और सुकेतु थे। धर्मात्मा सुकेतु का धर्मात्मा पुत्र देवरात हुआ। देवरात का पुत्र श्रुति (इतिहास) में बृहदुक्थ प्रसिद्ध हुआ। बृहदुक्थ का पुत्र महावीर्य था। महावीर्य का पुत्र धृतिमान् था। उसका पुत्र सुधृति था। सुधृति का पुत्र धर्मात्मा धृष्टकेतु था। धृष्टकेतु का पुत्र था हर्यश्व। हर्यश्व का पुत्र था मरु और उसका पुत्र था प्रतित्वक। उसका पुत्र हुआ धर्मात्मा राजा कीर्तिरथ। कीर्तिरथ का पुत्र हुआ प्रसिद्ध देवमीढ़। उसका पुत्र हुआ विबुध। विबुध का पुत्र हुआ धृति। धृति का पुत्र था कीर्तिराज प्रतापी राजा।

कीर्तिराज का पुत्र हुआ विद्वान् (ऋषि) प्रसिद्ध राजा महारोमा। महारोमा का पुत्र हुआ राजा स्वर्णरोमा। उसका पुत्र हुआ ह्रस्वरोमा। ह्रस्वरोमा का पुत्र था विद्वान् राजा सीरध्वज जनक—इतिहास में विश्रुत। उसने हल से खेत जोतते हुए पुत्री सीता की प्राप्ति की जो दाशरथि राम की महारानी और अत्यन्त पति-व्रता सती साध्वी थी।

सीरध्वजात्तु जातस्तु भानुमान्नाम मैथिलः।
भ्राता कुशध्वजस्तस्य संकाश्याधिपतिर्नृपः॥
तस्य भानुमतः पुत्रः प्रद्युम्नश्च प्रतापवान्।
मुनिस्तस्य सुतश्चापि तस्मादूर्जवहः स्मृतः॥
ऊर्जवहात् सुतः वाजः शकुनिस्तस्य चात्मजः।
स्वागतः शकुनेः पुत्रः सुवर्चास्तत्सुतः स्मृतः॥
श्रुतो यस्तस्य दायादः सुश्रुतस्तस्य चात्मजः।
सुश्रुतस्य जयः पुत्रो जयस्य विजयः सुतः॥
विजयस्य ऋतः पुत्र ऋतस्य सुनयः स्मृतः।
सुनयाद्वीतहव्यस्तु वीतहव्यात्मजो धृतिः॥
धृतेस्तु बहुलाश्वोऽभूद्बहुलाश्वसुतः कृतिः॥

(वायुपुराणे अ० २७)

**अर्थ**—सीरध्वज से भानुमान् नाम का मैथिल राजा उत्पन्न हुआ। उसका (सीरध्वज का) भ्राता कुशध्वज संकाश्य नगरी का राजा था।

भानुमान् का पुत्र प्रद्युम्न था। उसका पुत्र राजा मुनि था। उसका पुत्र ऊर्जवह हुआ। ऊर्जवह का पुत्र हुआ शकुनि। उसका पुत्र था स्वागत। उसका पुत्र था सुवर्चा। उसका उत्तराधिकारी हुआ श्रुत। उसका पुत्र हुआ सुश्रुत। सुश्रुत का पुत्र हुआ जय और जय का पुत्र हुआ विजय। विजय का पुत्र था ऋत और उसका पुत्र हुआ सुनय। सुनय का पुत्र था वीतहव्य और उसका पुत्र हुआ धृति। धृति का पुत्र हुआ बहुलाश्व तथा उसका पुत्र हुआ कृति।

———

पंचमोऽध्याय

# चन्द्रवंशः

(हरिवंशे १।२५ अ०)

**सोमः (चन्द्रः)—**

पिता सोमस्य वै विप्रा जज्ञेऽत्रिर्भगवानृषिः ।

× × ×

सोऽभिषिक्तो महातेजा महाराज्येन राजराट् ।
सप्तविंशतिरिन्द्रास्तु दाक्षायण्यो महाव्रताः ॥
ददौ प्राचेतसो दक्षो नक्षत्राणि या विदुः ॥
तं सिनी च कुहूश्चैव वपुः पुष्टिः प्रभावसुः ।
कीर्तिर्धृतिश्च लक्ष्मीश्च नवदेव्यः सिषेविरे ॥

**बुधः—**

सोमस्येति महात्मानं कुमारं दस्युहन्तमम् ।
बुध इत्यकरोन्नाम तस्य पुत्रस्य धीमतः ।

**पुरूरवाः—**

तस्य पुत्रो महातेजा बभूवैलः पुरूरवाः ।
उर्वश्यां जज्ञिरे तस्य पुत्राः षट् सुमहौजसः ॥

**ऐलपुत्राः—**

गन्धर्वलोके विदिता आयुर्धीमानमावसुः ।
विश्वायुश्च शतायुश्च श्रुतायुश्चोर्वशीसुताः ॥

**अमावसुवंशः—**

अमावसोस्तु वै जातो भीमो राजाथ विश्वजित् ।
श्रीमान् भीमस्य दायादो राजासीत्कांचनप्रभः ।
विद्वांस्तु कांचनस्यापि सुहोत्रोऽभून्महाबलः ॥
सुहोत्रस्याभवज्जह्नुः केशिकागर्भसम्भवः ।

× × ×

यौवनाश्वस्य पौत्रीं तु कावेरीं जह्नुरावहत् ।

जह्नुश्च दयितं पुत्रं सुहोत्रं नाम धार्मिकम् ॥
कावेर्यां जनयामास अजकस्तस्य चात्मजः ॥
अजकस्य तु दायादो बलकाश्वो महायशाः ।
बभूवुश्च गयः शीलः कुशस्तस्यात्मजाः स्मृताः ।
कुशपुत्रा बभूवुश्च चत्वारो वेदवर्चसः ॥

**दाक्षिणत्य ऐक्ष्वाकदशाश्ववंशः**—(१३।२) महाभारत

मनोः प्रजापते राजन्निक्ष्वाकुरभवत् सुतः ।
तस्य पुत्रशतं जज्ञे नृपतेः सूर्यवर्चसः ।५।
दशमस्तस्य पुत्रस्तु दशाश्वो नाम भारत ।
माहिष्मत्यामभूद् राजा धर्मात्मा सत्यविक्रमः ।६।
दशाश्वस्य सुतस्त्वासीद् राजा परमधार्मिकः ।७।
मदिराश्व इति ख्यातः पृथिव्यां पृथिवीपतिः ।८।
मदिराश्वस्य पुत्रस्तु द्युतिमान् नाम पार्थिवः ।९।
पुत्रो द्युतिमतस्त्वासीद् राजा परमधार्मिकः ।
सर्वलोकेषु विख्यातः सुवीरो नाम नामतः ।१०।
सुवीरस्य तु पुत्रोऽभूत् ..................।११।
स दुर्जय इति ख्यातः... ..... ......।
दुर्जयस्येन्द्रवपुषः पुत्रोऽक्षिसदृशद्युतिः ।१२।
दुर्योधनो नाम महान् राजा राजर्षिसत्तमः ।१३।
तं नर्मदा देवनदी पुण्या शीतजला शिवा ।
चकमे पुरुषव्याघ्रं स्वेन भावेन भारत ।१८।
तस्यां जज्ञे तदा नद्या कन्या राजीवलोचना ।
नाम्ना सुदर्शना राजन् रूपेण च सुदर्शना ।१९।
तस्याः समभवत् पुत्रो नाम्नाऽऽग्नेयः सुदर्शनः ।३६।

**अर्थ**—प्रजापति मनु का पुत्र राजा इक्ष्वाकु था। उसके एक **सौ** पुत्र थे जो सभी सूर्य के समान तेजस्वी थे। उनमें दशवें पुत्र का नाम 'दशाश्व' था। वह सत्यविक्रमी राजा दशाश्व माहिष्मती का धर्मात्मा राजा था। दशाश्व का पुत्र परमधार्मिक राजा हुआ—'मदिराश्व' जो पृथिवी पर एक विख्यात राजा था। मदिराश्व का पुत्र 'द्युतिमान्' नाम का राजा था। राजा द्युतिमान् का परमधार्मिक और सर्वलोकों में विख्यात पुत्र 'सुवीर' नाम का राजा था। उसका पुत्र था राजा दुर्जय। उसका पुत्र इन्द्रतुल्य राजा दुर्योधन श्रेष्ठ राजा और राजर्षि था। देवनदी पुण्यशील, शीतजला और कल्याणी नर्मदा (नाम्नी राजकन्या) ने पुरुषव्याघ्र

दुर्योधन की कामना की (उससे विवाह किया।) उससे उनकी एक कमलनेत्री कन्या उत्पन्न हुई जिसका नाम था सुदर्शना। जो रूप में भी यथार्थनामा सुदर्शना थी। उसका पुत्र अग्नि (अंगिरावंशीय) ऋषि से हुआ 'आग्नेय'। जिसको सुदर्शन भी कहते थे।

**महाभिषः—**

इक्ष्वाकुवंशप्रभवो राजाऽऽसीत् पृथिवीपतिः।
महाभिष इति ख्यातः सत्यवाक् सत्यविक्रमः॥

महाभारत (१।९६।१)

**अर्थ**—इक्ष्वाकुवंश में उत्पन्न राजा, पृथिवी का शासक था उसका नाम महाभिष था। वह सत्यवाक् और सत्यविक्रम था।

**बक दाल्भ्यो (मैत्रेयः)—**

श्रूयते हि महाभाग बको दाल्भ्यो महातपाः।
प्रियः सखा च शक्रस्य चिरजीवी च सत्तम॥ (३।१९३।४)

**अर्थ**—महातपस्वी बकदाल्भ्य नाम का ऋषि, चिरंजीवी, इन्द्र का प्रिय सखा था।

**शिबिसुहोत्रयोः समकालिकत्वम्—**

कुरूणामन्यतमः सुहोत्रो नाम राजा महर्षीनभिगम्य निवृत्य रथ-स्थमेव राजानमौशीनरं शिबिं ददर्श। (३।१।१९४।२)
वृषदर्भसेदुकनामानौ राजानौ ।(३।१९६।२)

**अर्थ**—कुरुओं (भरतों) का श्रेष्ठतम सुहोत्र रथ में बैठकर महर्षियों के पास जाकर पुनः लौटकर राजा शिबि औशीनर से मिला।

वृषदर्भ और सेदुक नाम के दो राजा (समकालिक)

**अष्टकस्य समानकालिका राजानः—**

अष्टकस्य वैश्वामित्रेरश्वमेधे सर्वे राजानः प्रागच्छन्।१।
भ्रातरश्चास्य प्रतर्दनो वसुमनाः शिबिरौशीनर इति।
··· ···ते च नारदमगच्छन्तः······।२।

**अर्थ**—अष्टक वैश्वामित्रि के अश्वमेध यज्ञ में सभी राजा आये। उनके भ्राता प्रतर्दन (काशिराज), वसुमना (ऐक्ष्वाक) और शिबि औशीनर थे। वे सभी नारद के पास गये।

**इक्ष्वाकुवंशः—**

इक्ष्वाकौ संस्थिते राजन् शशादः पृथिवीमिमाम्।
प्राप्तः परमधर्मात्मा सोऽयोध्यायां नृपोऽभवत्।१।

शशादस्य तु दायादः ककुत्स्थो नाम वीर्यवान् ।
अनेनाश्चापि काकुत्स्थः पृथुश्चानेनसः सुतः ।२।
विश्वगश्वः पृथोः पुत्रस्तस्माददिश्च जज्ञिवान् ।३।
तस्य श्रावस्तको ज्ञेयः श्रावस्ती येन निर्मिता ।
श्रावस्तकस्य दायादो बृहदश्वो महाबलः ।४।
बृहदश्वस्य दायादः कुवलाश्व इति स्मृतः ।
कुवलाश्वस्य पुत्राणां सहस्राण्यकेविंशतिः ।५। (३।२०२)

**अर्थ**—इक्ष्वाकु के परमधाम के पश्चात् उसका पुत्र परम धर्मातमा शशाद अयोध्या का राजा हुआ । शशाद का उत्तराधिकारी ककुत्स्थ नाम का राजा हुआ । ककुत्स्थ का पुत्र अनेना था । अनेना का पुत्र पृथु था । पृथु का पुत्र विश्वगश्व था । उसका पुत्र अद्रि हुआ । अद्रि का पुत्र श्रावस्तक था जिसने श्रावस्ती नगरी बसाई । श्रावस्तक का पुत्र महाबली बृहदश्व हुआ और उसका उत्तराधिकारी कुवलाश्व हुआ, उसके इक्कीस हजार पुत्र थे ।

**धुन्धुर्दैत्यः**—

मधुकैटभयोः पुत्रो धुन्धुर्नाम सुदारुणः ।। (३।२०२।१८)

**अर्थ**—मधुकैटभ का पुत्र धुन्धु नाम का भयंकर असुर था ।

**पौलोमाः कालकञ्जाश्च (दानवाः)**—(महा० ३।१७३)

पुलोमा नाम दैतेयी कालका च महासुरी ।
दिव्यं वर्षसहस्रं ते चेरतुः परमं तपः ।१७।
परं सुरमणीयं च खचरं सुमहाप्रभम् ।६।
पौलोमाध्युषितं वीर कालकञ्जैश्च दानवैः ।१२।
हिरण्यपुरमित्येव ख्यायते नगरं महत् ।१३।

**अर्थ**—पुलोमा नाम की दैत्यी और कालका नाम की महासुरी थी । उन दोनों ने दिव्य (सौर) सहस्रवर्ष परम तप किया । उनका परमरमणीय आकाश में देदीप्यमान पुर (नगर) था । उसमें (उन दोनों दानवियों के वंशज) पौलोम और कालकञ्ज दानव (असुर) रहते थे । उनका नगर 'हिरण्यपुर' नाम का विख्यात महानगर था ।

**ऐक्ष्वाकः परीक्षित्**—

अयोध्यायामिक्ष्वाकुकुलोद्वहः पार्थिवः परिक्षिन्नाम मृगयामगमत् ।३।
राजन्नहमायुर्नाम मण्डूकराजो मम सा दुहिता सुशोभना नाम ।३४।
अथ कस्यचित् कालस्य तस्यां कुमारास्त्रयस्तस्य राज्ञः संबभूवुः

शलो दलो बलश्चेति । ततस्तेषां ज्येष्ठं शलं समये पिता राज्ये-
ऽभिषिच्य तपसि धृतात्मा वनं जगाम ।३८।
स गत्वा वामदेवाश्रमं तमृषिमब्रवीत् ।४२।
ततो विदित्वा नृपतिं निपातितमिक्ष्वाकवो वैदलमभ्यषिञ्चन् ।५६।
जानामि पुत्रं दशवर्षं तवाहं महिष्यां श्येनचितं नरेन्द्र ।···।६३।

अर्थ—अयोध्या में इक्ष्वाकुकुल का राजा परिक्षित् शिकार के लिए गया । (उसके पास मण्डूकराज आया और बोला)—राजन् ! मैं आयु नाम का मण्डूक-राज हूं, मेरी पुत्री सुशोभना है । ·· उससे राजा के तीन पुत्र हुए—शल, दल और बल । यथासमय राजा परिक्षित् ने ज्येष्ठपुत्र को राज्यसिंहासन पर बैठाकर धैर्य-शाली होकर वन में तप के लिए चला गया ।···वहां जाकर वामदेव ऋषि के आश्रम में जाकर बोला । ··

(युद्ध में) ऐक्ष्वाकों के पतन को सुनकर (परिक्षित् को मारा जाना) उन्होंने दल का राज्याभिषेक किया । (वामदेव ने कहा)—हे राजन् ! मैं आपकी महिषी के पुत्र 'श्येनचित्' को जानता हूं ।

**व्युषिताश्वः-(पौरवः)—**

व्युषिताश्व इति ख्यातो बभूव किल पार्थिवः ।
पुरा परमधर्मिष्ठः पूरोर्वंशविवर्धनः (१।१२०।७)
आसीत् काक्षीवती चास्य भार्या परमसम्मता ।
भद्रा नाम मनुष्येन्द्र रूपेणासदृशी भुवि ।१७।
सा तेन सुषुवे देवी शवेन भरतर्षभ ।
त्रीन् शाल्वांश्चतुरो मद्रान् सुतान् भरतसत्तम ।।

(महा० ३।१२०।३६)

अर्थ—पुरुवंश में एक प्रसिद्ध, परमधर्मिष्ठ राजा व्युषिताश्व हुए । उसकी परम सम्मानित भार्या कक्षीवान् की पुत्री (या वंशजा) भद्रा नाम वाली थी, जो रूप में, पृथिवी पर अप्रतिम थी । उसने अपने पति के शव द्वारा तीन शाल्व जातीय और चार मद्र जातीय पुत्रों को उत्पन्न किया ।

**(वाल्मीकीयरामायण)**

**कुशवंशः—**

ब्रह्मयोनिर्महानासीत् कुशो नाम महातपाः ।१।
स महात्मा कुलीनायां युक्तायां सुमहाबलान् ।
वैदर्भ्यां जनयामास चतुरः सदृशान् सुतान् ।२।
कुशाम्बं कुशनाभं च अमूर्तरजसं वसुम् ।३।

कुशाम्बस्तु महातेजा कौशाम्बीमकरोत् पुरीम् ।६।
कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ।
अमूर्तरजसो नाम धर्मारण्यं महामतिः ।
चक्रे पुरवरं राजा वसुनामो गिरिव्रजम् ।७।

× × ×

कुशनाभस्तु राजर्षिः कन्याशतमुत्तमम् ।
जनयामास धर्मात्मा घृताच्यां रघुनन्दन ।११। (१।२२)
एतस्मिन्नेव काले तु चूली नाम महाद्युतिः ।
ऊर्ध्वरेता शुभाचारो ब्राह्मं तप उपागमत् ।११।
तपस्यन्तमृषिं तत्र गन्धर्वी पर्युपासते ।
सोमदा नाम भद्रं ते ऊर्मिलातनया तदा ।१२।
ब्रह्मदत्त इति ख्यातं मानसं चूलिनः सुतम् ।१८।
स राजा ब्रह्मदत्तस्तु पुरीमध्यवसत् तदा ।
काम्पिल्यां परया लक्ष्म्या देवराजो यथा दिवम् ।१९।
ब्रह्मदत्ताय काकुत्स्थ दातुं कन्या शतं तदा ।२०।

**अर्थ**—कुशनाम के महातपस्वी महात्मा राजा ब्रह्मयोनि (ब्रह्मा से उत्पन्न) थे। उस महात्मा कुश ने कुलीन एवं युक्त वैदर्भी से अपने सदृश चार पुत्र उत्पन्न किये—कुशाम्ब, कुशनाभ, अमूरजस और वसु। कुशाम्ब ने कौशाम्बी नगरी बसाई। कुशनाभ ने महोदय नगर बसाया। अमूर्तरजस से धर्मारण्य प्रथित हुआ वसु ने श्रेष्ठ नगर गिरिव्रज (राजगृह) की स्थापना की।

राजर्षि कुशनाभ ने सौ कन्यायें उत्पन्न कीं, घृताची अप्सरा से। इसी समय महातेजस्वी, ब्रह्मचारी, शुभाचारी चूली ने ब्राह्म तप किया। तपस्या करते हुए चूली ऋषि की परिचर्या (सेवा) ऊर्मिला की पुत्री सोमदा गन्धर्वी करती थी। उससे चूली का मानसपुत्र ब्रह्मदत्त उत्पन्न हुआ। राजा ब्रह्मदत्त, देवराज इन्द्र के समान परमलक्ष्मी से सम्पन्न काम्पिल्य नगरी में राज्य करते थे। हे राम! राजा कुशनाभ ने अपनी सौ कन्यायें ब्रह्मदत्त को देनी चाहीं (अतः दे दीं)।

**विशालवंश (वैशालेयवंश)**—

इक्ष्वाकोस्तु नरव्याघ्र पुत्रः परमधार्मिकः।
अलम्बुषायामुत्पन्नो विशाल इति विश्रुतः।
तेन चासीदिह स्थाने विशालेति पुरी कृता॥
विशालेन सुतो राम हेमचन्द्रो महाबलः॥
सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तरः।

सुचन्द्रतनयो राम धूम्राश्व इति विश्रुतः।
धूम्राश्वतनयश्चापि सृञ्जयः समपद्यत।
सृञ्जयस्य सुतः श्रीमान् सहदेवः प्रतापवान्।
कुशाश्वः सहदेवस्य पुत्रः परमधार्मिकः।

अर्थ—परमधार्मिक पुरुषसिंह इक्ष्वाकु का अप्सरा अलम्बुषा से विशाल नाम का पुत्र उत्पन्न हुआ। इसी स्थान पर हे राम! विशाल ने 'विशाला' नाम की पुरी बसाई। विशाल का पुत्र महाबली हेमचन्द्र हुआ। हेमचन्द्र का पुत्र सुचन्द्र हुआ। सुचन्द्र का पुत्र विख्यात राजा धूम्राश्व हुआ और उसका पुत्र सृञ्जय हुआ। सृञ्जय का पुत्र श्रीमान् प्रतापी सहदेव था। सहदेव का परमधार्मिक पुत्र कुशाश्व था।

कुशाश्वस्य महातेजाः सोमदत्तः प्रतापवान्।
सोमदत्तस्य पुत्रस्तु काकुत्स्थ इति विश्रुतः।
तस्य पुत्रो महातेजाः सम्प्रत्येष पुरीमिमाम्।
आवसत् परमप्रख्यः सुमतिर्नाम दुर्जयः।
इक्ष्वाकोस्तु प्रसादेन सर्वे वैशालिका नृपाः।
दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः॥

(बाल० ४७।११-१८)

**अर्थ**—कुशाश्व का महातेजस्वी और प्रतापी पुत्र सोमदत्त हुआ। सोमदत्त का विश्रुत पुत्र हे राम सुमति है, जो इस समय इस विशालपुरी में राज्य कर रहा है। वह बड़ा प्रख्यात एवं दुर्जय है। इक्ष्वाकु की कृपा से सभी वैशालिक राजागण दीर्घजीवी, महाबली, वीर्यवान् और अत्यन्त धार्मिक हुए।

**इक्ष्वाकुवंशः—**

अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्यो अव्ययः।
तस्मान्मरीचिः संजज्ञे मरीचेः कश्यपः सुतः॥
विवस्वान् कश्यपाज्जज्ञे मनुर्वैवस्वतः स्मृतः॥
मनुः प्रजापतिः पूर्वमिक्ष्वाकुश्च मनोः सुतः।
तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम्॥
इक्ष्वाकोस्तु सुतः श्रीमान् कुक्षिरित्येव विश्रुतः।
कुक्षेरथात्मजः श्रीमान् विकुक्षिरुदपद्यत॥
विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान्।
बाणस्य महातेजा अनरण्यः प्रतापवान्।
अनरण्यात् पृथुर्जज्ञे त्रिशंकुश्च पृथोरपि।

त्रिशंकोरभवत् पुत्रो धुन्धुमारो महायशाः ।
धुन्धुमारान्महातेजा युवनाश्वो महारथः ।
युवनाश्वसुतश्चासीन्मान्धाता पृथिवीपतिः ।।
मान्धातुस्तु सुतः श्रीमान् सुसंधिरुदपद्यत ।
सुसंधेरपि पुत्रौ द्वौ ध्रुवसंधिः प्रसेनजित् ।
यशस्वी ध्रुवसन्धेस्तु भरतो नाम नामतः ।
भरतात् तु महातेजा असितो नामाजायत ।
यस्येते प्रतिराजन उदपद्यन्त शत्रवः ।
हैहयास्तालजंघाश्च शूराश्च शशबिन्दवः ।।
तांश्च स प्रतियुध्यन् वै युद्धे राजा प्रवासितः ।
हिमवन्तमुपागम्य भार्याभ्यां सहितस्तदा ।।
असितोऽल्पबलो राजा कालधर्ममुपेयिवान् ।।
द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति श्रुतिः ।।

अर्थ—अव्यक्त से उत्पन्न, सनातन, नित्य, अव्यय ब्रह्मा थे। ब्रह्मा से मरीचि उत्पन्न हुए और उनके पुत्र कश्यप हुए। कश्यप से विवस्वान् उत्पन्न हुए और उनके पुत्र मनुवैवस्वत थे। पूर्वकाल में मनुवैवस्वत प्रजापति थे। मनु के पुत्र इक्ष्वाकु हुए। इक्ष्वाकु अयोध्या के प्रथम राजा थे। इक्ष्वाकु का पुत्र विख्यात कुक्षि था। कुक्षि का पुत्र श्रीमान् विकुक्षि हुआ। विकुक्षि का पुत्र प्रतापी और तेजस्वी पुत्र बाण हुआ। बाण का पुत्र महातेजस्वी प्रतापी अनरण्य हुआ। अनरण्य से पृथु उत्पन्न हुआ। पृथु का पुत्र त्रिशंकु हुआ। त्रिशंकु का पुत्र महातेजस्वी और महारथी धुन्धुमार था। धुन्धुमार से तेजस्वी यशस्वी पुत्र युवनाश्व उत्पन्न हुआ। युवनाश्व का पुत्र पृथिवीपति (सम्राट्) मान्धाता हुआ। मान्धाता का पुत्र श्रीमान् सुसंधि उत्पन्न हुआ। सुसंधि के दो पुत्र हुए—ध्रुवसन्धि और प्रसेनजित्। यशस्वी ध्रुवसन्धि का पुत्र भरत हुआ। भरत का पुत्र महातेजस्वी असित राजा हुआ। उसके प्रतिद्वन्द्वी शत्रु थे हैहय, तालजंघ, शूर और शशबिन्दु गण। उनसे युद्ध करते हुए राजा प्रवास में चला गया। अपनी दो पत्नियों के साथ वह हिमालय में रहने लगा। दुर्बल राजा असित मृत्यु को प्राप्त हुआ। उसकी दोनों पत्नियां गर्भवती थी, ऐसा इतिहास से ज्ञान होता है।

एकः गर्भविनाशार्थं सपत्न्यै सगरं ददौ ।

× × ×

सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया ।
सह तेन गरेणैव संजातः सगरोऽभवत् ।।

सगरस्यासमञ्जस्तु असमञ्जादथांशुमान् ।
दिलीपोंऽशुमतो पुत्रो दिलीपस्य भगीरथः ।
भगीरथात् ककुत्स्थश्च ककुत्स्थाच्च रघुस्तथा ।
रघोस्तु पुत्रस्तेजस्वी प्रबुद्धः पुरुषादकः ।
कल्माषपादोऽप्यभवत् तस्या जातस्तु शंखणः ।
सुदर्शनः शंखणस्य अग्निवर्णः सुदर्शनात् ॥
शीघ्रगस्त्वग्निवर्णस्य शीघ्रगस्य मरुः सुतः ।
मरोः प्रशुश्रुकस्त्वासीदम्बरीषः प्रशुश्रुकात् ॥
अम्बरीषस्य पुत्रोऽभून्नहुषश्च महीपतिः ।
नहुषस्य ययातिस्तु नाभागस्तु ययातिजः ॥
नाभागस्य बभूवाज अजाद् दशरथोऽभवत् ।
अस्माद् दशरथाज्जातौ भ्रातरौ रामलक्ष्मणौ ॥

(१।७०।१९-३१, ३७-४३)
स्वल्पपाठान्तर तथा २।११०।५-३५

अर्थ—एक पत्नी ने गर्भ के विनाश के लिए अपनी सपत्नी को जहर दे दिया। जब सपत्नी ने गर्भ मारने के लिए विष दिया, तब उस गरल के साथ ही सगर उत्पन्न हुआ। सगर का पुत्र असमञ्जा हुआ और असमञ्जा का पुत्र अंशुमान् हुआ। अंशुमान् का पुत्र दिलीप और दिलीप का पुत्र भगीरथ हुआ। भगीरथ का पुत्र ककुत्स्थ और ककुत्स्थ का पुत्र रघु हुआ। रघु का पुत्र तेजस्वी और प्रवृद्ध राक्षस कल्माषपाद हुआ और उसका पुत्र शंखण था। शंखण का पुत्र सुदर्शन और उसका पुत्र अग्निवर्ण हुआ। अग्निवर्ण का पुत्र शीघ्रग और उसका पुत्र मरु था। मरु का पुत्र प्रशुश्रुक और उससे अम्बरीष हुआ। अम्बरीष का पुत्र नहुष, नहुष का ययाति, ययाति का पुत्र नाभाग, नाभाग का पुत्र अज हुआ। अज का पुत्र दशरथ और दशरथ के पुत्र राम व भ्राता हुए।

**जनकवंशः—**

राजाभूत् त्रिषु लोकेषु विश्रुतः स्वेन कर्मणा ।
निमिः परमधर्मात्मा सर्वसत्त्ववतां वरः ॥
तस्य पुत्रो मिथिर्नाम जनको मिथिपुत्रकः ।
प्रथमो जनको राजा जनकादप्युदावसुः ।
उदावसोस्तु धर्मात्मा जातो वै नन्दिवर्धनः ।
नन्दिवर्धसुतः शूरः सुकेतुर्नाम नामतः ।
सुकेतोरपि धर्मात्मा देवरातो महाबलः ।

देवरातस्य राजर्षेर्बृहद्रथ इति स्मृतः ॥
बृहद्रथस्य शूरोऽभून्महावीरो प्रतापवान् ।
महावीरस्य धृतिमान् सुधृतिः सत्यविक्रमः ॥
सुधृतेरपि धर्मात्मा धृष्टकेतुः सुधार्मिकः ।
धृष्टकेतोश्च राजर्षेर्हर्यश्व इति विश्रुतः ॥

**अर्थ** – सब मनुष्यों में श्रेष्ठ, अपने कर्मों से तीनों लोकों में विख्यात परम-धर्मात्मा राजा निमि हुआ। उसका पुत्र था मिथि, मिथि का पुत्र था जनक। वह प्रथम जनक था। प्रथम जनक से उदावसु। उदावसु का धर्मात्मा पुत्र धर्मात्मा नन्दिवर्धन था। नन्दिवर्धन का पुत्र शूरवीर सुकेतु नाम का हुआ। सुकेतु का महाबली धर्मात्मा पुत्र देवरात था। राजर्षि देवरात का पुत्र बृहद्रथ हुआ। बृहद्रथ का शूरवीर पुत्र प्रतापी महावीर हुआ। महावीर का पुत्र धृतिमान् और सुधृति का पराक्रमी धर्मात्मा पुत्र धृष्टकेतु। धृष्टकेतु का पुत्र राजर्षि हर्यश्व विख्यात था।

हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रतीन्धकः ।
प्रतीन्धकस्य धर्मात्मा राजा कीर्तिरथः सुतः ।
पुत्रः कीर्तिरथस्यापि देवमीढ इति स्मृतः ।
देवमीढस्य विबुधो विबुधस्य महीध्रकः ।
महीध्रकसुतो राजा कीर्तिरातो महाबलः ।
कीर्तिरातस्य राजर्षेर्महारोमा व्यजायत ॥
महारोम्णस्तु धर्मात्मा स्वर्णरोमा व्यजायत ।
स्वर्णरोम्णस्तु राजर्षेर्ह्रस्वरोमा व्यजायत ।
तस्य पुत्रद्वयं राज्ञो धर्मज्ञस्य महात्मनः ।
ज्येष्ठोऽहमनुजो भ्राता यत्र वीरः कुशध्वजः ।

वाल्मीकीयरामायण (१।७१।३-१३)

**अर्थ**—हर्यश्व का पुत्र मरु और मरु का पुत्र था प्रतीन्धक। प्रतीन्धक का धर्मात्मा पुत्र कीर्तिरथ हुआ। कीर्तिरथ का पुत्र था देवमीढ़। देवमीढ़ का पुत्र विबुध। विबुध का पुत्र महीध्रक। महीध्रक का पुत्र राजा कीर्तिरात महाबली था। राजर्षि कीर्तिरात का पुत्र था महारोमा। महारोमा का पुत्र धर्मात्मा स्वर्णरोमा हुआ। राजर्षि स्वर्णरोमा का पुत्र उत्पन्न हुआ ह्रस्वरोमा। धर्मज्ञ महाबली राजा ह्रस्वरोमा के दो पुत्र हुए—ज्येष्ठ मैं (सीरध्वज) और मेरा अनुज वीर कुशध्वज।

## (सोमवंश)

**सोम(=चन्द्र)—**

सोम के पिता भगवान् अत्रि ऋषि थे। राजाओं का राजा सोम महातेजस्वी था, वह राजा का राजा माहाराज्य विधि से अभिषिक्त हुआ। दक्ष की रोहिणी आदि सत्ताईस पुत्रियां सोम की पत्नियां थीं जिनके नाम पर सत्ताईस नक्षत्रों के नाम भी पड़े।

सोम की परिचर्या (सेवा) सिनी, कुहू, वपु, पुष्टि, प्रभा, वसु, कीर्ति, धृति और लक्ष्मी—ये नौ देवियां करती थीं।

**बुध सौमायन—**

सोम का महाबली दस्युहन्ता कुमार विद्वान् बुध था। उसका यह नामकरण किया गया।

**पुरूरवा ऐल—**

बुध का पुत्र इला से पुरूरवा हुआ, जिससे उसको 'ऐल' कहते हैं।

**पुरूरवा ऐल के छः पुत्र—**

पुरूरवा ने उर्वशी से गन्धर्वलोक में विख्यात छः पुत्र उत्पन्न किये—आयु, धीमान्, अमावसु, विश्वायु, शतायु और श्रुतायु।

**अमावसु वंश—**

अमावसु का पुत्र राजा भीम विश्वविजेता था। भीम का उत्तराधिकारी राजा कांचनप्रभ था। कांचनप्रभ का पुत्र विद्वान् राजा महाबली सुहोत्र था। सुहोत्र का पुत्र था जह्नु जो कोशिका (पत्नी) के गर्भ से उत्पन्न हुआ।

× × ×

यौवनाश्व (मान्धाता) की पौत्री (पुरुकुत्स की पुत्री) कावेरी से जह्नु ने विवाह किया। जह्नु का प्रिय पुत्र भी सुहोत्र (द्वितीय) धार्मिक राजा था।

सुहोत्र (द्वितीय) का पुत्र हुआ अजक। उसका पुत्र हुआ यशस्वी बलकाश्व। उसके पुत्र हुए—गय, शील और कुश। कुश के वेद के विद्वान् चार पुत्र हुए।

कुशाश्व कुशनाभश्च अमूररयसो वसुः।
कुशस्तम्बस्तपस्तेपे पुत्रार्थी राजसत्तमः।
गाधिर्नामभवत् पुत्रः कौशिकः पाकशासनः॥
पौरुकुत्साभवत्भार्या गाधिस्तस्यामजायत।
पूर्वं कन्यां महाभागां नाम्ना सत्यवतीं शुभाम्।
तां गाधिपुत्रः काव्याय ऋचीकाय ददौ प्रभुः।

× × ×

जमनाद्वैष्णवस्याग्नेर्जमदग्निरजायत ।
विश्वामित्रं तु दायादं गाधिः कुशिकनन्दनः ।
इक्ष्वाकुवंशे त्वभवत्सुवेणुर्नाम पार्थिवः ।
तस्य कन्या महाभागा कामली नाम रेणुका ।
रेणुकायां तु कामल्यां तपोधृतिसमन्वितः ।
आर्चीको जनयामास जमदग्निं सुदारुणम् ॥
रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकम् ॥
विश्वामित्रस्तु धर्मात्मा नाम्ना विश्वरथः स्मृतः ॥
विश्वामित्रस्य पुत्रस्तु शुनःशेफोऽभवन्मुनिः ।
हरिश्चन्द्रस्य यज्ञे तु पशुत्वे नियुतः स वै ।
देवैर्दत्तः स वै यस्माद्देवरातस्ततोऽभवत् ॥ (वायुपुराणे)

**अर्थ**—कुशाश्व, कुशनाभ, अमूर्तरया और वसु ।

राजा कुशस्तम्ब ने पुत्र हेतु तप किया। स्वयं कौशिक इन्द्र ही गाधि नाम से उनके पुत्र बन गये। कुशस्तम्ब (कुशिक) की भार्या पौरुकुत्सी (पुरुकुत्स की पुत्री) थी, जिससे गाधि उत्पन्न हुए। इससे पूर्व उनके एक कन्या उत्पन्न हुई, जो सत्यवती नाम से प्रख्यात थी। गाधिपुत्र (विश्वामित्र) ने उसे ऋचीक काव्य के के लिए समर्पित कर दिया।

वैष्णव तेज के जमन से जमदग्नि (ऋचीकपुत्र) उत्पन्न हुए। गाधि के उत्तराधिकारी विश्वामित्र हुए। इक्ष्वाकुवंश में सुवेणु नाम के एक राजा हुए। उनकी कन्या महाभागा कामली नाम की रेणुका थी। रेणुका कामली से आर्चीक जमदग्नि ने भयंकर क्षत्रियहन्ता तपस्वी परशुराम को उत्पन्न किया जो अग्नि के समान तेजस्वी थे।

धर्मात्मा विश्वामित्र का ही नाम विश्वरथ था। विश्वामित्र का पुत्र मुनि शुनःशेफ हुआ। हरिश्चन्द्र के यज्ञ में वह शुनःशेफ बलि का पशु बनाया। वह देवों द्वारा दत्त था, अतः वह 'देवरात' था।

**विश्वामित्रपुत्राः—**

विश्वामित्रस्य च सुता देवरातादयः स्मृताः ।
प्रख्यातास्त्रिषु लोकेषु तेषां नामानि मे श्रृणु ॥
देवश्रवाः कतिश्चैव यस्मात्कात्यायनाः स्मृताः ।
शालावत्या हिरण्याक्षो रेणोर्जज्ञेऽथ रेणुमान् ।
सांकृतिर्गालवश्चैव मुद्गलश्चेति विश्रुताः ॥
मधुच्छन्दो जयश्चैव देवलश्च तथाष्टकः ।

कच्छपो हारितश्चैव विश्वामित्रस्य वै सुताः ॥

(हरिवंशे १।२७)

अर्थ—विश्वामित्र के पुत्र देवरात इत्यादि थे जो तीनों लोकों में विख्यात हुए। उनके नाम थे—देवश्रवा, कति (कत) जिनसे कात्यायन विख्यात हुए। अन्य पुत्र थे—शालावत्य, हिरण्याक्ष, रेणु, रेणुमान्, सांकृति, गालव, मुद्गल, मधुच्छन्दा, जय, देवल, अष्टक, कच्छप और हारित।

(हरिवंश १।२९)

**आयुवंशः—**

एते पुत्रा महात्मनः पंचैवासन् महाबलाः।
स्वर्भानुतनयायां विप्राः प्रभायां जज्ञिरे नृपाः ॥
नहुषः प्रथमं जज्ञे वृद्धशर्मा ततः परम्।
रम्भो रजिरनेनाश्च त्रिषु लोकेषु विश्रुताः।

अर्थ—स्वर्भानु (राहु) की पुत्री प्रभा के आयु द्वारा पांच महाबली पुत्र उत्पन्न हुए—नहुष, (ज्येष्ठ पुत्र), वृद्धशर्मा, रम्भ, रजि और अनेना जो तीनों लोकों (अर्थात् सम्पूर्ण भूमण्डल की जातियों) में विख्यात थे।

**अनेनाःवंशः—**

अनेनसः सुतो राजा प्रतिक्षत्रो महायशाः।
प्रतिक्षत्रसुतश्चापि सृंजयो नाम विश्रुतः ॥
सृंजयस्य जयः पुत्रो विजयस्तस्य चात्मजः।
विजयस्य कृतिः पुत्रस्तस्य हर्यश्वः सुतः।
हर्यश्वसुतो राजा सहदेवः प्रतापवान्।
सहदेवस्य धर्मात्मा नदीन इति विश्रुतः।
नदीनस्य जयत्सेनो जयत्सेनस्य संकृतिः।
संकृतेरपि धर्मात्मा क्षत्रधर्मा महायशाः।

अर्थ—अनेना का पुत्र प्रतिक्षत्र महायशस्वी था। प्रतिक्षत्र का पुत्र विख्यात सृंजय था। सृंजय का पुत्र जय था और उसका पुत्र था विजय। विजय का पुत्र था कृति और उसका पुत्र था हर्यश्व। उसका पुत्र हुआ प्रतापी सहदेव। सहदेव का पुत्र धर्मात्मा नदीन हुआ। नदीन का पुत्र जयत्सेन और उसका पुत्र हुआ संकृति। संकृति का पुत्र हुआ महायशस्वी क्षत्रधर्मा।

**काशिवंशः—**

क्षत्रवृद्धात्मजस्तत्र शुनहोत्रो महायशाः।
शुनहोत्रस्य दायदास्त्रयः परमधार्मिकाः।

काशः शलश्च द्वावेतौ तथा गृत्समदः प्रभुः ।
पुत्रो गृत्समदस्यापि शुनको यस्य शौनकाः ।।
ब्राह्मणाः क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च ।
शलात्मजश्चार्ष्टिषेणस्तस्य काशकः ।
काशस्य काशयो राजन् पुत्रो दीर्घस्तपास्तथा ।।
धन्वस्तु दीर्घतपसो विद्वान् धन्वन्तरिस्ततः ।।

× × ×

धन्वन्तरेस्तु तनयः केतुमानिति विश्रुतः ।
अथ केतुमतः पुत्रो वीरो भीमरथः स्मृतः ।।
सुतो भीमरथस्यापि दिवोदासः प्रजेश्वरः ।।
दिवोदासस्तु धर्मात्मा वाराणस्यधिपोऽभवत् ।

× × ×

दिवोदासाद् दृषद्वत्यां वीरो जज्ञे प्रतर्दनः ।
प्रदर्दनस्य पुत्रौ द्वौ वत्सभर्गौ बभूवतुः ।।

**अर्थ**-क्षत्रधर्म का पुत्र हुआ शुनहोत्र और शुनहोत्र के परमधार्मिक तीन पुत्र थे—काश, शल और प्रतापी गृत्समद। गृत्समद का पुत्र हुआ शुनक और शुनक के वंशज शौनक कहलाये। शौनकों में—ब्राह्मण, क्षत्रिय, वैश्य और शूद्र चारों ही वर्ण थे।

शल का पुत्र आर्ष्टिषेण था और उसका पुत्र काशक। (शुनहोत्र के तृतीय पुत्र) काश से काशि क्षत्रिय उत्पन्न हुए। काशि दीर्घतपा काश का पुत्र था, उसका पुत्र धन्व हुआ, जिसका विद्वान् (वैद्य) धन्वन्तरि हुआ।

धन्वन्तरि का पुत्र केतुमान् था। केतुमान् का पुत्र वीर भीमरथ था। भीमरथ का पुत्र राजा दिवोदास हुआ। यह दिवोदास काशी का प्रसिद्ध राजा था।

दिवोदास द्रषद्वती (माधवी) से वीर प्रतर्दन उत्पन्न हुआ। प्रतर्दन के दो पुत्र हुए वत्स और भर्ग।

वत्सपुत्रो ह्यलर्कस्तु संनतिस्तस्य चात्मजः ।

× × ×

संनतेरपि दायादः सुनीथो नाम धार्मिकः ।
सुनीथस्य दायादो क्षेम्यो नाम महायशाः ।।
क्षेम्यस्य केतुमान् पुत्रः सुकेतुस्तस्य चात्मजः ।
सुकेतोस्तनयश्चापि धर्मकेतुरिति स्मृतः ।।

धर्मकेतुस्तु दायादः सत्यकेतुर्महारथः ।
सत्यकेतुसुतश्चापि विभुर्नाम प्रजेश्वरः ।
आनर्तस्तु विभोः पुत्रं सुकुमारस्तु तत्सुतः ।
सुकुमारस्य पुत्रस्तु धृष्टकेतुः सुधार्मिकः ॥
धृष्टकेतोस्तु दायादो वेणुहोत्रः प्रजेश्वरः ।
वेणुहोत्र सुतश्चापि भर्गो नाम प्रजेश्वरः ।
वत्सस्य वत्सभूमिस्तु भर्गभूमिस्तु भार्गवात् ॥
एते त्वङ्गिरसः पुत्रा जाता वंशेऽथ भार्गवे ।
इत्येते काशयः प्रोक्ता नहुषस्य निबोध मे ॥ (हरिवंशे १।२९)

**अर्थ**—वत्स का पुत्र था अलर्क और उसका उत्तराधिकारी हुआ संनति । संनति का पुत्र था सुनीथ । उसका दायाद था क्षेम्य यशस्वी । क्षेम्य का पुत्र हुआ केतुमान् और उसका पुत्र था सुकेतु, उसका पुत्र हुआ धर्मकेतु, उसका पुत्र था महारथी सत्यकेतु और उसका उत्तराधिकारी हुआ विभुनाम का राजा । विभुपुत्र था आनर्त और उसका पुत्र था सुकुमार । उसका पुत्र हुआ धृष्टकेतु तथा उसका पुत्र हुआ राजा वेणुहोत्र । उसका पुत्र हुआ भर्ग तथा उसका दायाद था वत्सभूमि और भर्ग से भर्गभूमि ।

ये अंगिरस के पुत्र भार्गव (भृग्वङ्गिरस) थे, जो काशिजन कहे गये हैं ।

**नहुषपुत्राः**—

उत्पन्नाः पितृकन्यायां विरजायां महौजसः ।
नहुषस्य दायादा षडिन्द्रोपमतेजसः ।
यतिर्ययातिः संयातिरायातिः पांचिको भवः ।
सुयातिः षष्ठस्तेषां वै ययातिः पार्थिवोऽभवत् ।
यतिर्ज्येष्ठस्तु तेषां वै ययातिस्तु ततः परम् ।
ककुत्स्थकन्यां गां नाम लेभे परमधार्मिकः ।
यतिस्तु मोक्षमास्थाय ब्रह्मभूतोऽभवन्मुनिः ॥

**अर्थ**—तेजस्वी नहुष द्वारा पितृकन्या विरजा से छः इन्द्रतुल्य बलवान् पुत्र उत्पन्न हुए—यति, ययाति, संयाति, आयाति, सुयाति, पांचिक और भव । इनमें ययाति नहुष का उत्तराधिकारी हुआ । यति ज्येष्ठ था (परन्तु वह संन्यासी होगया, अतः) ययाति राजा बना । यति का विवाह ऐक्ष्वाक राजा ककुत्स्थ कन्या 'गौ' नाम्नी से हुआ, परन्तु वह संन्यासी होकर ब्राह्मण मुनि बन गया ।

**ययातिः**—

तेषां ययातिः पंचानां विजित्य वसुधामिमाम् ।

देवयानीमुशनसः सुतां भार्यामवाप सः ।
शर्मिष्ठामासुरीं चैव तनयां वृषपर्वणः ॥

**अर्थ**—उनमें शेष पांचों में ज्येष्ठ ययाति ने पृथिवी को जीतकर उशना शुक्राचार्य भार्गव की पुत्री देवयानी को पत्नी रूप में प्राप्त किया तथा वृषपर्वा की पुत्री आसुरी शर्मिष्ठा को भी प्राप्त किया ।

**ययातिपुत्राः**—

यदुं च तुर्वसुं चैव देवयानी व्यजायत ।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ (हरि १।३० अ०)

**अर्थ**—देवयानी के दो पुत्र हुए—यदु और तुर्वसु तथा वार्षपर्वणी शर्मिष्ठा के तीन पुत्र उत्पन्न हुए—द्रुह्यु, अनु और पूरु ।

(हरिवंश १।३१ अ० ३२ अ०)

**पूरुवंशः**—

पूरोः पुत्रो महावीर्यो राजाऽऽसीज्जनमेजयः ।
प्राचिन्वांस्तु सुतस्तस्य यः प्राचीमजयद् दिशः ॥
प्राचिन्वतः प्रवीरोऽभून्मनस्युस्तस्य चात्मजः ।
राजा चाभयदो नाम मनस्योरभवत् सुतः ॥
तथैवाभयदस्यासीत् सुधन्वा तु महीपतिः ।
सुधन्वनो बहुगवः शम्पातिस्तस्य चात्मजः ॥
शम्पातेस्तु रहस्पाती रौद्राश्वस्तस्य चात्मजः ।
रौद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः ॥
ऋचेयुः प्रथमस्तेषां कृकणेयुस्तथैव च ।
कक्षेयुः स्थण्डिलेयुश्च सन्नतेयुस्तथैव च ।
दशार्णेयुर्जलेयुश्च स्थलेयुश्च महायशाः ।
धनेयुश्च वनेयुश्च पुत्रिकाश्च दश स्त्रियः ॥
रुद्रा शूद्रा च मद्रा च मलदा मलहा तथा ।
खलदा चैव राजेन्द्र नलदा सुरसापि च ।
तथा गोचपला तु स्त्री रत्नकूटा च ता दश ।
ऋषिर्जातोऽत्रिवंशे तु तासां भर्ता प्रभाकरः ।
रुद्रायां जनयामास सुतं सोमं यशस्विनम् ॥

**अर्थ**—पुरु का महाबलीपुत्र जनमेजय था और उसका पुत्र हुआ प्राचीन्वान्, जिसने प्राची दिशा को जीता । प्राचीन्वान् का पुत्र था प्रवीर और उसका पुत्र हुआ मनस्यु । मनस्यु का पुत्र हुआ अभयद, उसका पुत्र था सुधन्वा, उसका पुत्र

हुआ बहुगव । बहुगव का उत्तराधिकारी हुआ शम्पाति । उसका पुत्र हुआ रौद्राश्व ।

रौद्राश्व से घृताची अप्सरा द्वारा दश पुत्र उत्पन्न हुए—ऋचेयु, कक्णेयु, कक्षेयु, स्थण्डिलेयु, सन्नतेयु, दशार्णेयु, जलेयु, स्थलेयु, धनेयु, वनेयु तथा रौद्राश्व की दश पुत्री भी हुईं—रुद्रा, शूद्रा, मद्रा, मलदा, मलहा, खलदा, नलदा, सुरसा, गोचपला और स्त्रीरत्नकूटा ।

अत्रिवंश में उत्पन्न प्रभाकर आत्रेय इन दश रौद्राश्व पुत्रियों का पति था । रुद्रा ने यशस्वी सोम को उत्पन्न किया ।

**ऋचेयुवंशः—**

ऋचेयोर्ज्वलना नाम भार्या वै तक्षकात्मजा ।
यस्यां देव्यां मतिनारं त्वजीजनत् ॥
मतिनारः सरस्वत्यां पुत्रानजनयच्छुभान् ।
तंसुं तथा प्रतिरथं ध्रुवं चातिधार्मिकम् ।
गौरी कन्या च विख्याता मान्धातुर्जननी शुभा ।
पुत्रः प्रतिरथस्यासीत् कण्वः समभवन्नृपः ।
मेधातिथिः सुतस्तस्य यस्मात्काण्वायना द्विजाः ।
ईलिनी भूय यस्यासीत् कन्या वै जनमेजय ॥

**अर्थ**—रौद्राश्व के ज्येष्ठ पुत्र ऋचेयु की पत्नी किसी तक्षक की पुत्री ज्वलना नाम वाली थी । इसका पुत्र मतिनार हुआ । मतिनार ने सरस्वती पत्नी से तंसु, प्रतिरथ, ध्रुव संज्ञक पुत्र और विख्यात कन्या गौरी को उत्पन्न किया जो मान्धाता की माता थी ।

कण्व और काण्वायन – प्रतिरथ का पुत्र कण्व नाम का राजा (ब्रह्मक्षत्रोपेत) हुआ । कण्व का पुत्र मेधातिथि हुआ, जिसके वंशज काण्वायन ब्राह्मण हुए ।

प्रतिरथ की एक कन्या थी, जिसका नाम था ईलिनी ।

(हरिवंश १।३२ अ०)

ब्रह्मवादिन्यधि स्त्रीं च तंसुस्तामभ्यगच्छत ।
तंसोः सुरोधो राजर्षिर्धर्मनेत्रो महायशाः ॥
ब्रह्मवादी पराक्रान्तस्तस्य भार्योपदानवी ॥
उपदानवी सुतांल्लेभे चतुरस्त्वैलिकात्मजान् ॥
दुष्यन्तमथ सुष्यन्तं प्रवीरमनघं तथा ॥

**भरतवंशः—**

दुष्यन्तस्य तु दायादो भरतो नाम वीर्यवान् ॥
शकुन्तलायां भरतो यस्य नाम्ना स्थ भारताः ॥

× × ×

पूर्वं तु वितथं तस्य कृतं वै पुत्रजन्म हि ।
ततः स वितथो नाम भरद्वाजस्तथाऽभवत् ।।
ततोऽथ वितथे जाते भरतः स दिवं ययौ ।
वितथस्य दायादो भुवमन्युर्बभूव ह ।।
महाभूतोपकाश्चाऽऽसंश्चत्वारो भुवमन्युजाः ।।
बृहत्क्षत्रो महावीर्यो नरो गार्ग्यश्च वीर्यवान् ।।
नरस्य सांकृतिपुत्रस्तस्य पुत्रौ महौजसौ ।।
गुरुवीतिस्त्रिदेवश्च सांकृत्यायनवरौ स्मृतौ ।।
दायदाश्चापि गार्ग्यस्य शिनिबद्धाद् बभूव ह ।
स्मृताश्चै ततो गार्ग्याः क्षात्रोपेता द्विजातयः ।।
महावीर्यसुतश्चापि भीमस्तस्मादुरुक्षयः ।
तस्य भार्या विशाला तु सुषुवे वै सुतत्रयम् ।
त्रय्यारुणिं पुष्करिणं तृतीयं सुषुवे कपिम् ।
कपेः क्षत्रवरा ह्येते तयोः प्रोक्ता महर्षयः ।
गार्ग्याः साङ्कृतयो वीर्याः क्षत्रोपेता द्विजातयः ।
संश्रिताऽङ्गिरसं पक्षं बृहत्क्षत्रस्य वक्ष्यति ।।
बृहत्क्षत्रस्य दायादः सुहोत्रो नाम धार्मिकः ।
सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह ।।
तेनेदं निर्मितं पूर्वं नाम्ना वै हस्तिनापुरम् ।।
हस्तिनश्चापि दायदास्त्रय परमधार्मिकाः ।
अजमीढ़ो द्विजमीढ़ः पुरुमीढ़स्तथैव च ।।

**अर्थ**—वह ईलिनी ब्रह्मवादिनी (मन्त्रद्रष्टा ऋषिका) थी । तंसु ने ईलिनी को पत्नी रूप में पाया (या ईलिनी ही पुरुष रूप में तंसु बन गई)

तंसु के सुरोध नाम के पुत्र हुए जो राजर्षि धर्मनेत्र भी कहे जाते थे । वे महायशस्वी, ब्रह्मवादी (मन्त्रद्रष्टा) और पराक्रमी थे, उनकी पत्नी का नाम उपदानवी था । ईलिनीकुमार सुरोध ने उपदानवी से चार पुत्र उत्पन्न किये—दुष्यन्त, सुष्यन्त, प्रवीर और अनघ । दुष्यन्त का उत्तराधिकारी महाबली भरत दौष्यन्ति हुआ । वह शकुन्तला का पुत्र था, इसी 'भरत' के नाम से पौरव क्षत्रियण भारत कहलाये ।

**भरतवंश**—इससे पूर्व भरत द्वारा पुत्रजन्म के सभी प्रयत्न व्यर्थ होगये, तदनन्तर भरद्वाज ऋषि के प्रयत्न से, उनका एक पुत्र उत्पन्न हुआ, अतः उसका

नाम वितथ (भारद्वाज) रखा गया। वितथ के उत्पन्न होते ही भरत स्वर्ग सिधार गये।

वितथ का उत्तराधिकारी भुवमन्यु (या भूमन्यु) हुआ। चार महाभूतों (पृथ्वी, वायु, जल, अग्नि) के समान भूमन्यु के चार बलवान् पुत्र हुए—बृहत्क्षत्र, महावीर्य, नर और गार्ग्य (या गर्ग)

नर का पुत्र हुआ संकृति और संकृति के दो तेजस्वी पुत्र उत्पन्न हुए – गुरुवीति और त्रिदेव। वे श्रेष्ठ सांकृत्यायन ऋषि कहे जाते हैं। गार्ग्य के पुत्र शिनि आदि हुए। गार्ग्यगण क्षत्रोपेत ब्राह्मण कहे जाते हैं।

महावीर्य का पुत्र था भीम तथा उसका पुत्र हुआ उरुक्षय। उरुक्षय की पत्नी विशाला ने तीन पुत्र उत्पन्न किये—त्रय्यारुणि, पुष्करी और कपि। कपि क्षत्रियप्रवर थे और उनके वंशज ऋषि होगये। गार्ग्य, सांकृता और महावीर्य के क्षत्रोपेत ब्राह्मण होगये, जो आंगिरस पक्ष के थे।

**हस्ती और हस्तिनापुर**—भूमन्यु के ज्येष्ठपुत्र बृहत्क्षत्र का पुत्र धार्मिक राजा सुहोत्र था। सुहोत्र का पुत्र प्रसिद्ध राजा 'हस्ती' था जिसने 'हस्तिनापुर' नगर को बसाया।

हस्ती के तीन पुत्र हुए—अजमीढ़, द्विजमीढ़ और पुरुमीढ़।

**(हरिवंश १।३२)**

**अजमीढ़वंशः—**

अजमीढ़स्य पत्न्यस्तु शुभाः कुरुकुलोद्वहाः।
नलिनी केशिनी चैव धूमिनी च वराङ्गना।
अजमीढ़स्य केशिन्यां कण्वः समभवत्किल।
मेधातिथिः सुतस्तस्य तस्मात्काण्वायना: द्विजाः।
अजमीढ़स्य धूमिन्यां जज्ञे बृहद्वसुर्नृपः।
बृहद्वसोर्बृहद्विष्णुः पुत्रस्तस्य महाबलः।
बृहत्कर्मा सुतस्तस्य पुत्रस्तस्य बृहद्रथः॥
विश्वजित्तनयस्तस्य सेनजित्तस्यात्मजः।
अथ सेनजितः पुत्राश्चत्वारो लोकविश्रुताः॥
रुचिराश्वश्च काव्यश्च रामो दृढ़धनुस्तथा।
वत्सश्चावन्तको राजा यस्य ते परिवत्सराः॥
रुचिराश्वस्य दायादः पृथुषेणो महायशाः।

**अर्थ**—कुरुकुल को उत्पन्न करने या वहन वाली तीन पत्नियां थीं राजा अजमीढ़ की—नलिनी, केशिनी और श्रेष्ठ स्त्री धूमिनी। अजमीढ़ की पत्नी

केशिनी से कण्व (द्वितीय) उत्पन्न हुए। कण्व के पुत्र मेधातिथि थे, जिससे काण्वायन (द्वितीय) उत्पन्न हुए।

अजमीढ़ की द्वितीय पत्नी 'धूमिनी' से राजा बृहद्वसु उत्पन्न हुए। उसका महाबली पुत्र बृहद्विष्णु था। उसका पुत्र हुआ बृहत्कर्मा और उसका पुत्र हुआ बृहद्रथ। बृहद्रथ का पुत्र हुआ विश्वजित् और उसका पुत्र हुआ सेनजित्।

सेनजित् के चार संसारप्रसिद्ध पुत्र हुए—रुचिराश्व, काव्य, राम और दृढ़धनु।

**नीपवंशः—**

पृथुषेणस्य पारस्तु पारान्नीपोऽथ जज्ञिवान् ॥
यस्य चैकशतं चाऽऽसीत्पुत्राणामिति नः श्रुतम्।
नीपा इति समाख्याता राजानः सर्व एव ते ॥
तेषां वंशकरः श्रीमान्राजाऽऽसीत् कीर्तिवर्धनः।
काम्पिल्ये समरो नाम स चेष्टसमरोऽभवत् ॥
समरस्य परः पारः सदश्व इति त्रयः।
पुत्राः सर्वगुणोपेताः पारपुत्रो वृषुर्बभौ ॥
वृषोस्तु सुकृतिर्नाम सुकृतेनेह कर्मणा।
जज्ञे सर्वगुणोपेतो विभ्राजस्तस्य चात्मजः ॥
विभ्राजस्य तु दायादस्त्वणुहो नाम पार्थिवः।
बभूव शुकजामाता ऋत्वीभर्ता महायशाः ॥
अरणुहस्य तु दायादो ब्रह्मदत्तो महातपाः।
योगसूनुः सुतस्तस्य विष्वक्सेनोऽभवन्नृपः ॥
विभ्राजपुत्रा राजानः सुकृतेनेह कर्मणा ॥
विष्वक्सेनस्य पुत्रस्तु उदक्सेनो बभूव ह ॥
भल्लाटस्तस्य दायादो येन राजा पुरा हतः।
भल्लाटस्य दायादो राजाऽऽसीज्जनमेजयः ॥

अर्थ—रुचिराश्व का पुत्र हुआ यशस्वी पृथुषेण। उसका पुत्र हुआ पार और पार का पुत्र था 'नीप', इस नीप के एक सौ एक पुत्र थे, ऐसा इतिहासों में प्रसिद्ध है और वे सभी वंशज (और उनके वंशज) 'नीप क्षत्रिय' कहलाते थे। नीप के एक सौ एक पुत्रों में वंशप्रवर्तक या प्रधान राजा 'समर' था, जो सदा ही युद्ध के लिए सचेष्ट रहता था। उसकी राजधानी 'काम्पिल्य' नगर में थी।

'समर' के तीन पुत्र हुए—पर, पार (द्वितीय) और सदश्व। समर के पुत्र सर्वगुणसम्पन्न थे। पार का पुत्र था 'वृष' उसका पुत्र था सर्वगुणसम्पन्न सुकृति।

उसका पुत्र हुआ विभ्राज। विभ्राज का उत्तराधिकारी हुआ राजा अणुह। उसकी पुत्रियां किसी (अज्ञात) शुक की पत्नियां थीं।

अणुह का प्रसिद्ध पुत्र राजा ब्रह्मदत्त था। जो महायोगी और महातपस्वी था। योग के द्वारा ब्रह्मदत्त का पुत्र 'विष्वक्सेन' (महायोगी) उत्पन्न हुआ।

विष्वक्सेन का पुत्र उदक्सेन हुआ। उसका पुत्र राजा भल्लाट (=दुर्मुख पांचाल) हुआ जो युद्ध में (राधेय कर्ण के द्वारा) मारा गया। भल्लाट का पुत्र हुआ राजा जनमेजय दौर्मुखि।

(वायुपुराण अ० ३७)

**द्विजमीढ़वंशः**—

द्विजमीढ़स्य तु दायादो विद्वाञ्जज्ञे यवीनरः।
धृतिमांस्तस्य पुत्रस्तु तस्य सत्यधृतिः सुतः॥
अथ सत्यधृतेः पुत्रो दृढ़नेमिः प्रतापवान्।
दृढ़नेमिसुतश्चापि सुवर्मा नाम पार्थिवः॥
आसीत्सुवर्मणः पुत्रः सार्वभौमः प्रतापवान्।
सार्वभौम इति ख्यातः पृथिव्यामेकराट्बभौ॥
तस्याऽन्वये च महति महत्पौरवनन्दनः।
महत्पौरवपुत्रस्तु राजा रुक्मरथः स्मृतः॥
अथ रुक्मरथस्यापि सुपार्श्वो नाम पार्थिवः॥
सुपार्श्वतनयश्चापि सुमतिर्नाम धार्मिकः॥
सुमतेरपि धर्मात्मा राजा संनतिमान् प्रभुः।
तस्याऽऽसीत् संनतिर्नाम कृतस्तस्य सुतोऽभवत्।
शिष्यो हिरण्यनाभेस्तु कौथुमस्तस्य महात्मनः।
चतुर्विंशतिधा तेन प्रोक्तास्ताः सामसंहिताः॥
कातिरुग्रायुधः सोऽथ वीरः पौरवनन्दनः।
बभूव येन विक्रम्य पृषतस्य पितामहः।
नीलो नाम महाबाहुः पांचालाधिपतिर्हतः॥
उग्रायुधस्य दायादः क्षेमो नाम महायशाः।
क्षेमात्सुवीरः संजज्ञे सुवीरस्य नृपंजयः॥
नृपंजयाद्वीरध इत्येते पौरवाः स्मृताः॥

**अर्थ**—द्विजमीढ़ का पुत्र विद्वान् (ऋषि) राजा यवीनर था। उसका पुत्र धृतिमान् हुआ। धृतिमान् का पुत्र सत्यधृति था। उसका पुत्र था प्रतापी दृढ़नेमि। उसका पुत्र हुआ सुवर्मा। सुवर्मा का पुत्र हुआ 'सार्वभौम'। यह सार्वभौम पृथिवी का

एकछत्र शासक था। उसके वंश में 'महत्पौरव' नाम का राजा हुआ। उसका पुत्र रुक्मरथ था। रुक्मरथ का पुत्र सुपार्श्व नाम का राजा हुआ। सुपार्श्व का पुत्र धार्मिक राजा सुमति था। उसका पुत्र भी धार्मिक 'संनतिमान्' राजा था। उसका पुत्र हुआ संनति। संनति का पुत्र हुआ राजा कृत। जो हिरण्यनाभ शिष्य कौथुम का शिष्य था, जिसके शिष्यों ने २४ सामसंहितायें प्रवचन कीं।

कृत का पुत्र उग्रायुध कार्ति हुआ। वह पौरववंशी उग्रायुध महान् वीर था, जिसने आक्रमण करके पृषत (पांचाल) के पितामह राजा नील को मार डाला था।

उग्रायुध का उत्तराधिकारी यशस्वी राजा क्षेम हुआ। क्षेम का पुत्र था सुवीर और उसका पुत्र हुआ नृपंजय। नृपंजय का पुत्र हुआ 'वीरथ'। ये सभी पौरववंशीय राजा थे।

**पांचालवंशः—**

अजमीढ़स्य नीलिन्यां नीलः समभवन्नृपः।
नीलस्य तपसोग्रेण सुशान्तिरभ्यजायत॥
पुरुजानुः सुशान्तेस्तु ऋक्षस्तु पुरुजानुजः।
ततस्तु ऋक्षदायदो भेदाच्च तनयास्त्विमे॥
मुद्गलः सृंजयश्चैव राजा बृहदिषुस्तथा।
यवीयांश्चापि विक्रान्तः काम्पिल्यश्चैव पंचमः॥
अलं संरक्षणे तेषां पंचाला इति विश्रुताः।
मुद्गलस्यापि मौद्गल्याः क्षत्रोपेता द्विजातयः॥

**अर्थ**—अजमीढ़ की पत्नी नीलिनी से राजा नील उत्पन्न हुआ। नील की उग्र तपस्या के पश्चात् उसका पुत्र 'सुशान्ति' उत्पन्न हुआ। सुशान्ति का पुत्र पुरुजानु था और उसका पुत्र हुआ 'ऋक्ष'। उसका उत्तराधिकारी हुआ 'भेद'। उसके पांच पुत्र हुए—मुद्गल, सृंजय, बृहदिषु, यवीयान् और पराक्रमी पांचवां पुत्र काम्पिल्य।

ये पांचों पुत्र पांच राज्यों के रक्षण में समर्थ थे अतः बनका नाम 'पंचाल' हुआ। मुद्गल के वंशज मौद्गल्य क्षत्रोपेत ब्राह्मण हुए।

एते ह्यङ्गिरसः पक्षे संश्रिताः कण्वमुद्गलाः।
मुद्गलस्य सुतो ज्येष्ठो ब्रह्मिष्ठः सुमहायशाः॥
इन्द्रसेना यतो गर्भं बध्र्यश्वं प्रत्यपद्यत।
बध्र्यश्वान्मिथुनं जज्ञे मेनका इति नः श्रुतिः॥

दिवोदासश्च राजर्षिरहल्या च यशस्विनी ।
शारद्वतस्तु दायादमहल्या समसूयत ॥
शतानन्दमृषिश्रेष्ठं तस्याऽपि सुमहायशाः ।
पुत्रः सत्यधृतिर्नाम धनुर्वेदस्य पारगः ॥
अथ सत्यधृतेः शुक्रं दृष्ट्वाऽप्सरसमग्रतः ।
प्रचस्कन्दे शरस्तम्बे मिथुनं समपद्यत ॥
कृपया तच्च जग्राह शन्तनुर्मृगयां गतः ।
कृपः स्मृतः स वै तस्माद् गौतमी च कृपी तथा ॥
दिवोदासस्य दायादो ब्रह्मिष्ठो मित्रयुर्नृपः ।
मैत्रेयस्तु ततो जज्ञे स्मृता एतेऽपि संश्रिताः ॥
एतेऽपि संश्रिताः पक्षं क्षत्रोपेतास्तु भार्गवाः ।
राजाऽपि पिजवनो विद्वांस्ततोऽप्रतिरथोऽभवत् ।
अथ वै पिजवनाद्धीमान् सुदासः समपद्यत ।
सौदासः सहदेवश्च सोमकस्तस्य चात्मजः ॥
अजमीढः पुनर्जातः क्षीणे वंशे च सोमकः ।
सोमकस्य सुतो जन्तुर्हते तस्मिञ्शतं विभो ।
पुत्राणामजमीढस्य सोमकत्वे महात्मनः ।
तेषां यवीयान्पृषतो द्रुपदस्य पिताऽभवत् ।
धृष्टद्युम्नः सुतस्तस्य धृष्टकेतुश्च तत्सुतः ॥

(वायुपुराणे अ० ३७)

अर्थ कण्व (काण्व और मुद्गल (मौद्गल्य) आंगिरस पक्ष के ब्राह्मण थे ।

मुद्गल का ज्येष्ठ पुत्र वध्र्यश्व यशस्वी ब्रह्मिष्ठ (ऋषि) था, जिसको (नैषध नल की पुत्री और मुद्गल की पत्नी) 'इन्द्रसेना' ने उत्पन्न किया था ।

वध्र्यश्व से मेनका (अप्सरा) ने मिथुन (जुड़वा) सन्तान उत्पन्न की, यह इतिहास की प्रसिद्ध घटना थी- राजर्षि दिवोदास और यशस्वी अहल्या (मैत्रेयी)। अहल्या ने शारद्वत (गौतम) के पुत्र ऋषिश्रेष्ठ यशस्वी शतानन्द को उत्पन्न किया । उस (शतानन्द) का पुत्र सत्यधृति था जो धनुर्विद्या में पारंगत हुआ। अप्सरा को आगे देखकर उसका वीर्य शरस्तम्ब में गिर गया, उससे एक मिथुन सन्तति उत्पन्न हुई ! वन में मृगया के लिए गए हुए राजा शन्तनु ने कृपा करके उस मिथुन सन्तति को ग्रहण करके उसका पालन किया, पुत्र का नाम 'कृप' और गौतमी (शारद्वती) का नाम 'कृपा' हुआ ।

दिवोदास का उत्तराधिकारी 'मित्रयु' था, जो ब्रह्मिष्ठ (वेदज्ञ तथा ऋषि) राजा था। उसके अपत्य 'मैत्रेय'[1] कहलाये और उसके वंशज 'मैत्रेय ब्राह्मण' हुए, जिनका गोत्र भार्गव था अतः वे क्षत्रोपेत ब्राह्मण थे।

पांचाल पिजवन, मित्रयु का पुत्र था, जो ऋषि भी था, उसका पुत्र अप्रतिरथ हुआ। उसका पुत्र सुदास पैंजवन[2] हुआ, वह भी विद्वान् ऋषि था। सुदास का पुत्र सहदेव और उसका पुत्र सोमक था। (इसके पश्चात् पांचालों का प्रभुत्व दीर्घकाल तक पृषत तक लुप्त सा रहा।)

मानो सोमक के रूप में वंशप्रवर्तक अजमीढ़ ही उत्पन्न होगया। सोमक का पुत्र 'जन्तु' हुआ, उसके मरने पर उसके (सोमक के) सौ पुत्र हुए जो सोमक रूपी अजमीढ़ के पुत्र थे। उनमें सोमक वंशज (उत्तरकालीन) पृषत राजा था, जो द्रुपद का पिता था। द्रुपद का पुत्र धृष्टद्युम्न और उसका पुत्र हुआ धृष्टकेतु।

**(वायुपुराण अ० ३७)**

**कुरुवंशः—**

तस्यां वै धूम्रवर्णायामजमीढ़श्च वीर्यवान्।
ऋक्षं सा जनयामास धूम्रवर्णं सिताग्रजम्॥
ऋक्षात्संवरणो जज्ञे कुरुः संवरणादभूत्॥
यः प्रयागं पदाऽऽक्रम्य कुरुक्षेत्रं चकार ह।
कृष्ट्वैनं सुमहातेजा वर्षाणि सुबहून्यथ॥
तस्यान्वयजाः ख्याताः कुरवो नृपसत्तमाः।
कुरोस्तु दयिताः पुत्राः सुधन्वा जह्नुरेव च॥
परिक्षितो महाराज पुत्रकश्चारिमर्दनः।
सुधन्वनस्तु दायादः सुहोत्रो मतिमान् स्मृतः॥
च्यवनस्तस्य पुत्रस्तु राजा धर्मार्थकोविदः।
च्यवनस्य कृतः पुत्र इष्ट्वा यज्ञैर्महातपाः॥
विश्रुतं जनयामास पुत्रमिन्द्रसखं नृपः।
विद्योपरिचरं वीरं वसुं नामाऽन्तरिक्षगम्॥

× × ×

परीक्षितस्य दायादो बभूव जनमेजयः।
जनमेजयस्य पुत्रस्तु सुरथो नाम भूमिपः॥

---

(१) वस्तुतः 'अहल्या मैत्रेयी' मित्रयु की पुत्री और दिवोदास की पौत्री थी।
(२) सगरपुत्र पिजवन (पंचजन-पाठान्तर) का वंशज ऐक्ष्वाक सुदास पैजवन, उस दाशराज्ञ युद्ध का विजेता था, जिसका वर्णन ऋग्वेद में है।

सुरथस्य तु दायादो भीमसेनोऽपि नामतः ।।
जह्नुस्त्वजनयत्पुत्रं सुरथं नाम भूमिपम् ।
सुरथस्य तु दायादो वीरो राजा विदूरथः ।।
विदूरथसुतश्चापि सार्वभौम इति श्रुतिः ।
सार्वभौमाज्जयत्सेन आराधिस्तस्य चाऽऽत्मजः ।।
आराधितो महासत्व अभ्युतायुस्ततः स्मृतः ।
अक्रोधनोऽयुतायोस्तु तस्माद्देवातिथिः स्मृतः ।
देवातिथेस्तु दायाद ऋक्ष एव बभूव ह ।।
भीमसेनस्तथा ऋक्षाद्दिलीपस्तस्य चात्मजः ।।
दिलीपसूनुः प्रतीपस्तस्य पुत्रास्त्रयः स्मृताः ।
देवापिः शन्तनुश्चैव बह्लिकश्चैव ते त्रयः ।
बह्लिकस्तु विज्ञेयः सप्तबह्लीकेश्वरो नृपः ।
बह्लिकस्य सुतश्चैव सोमदत्तो महायशाः ।।
जज्ञिरे सोमदत्तात्तु भूरिर्भूरिश्रवाः शलः ।

अर्थ--महाबली अजमीढ़ ने अपनी तृतीय पत्नी धूम्रवर्णा से ऋक्ष नाम का ज्येष्ठ पुत्र उत्पन्न किया जो धूम्रवर्ण (कालारीछ के समान) था, जिसका पुत्र (अतः उसका नाम) ऋक्ष हुआ। ऋक्ष से संवरण उत्पन्न हुआ और संवरण का पुत्र 'कुरु' था। उसने प्रयाग तक पैदल ही आक्रमण किया और कुरुक्षेत्र बनाया। महातेजस्वी कुरु ने कुरुक्षेत्र का कर्षण किया। उसके वंशज राजागण 'कुरु' या 'कौरव' कहलाये। कुरु के प्रिय पुत्र थे सुधन्वा, जह्नु और परीक्षित्, जो शत्रुहन्ता था।

सुधन्वा का उत्तराधिकारी बुद्धिमान् राजा सुहोत्र हुआ। उसका पुत्र धर्मार्थकोविद च्यवन था। उसका पुत्र 'कृत', जिस महातपस्वी ने अनेक यज्ञ किये तब उसका पुत्र विश्वविख्यात इन्द्रसखा राजा विद्योपरिचरवसु था, जो आकाशचारी हुआ।

परीक्षित का उत्तराधिकारी जनमेजय हुआ। उसका पुत्र राजा सुरथ था। सुरथ का पुत्र राजा भीमसेन था।

जह्नु ने 'सुरथ' नाम के पुत्र को उत्पन्न किया, जो राजा बना। सुरथ का उत्तराधिकारी वीर राजा विदूरथ हुआ। विदूरथ का पुत्र इतिहास में 'सार्वभौम' नाम से विख्यात हुआ। सार्वभौम का पुत्र था आराधित, जो महाबली था। उसका पुत्र अभ्युतायु था। उसका पुत्र अक्रोधन था और उसका पुत्र हुआ देवातिथि। देवातिथि का उत्तराधिकारी 'ऋक्ष' था। ऋक्ष से भीमसेन नाम का राजपुत्र और उसका पुत्र था दिलीप। दिलीप का पुत्र था प्रतीप। उसके तीन

पुत्र हुए—देवापि, शन्तनु और वह्लिक। बह्लिक 'सप्तबह्लिक' देश का राजा हुआ। वह्लिक का पुत्र सोमदत्त हुआ। यशस्वी सोमदत्त के पुत्र थे—भूरि, भूरिश्रवा और शल।

देवापिस्तु प्रवव्राज वनं धर्मपरीप्सया।
उपाध्यायस्तु देवानां देवापिरभवन्मुनिः॥
च्यवनोऽस्य हि पुत्रस्तु इष्टकश्च महात्मनः।
शन्तनुस्त्वभवद्राजा विद्वान्वै महाभिषः।

× × ×

स तूपयेमे धर्मात्मा शन्तनुर्जाह्नवीं नृपः।
तस्यां देवव्रतं भीष्मं पुत्रं सोऽजनयत्प्रभुः॥
स च भीष्म इति ख्यातः पाण्डवानां पितामहः।
काली विचित्रवीर्यन्तु दासेय्यजनयत्सुतम्।
शन्तनोर्दयितं पुत्रं प्रजाहितकरं प्रभुम्॥
कृष्णद्वैपायनश्चैव क्षेत्रे वैचित्रवीर्यके॥
धृतराष्ट्रं पाण्डुं च विदुरं चाप्यजीजनत्।
धृतराष्ट्रात्तु गान्धारी पुत्राणां सुषुवे शतम्।

(वायुपुराणे अ० ३७)

**अर्थ**—धर्मप्राप्ति हेतु देवापि तो संन्यासी बनकर बन में चला गया। मुनि देवापि देवों (यज्ञ) का उपाध्याय (पुरोहित) हुआ। इसका पुत्र च्यवन हुआ और उसका पुत्र इष्टक (ऋष्टिषेण=आर्ष्टिषेण इषितसेन शुद्ध पाठान्तर) हुआ।

शन्तनु राजा हुआ, जो पूर्वजन्म राजा महाभिष था। शन्तनु ने जाह्नवी (गंगा) से विवाह किया। उनका पुत्र देवव्रत भीष्म हुआ। वही प्रख्यात भीष्म पाण्डवों के पितामह थे। दासेयी काली (सत्यवती) ने शन्तनु से विचित्रवीर्य को उत्पन्न किया। विचित्रवीर्य शन्तनु का प्रियपुत्र एवं प्रजा का हित करनेवाला था। विचित्रवीर्य के क्षेत्र (पत्नी) में कृष्णद्वैपायन पाराशर्य व्यास ने धृतराष्ट्र, पाण्डु और विदुर को उत्पन्न किया।

धृतराष्ट्र से गान्धारी ने सौ पुत्रों (कौरवों) को उत्पन्न किया।

**धार्तराष्ट्राः (शतं)**—(महा० आदिपर्व १।६७ अ०)

दुर्योधनो युयुत्सुश्च राजन् दुःशासनस्तथा।
दुःसहो दुःशलश्चैव दुर्मुखश्च तथापरः॥
विविंशतिर्विकर्णश्च जलसन्धः सुलोचनः।
विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः।

दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च ।
चित्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदश्च ह ॥
दुर्मदो दुष्प्रधर्षश्च विवित्सुर्विकटः समः ।
ऊर्णनाभः पद्मनाभस्तथा नन्दोपनन्दकौ ॥
सेनापतिः सुषेणश्च कुण्डोदरमहोदरौ ॥
चित्रबाहुश्चित्रवर्मा सुवर्मा दुर्विरोचनः ॥
अयोबाहुर्महाबाहुश्चित्रचापसुकुण्डलौ ।
भीमवेगो भीमबलो बलाकी भीमविक्रमौ ।
उग्रायुधो भीमशरः कनकायुर्दृढायुधः ।
दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः ।
जरासन्धो दृढसन्धः सत्यसन्धः सहस्रवाक् ॥
उग्रश्रवाः उग्रसेनः क्षेममूर्तिस्तथैव च ॥
अपराजितः पण्डितको विशालाक्षो दुराधनः ।
दृढहस्तः सुहस्तश्च वातवेगसुवर्चसौ ॥
आदित्यकेतुर्बह्वाशी नागदत्तानुयायिनौ ॥
कवची निषङ्गी दण्डी दण्डधारो धनुर्ग्रहः ।
उग्रो भीमरथो वीरौ वीरबाहुरलोलुपः ॥
अभयो रौद्रकर्मा च तथा दृढरथश्च यः ।
अनाधृष्टः कुण्डभेदी विरावी दीर्घलोचनः ।
दीर्घबाहुर्महाबाहुर्व्यूढोरुः कनकाङ्गदः ॥
कुण्डजश्चित्रकश्चैव दुःशला च शताधिका ।
वैश्यापुत्रो युयुत्सुश्च धार्तराष्ट्रः शताधिकः ॥
एतदेकशतं राजन् कन्या चैका प्रकीर्तिता ॥

(महाभारते १।६७)

**अर्थ**—धृतराष्ट्र के सौ पुत्र (कौरव)—दुर्योधन, युयुत्सु, दुःशासन, दुःसह, दुःशल, दुर्मुख, विविंशति, विकर्ण, जलसन्ध, सुलोचन, बिन्द, अनुबिन्द, दुर्घर्ष, सुबाहु, दुष्प्रधर्षण, दुर्मर्षण, दुर्मुख, दुष्कर्ण, कर्ण, चित्र, उपचित्र, चित्राक्ष, चारुचित्र, अंगद, दुर्मद, दुष्प्रधर्ष, विवत्सु, विकट, सम, ऊर्णनाभ, पद्मनाभ, नन्द, उपनन्दक, सेनापति, सुषेण, कुण्डोदर, महोदर, चित्रबाहु, चित्रवर्मा, सुवर्मा, दुर्विरोचन, अयोबाहु, महाबाहु, चित्रचाप, सुकुण्डल, भीमवेग, भीमबल, बलाकी, भीम, विक्रम, उग्रायुध, भीमशर, कनकायु, दृढ़ायुध, दृढ़वर्मा, दृढ़क्षत्र, सोमकीर्ति, अनूदर, जरासन्ध, दृढ़सन्ध, सत्यसन्ध, सहस्रवाक्, उग्रश्रवा, उग्रसेन, क्षेमपूर्ति

अपराजित, पण्डितक, विशालाक्ष, दुराधन, दृढ़हस्त, सुहस्त, वातवेग, सुवर्चस, आदित्यकेतु, बह्वाशी, नागदत्त, अनुयायी, कवची, निषङ्गी, दण्डी, दण्डधर, धनुर्ग्रह, भीमरथ, वीरबाहु, अलोलुप, अभय, रौद्रकर्मा, दृढ़रथ, अनाधृष्य, कुण्डभेदी, विरावी, दीर्घलोचन, दीर्घबाहु, महाबाहु, व्यूढोरु, कनकांगद, कुण्डज, चित्रक, दुःशला (कन्या) तथा वैश्यापुत्र युयुत्सु—एक सौ एक धार्तराष्ट्र तथा एक कन्या।

**पाण्डवसन्ततिः—**

माद्री राज्ञी पृथा चैव पाण्डोभार्ये बभूवतुः।
देवदत्ताः सुतास्ताभ्यां पाण्डोरर्थे विजज्ञिरे।
धर्माद्युधिष्ठिरो जज्ञे वायोर्जज्ञे वृकोदरः॥
इन्द्राद्धनंजयो जज्ञे शक्रतुल्यपराक्रमः।
अश्विभ्यां सहदेवश्च नकुलश्चापि माद्रिजौ॥
पंचैव पाण्डवेभ्यश्च द्रौपद्यां जज्ञिरे सुताः।
द्रौपद्यजनयज्ज्येष्ठं प्रतिविन्ध्यं युधिष्ठिरात्॥

(वायुपुराणे अ० ३७)

प्रतिविन्ध्यः सुतसोमः श्रुतकीर्तिस्तथापरः।
नाकुलिस्तु शतानीकः श्रुतसेनश्च वीर्यवान्॥

(महाभारते १।६७।१२८)

हिडिम्बा भीमसेनात्तु जज्ञे पुत्रं घटोत्कचम्।
काश्या पुनर्भीमसेनाज्जज्ञे सर्ववृकं सुतम्॥
सुहोत्रं विजया माद्री सहदेवादजायत।
करेणुमत्यां तु वैद्यायां निरमित्रस्तु नाकुलिः॥
सुभद्रायां रथी पार्थादभिमन्युरजायत।
उत्तरायान्तु वैराट्यां परिक्षिदभिमन्युजः॥
पारीक्षितस्तु दायदो राजाऽऽसीज्जनमेजयः॥

अर्थ—पाण्डु की दो पत्नियां थीं—माद्री और पृथा (कुन्ती), उनसे देवों द्वारा दिये पुत्र उत्पन्न हुए। धर्मराज से युधिष्ठिर, वायु से भीमसेन, इन्द्र से अर्जुन, जो इन्द्रतुल्य पराक्रमी था और अश्विनीकुमारों से सहदेव और नकुल माद्रीपुत्र उत्पन्न हुए।

पांच पाण्डवों से पांच द्रोपदीपुत्र उत्पन्न हुए। युधिष्ठिर द्वारा प्रतिविन्ध्य उत्पन्न हुआ।

प्रतिविन्ध्य, सुतसोम, श्रुतकीर्ति, शतानीक, नाकुलि और बलवान् श्रुतसेन।

हिडिम्बा ने भीमसेन से घटोत्कच को उत्पन्न किया। भीमसेन से ही

काशिराजपुत्री ने 'सर्ववृक' नाम का पुत्र उत्पन्न किया। मद्र राजकुमारी विजया ने सहदेव से सुहोत्र को, नकुल ने वैद्या करेणुमती से निरमित्र को और सुभद्रा ने अर्जुन से महारथी अभिमन्यु को उत्पन्न किया।

विराटराजपुत्री उत्तरा से अभिमन्यु ने परिक्षित् को उत्पन्न किया और परिक्षित् का उत्तराधिकारी राजा जनमेजय था।

**बृहद्रथवंश:—**

विद्योपरिचराज्जज्ञे गिरिका सप्त सूनवः।
महारथो मगधराड् विश्रुतो यो बृहद्रथः॥
प्रत्यग्रथः कुशश्चैव यमाहुर्मणिवाहनम्।
मावेल्लश्चललित्थश्च मत्स्यकालश्च सप्तमः॥
बृहद्रथस्य दायादः कुशाग्रो नाम विश्रुतः।
कुशाग्रस्यात्मजश्चैव ऋषभो नाम वीर्यवान्॥
ऋषभस्यापि दायादः पुष्पवान्नाम विश्रुतः।
विक्रान्तस्तस्य दायादो राजा सत्यहितः स्मृतः।
तस्य पुत्रः सुधन्वा च तस्मादूर्जः प्रतापवान्।
ऊर्जस्य नभसः पुत्रस्तस्माज्जज्ञे स वीर्यवान्।
शकले द्वे स वै जातो जरया सन्धितस्तु सः।
जरासन्धो महाबाहुर्जरया संधितस्तु सः॥

(वायुपुराणे अ० ३७)

अर्थ—गिरिका अप्सरा ने विद्योपरिचर राजा से सात पुत्रों को उत्पन्न किया—महारथी बृहद्रथ जो मगध का राजा हुआ, प्रत्यग्रथ, कुश, मणिवाहन, मावेल्ल, ललित्थ और मत्स्यकाल सातवां।

बृहद्रथ का उत्तराधिकारी पुत्र कुशाग्र हुआ, कुशाग्र का बलवान् पुत्र ऋषभ था, ऋषभ का उत्तराधिकारी पुष्पवान् नाम का विख्यात राजा था। उसका पुत्र विक्रान्त तथा उसका पुत्र सत्यहित हुआ। उसका पुत्र सुधन्वा और उसका प्रतापी पुत्र था ऊर्ज। इसका पुत्र हुआ नभस (बृहद्रथ द्वितीय मगध) नभस का महाबली पुत्र महाबाहु जरासन्ध, जो जरा राक्षसी द्वारा दो शकल (शरीर खण्डों) द्वारा जोड़े जाने पर जरासन्ध कहलाया।

### महाभारते—आदिपर्वणि

**ययातिवंशः—**

दश प्राचेतसः पुत्राः सन्तः पुण्यजनाः स्मृताः।
मुखजेनाग्निना यैस्ते पूर्वं दग्धा महीरुहाः॥

तेभ्यः प्राचेतसो जज्ञे दक्षाज्जाता इमाः प्रजाः ॥
सम्भूताः पुरुषव्याघ्र स हि लोकपितामहः ।
वीरिण्या सह संगम्य दक्षः प्राचेतसो मुनिः ॥
आत्मतुल्यानजनयत् सहस्रं संशितव्रतान् ॥
सहस्रसंख्यान् संभूतान् दक्षपुत्रांश्च नारदः ।
मोक्षमध्यापयामास सांख्यज्ञानमुत्तमम् ॥
ततः पञ्चाशतं कन्याः पुत्रिका अभिसंदधे ।
प्रजापतिः प्रजा दक्षः सिसृक्षुर्जनमेजय ॥
ददौ दश स धर्माय कश्यपाय त्रयोदश ।
कालस्य नमने युक्ताः सप्तविंशतिमिन्दवे ॥
त्रयोदशानां पत्नीनां या तु दाक्षायणी वरा ।
मारीचः कश्यपस्त्वस्यामादित्यान् समजीजनत् ।
इन्द्रादीन् वीर्यसम्पन्नान् विवस्वन्तमथापि च ।
विवस्वतः सुतो जज्ञे यमो वैवस्वतः प्रभुः ॥
मार्तण्डस्य मनुर्धीमानजायत सुतः प्रभुः ॥ (७५।४-१२)
धर्मात्मा स मनुर्धीमान् यत्र वंशः प्रतिष्ठितः ।
मनोर्वंशो मानवानां ततोऽयं प्रथितोऽभवत् ।
ब्रह्मक्षत्रादयस्तस्मान्मनोर्जातास्तु मानवाः ।
ततोऽभवन्महाराज ब्रह्म क्षत्रेण संगतम् ॥
ब्राह्मणा मानवास्तेषां साङ्गं वेदमधारयन् ।
वेनं धृष्णुं नरिष्यन्तं नाभागेक्ष्वाकुमेव च ।
कारुषमथ शर्यातिं तथा चैवाष्टमीमिलाम् ।
पृषध्रं नवमं प्राहुः क्षत्रधर्मपरायणम् ।
नाभागारिष्टदशमान् मनोः पुत्रान् प्रचक्षते ।
पञ्चाशत् तु मनोः पुत्रास्तथैवान्येऽभवन् क्षितौ ।
अन्योन्यभेदात् ते सर्वे विनेशुरिति नः श्रुतम् ॥
पुरूरवास्ततो विद्वानिलायां समपद्यत ।
सा वै तस्याभवन्माता पिता चैवेति नः श्रुतम् । (७५।१३-१९)

**अर्थ**—दश प्रचेता पुत्र पुण्य जन (पवित्र पुरुष) थे, उन्होंने अपने मुख से अग्नि निकालकर पेड़ों को जला दिया था। उन दश प्रचेताओं से एक प्राचेतस दक्ष उत्पन्न हुआ और दक्ष से विपुल प्रजा उत्पन्न हुई। हे पुरुषव्याघ्र वही दक्ष प्राचेतस लोकपितामह (ब्रह्मा) थे। दक्ष प्राचेतस मुनि ने वीरिणी से अपने समान

कठोरव्रतशील सहस्रपुत्रों को उत्पन्न किया। सहस्र उत्पन्न दक्ष पुत्रों को नारद ने मोक्ष शास्त्र पढ़ाया। वही सांख्यशास्त्र था। तब दक्ष प्रजापति ने पचास पुत्रिका कन्याओं का अभिसंधान किया। प्रजासृष्टि हेतु दक्ष ने दश कन्यायें धर्म (प्रजापति) और तेरह कन्यायें कश्यप को तथा कालगति की ज्ञापक सत्ताईस कन्यायें सोम को दी।

मारीच कश्यप की दाक्षायणी तेरह पत्नियां थीं। मारीच कश्यप ने अदिति से आदित्यों को जन्म दिया। इन्द्रादि तथा विवस्वान् आदि को उन्होंने उत्पन्न किया। विवस्वान् के यम और मनु वैवस्वत उत्पन्न हुए। उनमें मनु बुद्धिमान् और प्रभु पुत्र थे।

मनु धर्मात्मा थे और उन्हीं से मानव वंश की प्रतिष्ठा हुई। ब्रह्म क्षत्रादि मानव मनु से ही उत्पन्न हुए। ब्रह्म क्षत्र के साथ ही उत्पन्न हुआ। मानव (मनु वंशीय) ब्राह्मणों ने सांग बेद को धारण किया। मनु के पुत्र—वेन, धृष्णु, नरिष्यन्त, नाभाग, इक्ष्वाकु, करुष, शर्याति और अष्टमी इला तथा नवम पृषध्र था जो क्षत्रिय था। नाभागारिष्ट दशम पुत्र था। मनु के पचास पुत्र थे, जो वे परस्पर भेदभाव के कारण विनष्ट होगये। इला से पुरूरवा उत्पन्न हुआ वही उसकी माता और पिता भी थी, ऐसा इतिहास में प्रसिद्ध है।

षट् सुता जज्ञिरे चैलादायुर्धीमानमावसुः।
दृढ़ायुश्च वनायुश्च शतायुश्चोर्वशीसुताः॥
नहुषं वृद्धशर्माणं रजिं गयमनेनसम्।
स्वर्भानवीसुतानेतानायोः पुत्रान् प्रचक्षते। (१।७५।२४-२६)
यतिं ययातिं संयातिमायातिमयतिं ध्रुवम्।
नहुषो जनयामास षट् सुतान् प्रियवादिनः॥
यतिस्तु योगमास्थाय ब्रह्मभूतोऽभवन्मुनिः।
ययातिर्नाहुषः सम्राडासीत् सत्यपराक्रमः। (१।७५।३०-३२)
देवयान्यामजायेतां यदुस्तुर्वसुरेव च।
द्रुह्युश्चानुश्च पूरुश्च शर्मिष्ठायां च जज्ञिरे।३४।
ययातिः पूर्वजोऽस्माकं दशमो यः प्रजापतेः। (७६।१)

**अर्थ**—ऐल पुरूरवा से छः पुत्र—धीमान्, अमावसु, दृढ़ायु, वनायु और शतायु—उर्वशी के पुत्र हुए। आयु के पुत्र थे – नहुष, वृद्धशर्मा, रजि, गय और अनेना— ये स्वर्भानु (राहु) की पुत्री के पुत्र थे। नहुष के छः पुत्र हुए - यति, ययाति, संयाति, आयाति, अयति और ध्रुव। इनमें यति योग धारण करके ब्राह्मण मुनि होगया और सत्यपराक्रमी ययाति नाहुष सम्राट् हुआ। देवयानी ने यदु और तुर्वसु को उत्पन्न किया। शर्मिष्ठा से द्रुह्यु, अनु और पूरु उत्पन्न हुए।

(युधिष्ठिर कहते हैं) ययाति हमारे पूर्वज थे, जो प्रजापति प्रचेता से दशवें थे।

**पूरुवंशः—**

प्रवीरेश्वररौद्राश्वास्त्रयः पुत्रा महारथाः।
पूरोः पौष्ट्यामजायन्त प्रवीरो वंशकृत् ततः ।५।
मनस्युरभवन् तस्माच्छूरसेनीसुतः प्रभुः।
पृथिव्याश्चतुरन्ताया गोप्ता राजीवलोचनः ।६।
शक्तः संहननो वाग्मी सौवीरीतनयास्त्रयः।
मनस्योरभवन् पुत्राः शूराः सर्वे महारथाः ।७।
अन्वग्भानुप्रभृतयो मिश्रकेश्यां मनस्विनः।
रौद्राश्वस्य महेष्वासा दशाप्सरसि सूनवः ।८।
ऋचेयुरथ कक्षेयुः कृकणेयुश्च वीर्यवान्।
स्थण्डिलेयुर्वनेयुश्च जलेयुश्च महायशाः ।१०।
तेजेयुर्बलवान् धीमान् सत्येयुश्चेन्द्रविक्रमः।
धर्मेयुः संनतेयुश्च दशमो देवविक्रमः ।११।
अनाधृष्टिरभूत् तेषां विद्वान् भुवि तथैकराट्।
ऋचेयुरथ विक्रान्तो देवानामिव वासवः ।१२।
अनाधृष्टिसुतस्त्वासीद् राजसूयाश्वमेधकृत्।
मतिनार इति ख्यातो राजा परमधार्मिकः ।१३।
मतिनारसुता राजंश्चत्वारोऽमितविक्रमाः।

अर्थ—पुरु से पौष्टी से तीन पुत्र उत्पन्न हुए, जो महारथी थे—प्रवीर, ईश्वर और रौद्राश्व, इनमें प्रवीर वंशप्रवर्तक था। उसका पुत्र मनस्यु हुआ, जो शूरसेनी का पुत्र था, वह मनस्यु चतुःसमुद्रान्त पृथिवी का रक्षक था। मनस्यु के सौवीर कन्या से तीन शूरवीर और महारथीपुत्र उत्पन्न हुए—शक्र, संहनन और वाग्मी। रौद्राश्व के महारथी दशपुत्र मिश्रकेशी अप्सरा से उत्पन्न हुए—ऋचेयु, कक्षेयु, कृकणेयु, स्थण्डिलेयु, वनेयु, जलेयु, तेजेयु और बुद्धिमान् इन्द्रतुल्य पराक्रमी सत्येयु, धर्मेयु और सन्ततेयु—ये दशों ही देवों के तुल्य पराक्रमी थे। जिस प्रकार देवों में इन्द्र बड़ा बलवान् था, उसी प्रकार विद्वान् (ऋषि) अनाधृष्टि पृथिवी का एकछत्र सम्राट् था। अनाधृष्टि का पुत्र था मतिनार जो राजसूय और अश्वमेध कर्त्ता परमधार्मिक शासक था।

मतिनार के चार अतिपराक्रमी पुत्र थे—

तंसुर्महानतिरथो द्रुह्युश्चाप्रतिमद्युतिः ।१४।

तेषां तंसुर्महावीर्यः पौरवं वंशमुद्वहन् ।
आजहार यशो दीप्तं जिगाय च वसुन्धराम् ।१५।
ईलिनं तु सुतं तंसुर्जनयामास वीर्यवान् ।
सोऽपि कृत्स्नामिमां भूमिं विजिग्ये जयतां वरः ।१६।
रथन्तर्यां सुतान् पञ्च पञ्चभूतोपमांस्ततः ।
ईलिनो जनयामास दुष्यन्तप्रभृतीन् नृपान् ।१७।
दुष्यन्तं शूरभीमौ च प्रवसुं वसुमेव च ।
तेषां श्रेष्ठोऽभवद् राजा दुष्यन्तो जनमेजय ।१८।
दुष्यन्ताद् भरतो जज्ञे विद्वाञ्छाकुन्तलो नृपः ।
तस्माद् भरतवंशस्य विप्रतस्थे महद् यशः ।१९।
भरतस्तिसृषु स्त्रीषु नव पुत्रानजीजनत् ।
नाभ्यनन्दत तान् राजा नानुरूपा ममेत्युत ।२०।
ततस्तान् मातरः क्रुद्धाः पुत्रान् निन्युर्यमक्षयम् ।
ततस्तस्य नरेन्द्रस्य वितथं पुत्रजन्म तत् ।२१।
ततो महद्भिः क्रतुभिरीजानो भरतस्तदा ।
लेभे पुत्रं भरद्वाजाद् भूमन्युं नाम भारत ।२२।
ततो दिविरथो नाम भुमन्योरभवत् सुतः ।
सुहोत्रश्च सुहोता च सुहविः सयजुस्तथा ।२४।
पुष्करिण्यामृचीकस्य भूमन्योरभवन् सुताः ।
तेषां ज्येष्ठः सुहोत्रस्तु राज्यमाप महीक्षिताम् ।२५।
ऐक्ष्वाकी जनयामास सुहोत्रात् पृथिवीपते ।।
अजमीढं सुमीढं च पुरुमीढं च भारत ।३०।
अजमीढो वरस्तेषां तस्मिन् वंशः प्रतिष्ठितः ।
षट् पुत्रान् सोऽप्यजनयत् तिसृषु स्त्रीषु भारत ।३१।
ऋक्षं धूमिन्यथो नीली दुष्यन्तपरमेष्ठिनौ ।।
केशिन्यजनयज्जह्नुं सुतौ व्रजनरूपिणौ ।३२।
तथेमे सर्वपाञ्चाला दुष्यन्तपरमेष्ठिनाः ।।
अन्वयाः कुशिका राजन् जह्नोरमिततेजसः ।३३।
व्रजनरूपिणयोर्ज्येष्ठमृक्षमाहुर्जनाधिपम् ।
ऋक्षात् संवरणो जज्ञे राजन् वंशकरः सुतः ।३४।

अर्थ—तंसु महान् अतिरथी और द्रुह्यु अमितद्युति था । इनमें से तंसु बलशाली ने पौरव वंश का भार वहन किया अर्थात् उत्तराधिकारी बना । उसने

पृथिवी को जीतकर देदीप्यमान यश प्राप्त किया। तंसु ने अपने पुत्र ईलिन को उत्पन्न किया। उसने भी सम्पूर्ण पृथिवी को जीता। वह विजेताओं में श्रेष्ठतम था। उसने अपनी पत्नी रथन्तरी से पांच महाभूतों के तुल्य पांच दुष्यन्त आदि पुत्रों को उत्पन्न किया—दुष्यन्त, शूर, भीम, प्रवसु और वसु। उनमें ज्येष्ठ पुत्र राजा दुष्यन्त उत्तराधिकारी हुआ। दुष्यन्त से विद्वान् शाकुन्तल भरत उत्पन्न हुआ। उस (भरत) से भरतवंश का महान् यश प्रथित हुआ। भरत की तीन स्त्रियों से नौ पुत्र उत्पन्न हुए, परन्तु राजा भरत ने उनका अभिनन्दन नहीं किया क्योंकि उसने कहा—'ये मेरे अनुरूप नहीं हैं।' अतः उनकी माताओं ने उनको मार दिया। अतः भरत के पुत्रों का जन्म वितथ (बेकार) गया। तब भरत ने महान् यज्ञों का आयोजन किया और उसने भरद्वाज ऋषि द्वारा भुमन्यु नाम का पुत्र प्राप्त किया। तदनन्तर भुमन्यु से दिविरथ पुत्र उत्पन्न हुआ। तथा अन्य पुत्र थे—सुहोत्र, सुहोता, सुहवि और सयजु। पुष्करिणी पत्नी से ऋचीक ऋषि द्वारा (नियोग से) ये पुत्र उत्पन्न हुए। इनमें से ज्येष्ठपुत्र सुहोत्र था, जिसने पृथिवी का राज्य प्राप्त किया।

सुहोत्र ने ऐक्ष्वाकी (इक्ष्वाकुवंशीय) पत्नी से तीन पुत्र उत्पन्न किये—अजमीढ़, सुमीढ़ और पुरुमीढ़। इनमें अजमीढ़ ज्येष्ठ था, जिसमें वंश प्रतिष्ठित था। अजमीढ़ की पत्नी धूमिनी ने ऋक्ष को, नीली ने दुष्यन्त और परमेष्ठी को, केशिनी ने जह्नु, व्रजन और रूपी को उत्पन्न किया। सभी पंचाल दुष्यन्त और परमेष्ठी के वंशज थे। कुशिकगण अमित तेजस्वी जह्नु के वंशज थे। ऋक्ष—व्रजन और रूपी से ज्येष्ठ राजा था। ऋक्ष से संवरण उत्पन्न हुआ, जो वंश प्रवर्तक था।

ततः संवरणात् सौरी तपती सुषुवे कुरुम्।४८।
राजत्वे तं प्रजाः सर्वा धर्मज्ञ इति वव्रिरे।
तस्य नाम्नाभिविख्यातं पृथिव्यां कुरुजाङ्गलम्।४९।
कुरुक्षेत्रं स तपसा पुण्यं चक्रे महातपाः।
अश्ववन्तमभिष्यन्तं तथा चैत्ररथं मुनिम्।५०।
जनमेजयं च विख्यातं पुत्रांश्चास्यानुशुश्रुम।
पंचैतान् वाहिनी पुत्रान् व्यजायत मनस्विनी।५१।
अविक्षितः परिक्षित् तु शबलाश्वस्तु वीर्यवान्:
आदिराजो विराजश्च शाल्मलिश्च महाबलः।५२।
उच्चैःश्रवा भंगकारो जितारिश्चाष्टमः स्मृतः।
एतेषामन्ववाये तु ख्यातास्ते कर्मजैर्गुणैः।

जनमेजयादयः सप्त तथैवान्ये महारथाः ।५३।
परिक्षितोऽभवन् पुत्राः सर्वे धर्मार्थकोविदाः ।
कक्षसेनोग्रसेनौ तु चित्रसेनश्च वीर्यवान् ।५४।
इन्द्रसेनः सुषेणश्च भीमसेनश्च नामतः ।
जनमेजयस्य तनया भुवि ख्याता महाबलाः ।५५।
धृतराष्ट्रः प्रथमजः पाण्डुर्वाह्लीक एव च ।
निषधश्च महातेजास्तथा जाम्बूनदो बली ।५६।
कुण्डोदरः पदातिश्च वसातिश्चाष्टमः स्मृतः ।
धृतराष्ट्रोऽथ राजाऽऽसीत् तस्य पुत्रोऽथ कुण्डिकः ।
हस्ती वितर्कः क्राथश्च कुण्डिनश्चापि पंचमः ५८।
हविश्रवास्तेथेन्द्राभो भूमन्युश्चापराजितः ।
धृतराष्ट्रसुतानां तु त्रीनेतान् प्रथितान् भुवि ।५९।
प्रतीपं धर्मनेत्रं च सुनेत्रं चापि भारत ।
प्रतीपः प्रथितस्तेषां बभूवाप्रतिमो भुवि ।६०।
प्रतीपस्य त्रयः पुत्रा जज्ञिरे भरतवर्षभ ।
देवापिः शान्तनुश्चैव वाह्लीकश्च महारथः ।६१।
देवापि प्रवव्राज तेषां धर्महितेप्सया ।
शान्तनुश्च महीं लेभे वाह्लीकश्च महारथः ॥ (१।९४)

**अर्थ**—तदनन्तर संवरण से सौरी तपती ने कुरु को उत्पन्न किया। सभी प्रजा ने उसको धर्मज्ञ समझकर राजा बनाया। उसी के नाम से पृथिवी पर कुरुजांगल प्रख्यात हुआ। कुरु ने अपने तप द्वारा कुरुक्षेत्र को पवित्र कर दिया। उसके पुत्र थे –अश्ववान्, अभिष्यन्त, चैत्ररथ, मुनि और जनमेजय, जो विख्यात था। इन पांच पुत्रों को मनस्विनी वाहिनी ने उत्पन्न किया। इसी के कुल में अविक्षित्, परिक्षित् शबलाश्व, आदिराज, विराज, शाल्मलि, उच्चैःश्रवा, भंगकार, जितारि आठवां, ये सभी अपने गुणों से विख्यात हुए। जनमेजयादि सभी महारथी थे। ये सभी धर्म और अर्थ को जाननेवाले परिक्षित् के पुत्र थे। परिक्षित् के विख्यात महाबली पुत्र थे—कक्षसेन, उग्रसेन, चित्रसेन, इन्द्रसेन, सुषेण और भीमसेन। जनमेजय के पुत्र थे—धृतराष्ट्र (ज्येष्ठ) पाण्डु, वाह्लीक, निषध, बलवान् जाम्बूनद, कुण्डोदर, पदाति और वसाति।

धृतराष्ट्र राजा था और उसका पुत्र था कुण्डिक। अन्य पुत्र थे—हस्ती, वितर्क, क्राथ, कुण्डी पंचमपुत्र। धृतराष्ट्र के पृथिवी पर तीन विख्यात पुत्र थे—हविश्रवा, इन्द्राभ और भूमन्यु। प्रतीप, धर्मनेत्र और सुनेत्र—ये तीन विख्यात

धृतराष्ट्र के पुत्र थे। उनमें प्रतीप, अप्रतिम रूप से विख्यात था। प्रतीप के तीन पुत्र हुए--देवापि, शन्तनु और वाह्लीक। देवापि प्रव्रजित होगया, धर्म पालन के लिए शन्तनु और बाह्लिक राजा हुए।

## महाभारते आदिपर्वणि

**पुरुवंशः (पाठान्तरम्)—(अ० १।९५)**

पुरोस्तु भार्या कौसल्या नाम। तस्यामस्य जज्ञे जनमेजयो नाम, यस्त्रीनश्वमेधानाजहार, विश्वजिता चेष्ट्वा वनं विवेश।११।
जनमेजयः खल्वनन्तां नामोपयेमे माधवीम्। तस्याममस्य जज्ञे प्राचिन्वान्; यः प्राचीं दिशं जिगाय यावत् सूर्योदयात्, ततस्तस्य प्राचिन्वत्त्वम्।१२। प्राचिन्वान् खल्वश्मकीमुपयेमे यादवीम्। तस्यामस्य जज्ञे संयातिः।१३। संयाति, खलु दृषद्वतो दुहितरं वराङ्गीं नामोपयेमे। तस्यामस्य जज्ञे अहंयातिः। अहंयातिः खलु कृतवीर्यदुहितरमुपयेमे भानुमतीं नाम। तस्यामस्य जज्ञे सार्वभौमः।१५।

सार्वभौमः खलु जित्वा जहार कैकेयीं सुनन्दां नाम। तामप्युपयेमे। तस्यामस्य जज्ञे जयत्सेनो नाम।१६।

जयत्सेनो खलु वैदर्भीमुपयेमे सुश्रवां नाम।
तस्यामस्य जज्ञे अवाचीनः।१७।

अवाचीनोऽपि वैदर्भीमपरामेवोपयेमे मर्यादां नाम।
तस्यामस्य जज्ञे अरिहः।१८।

अरिहः खल्वाङ्गीमुपयेमे। तस्यामस्य जज्ञे महाभौमः।१९।

महाभौमः खलु प्रासेनजितीमुपयेमे सुयज्ञां नाम। तस्यामस्य जज्ञे अयुतायी; यः पुरुषमेधानामयुतमानयत्। तेन अस्यायुतायित्वम्।२०।

अयुतायी खलु पृथुश्रवसो दुहितरमुपयेमे कामां नाम।
तस्यामस्य जज्ञे अक्रोधनः।२१।

स खलु कालिङ्गीं करम्भां नामोपयेमे। तस्यामस्य जज्ञे देवातिथिः।२२।

देवातिथिः खलु वैदेहीमुपयेमे मर्यादां नाम। तस्यामस्य जज्ञे अरिहो नाम।२३।

अरिहः खल्वाङ्गेयीमुपयेमे सुदेवां नाम। तस्यां पुत्रमजीजनदृक्षम्।२४।

ऋक्षः खलु तक्षकदुहितरमुपयेमे ज्वालां नाम। तस्यां पुत्रं मतिनारं नामोत्पादयामास ।२५।

मतिनारः खलु सरस्वत्यां गुणसमन्वितं द्वादशवार्षिकं सत्रमाहरत्। समाप्ते च सत्रे सरस्वत्यभिगम्य तं भर्तारं वरयामास। तस्यां पुत्रमजीजनत् तंसुं नाम ।२६।

अत्रानुवंशश्लोको भवति—

तंसुं सरस्वती पुत्रं मतिनारादजीजनत्।
ईलिनं जनयामास कालिङ्ग्यां तंसुरात्मजम् ।२७।

ईलिनस्तु रथन्तर्यां दुष्यन्ताद्यान् पञ्च पुत्रानजीजनत् ।२८।

दुष्यन्तः खलु विश्वामित्रदुहितरं शकुन्तलां नामोपयेमे। तस्यामस्य जज्ञे भरतः ।२९।

भस्मा माता पितुः पुत्रो येन जातः स एव सः।
भरस्व पुत्रं दुष्यन्त मावमंस्थाः शकुन्तलाम् ।३०।
रेतोधाः पुत्रः उन्नयति नरदेव यमक्षयात्।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ।३१।

ततोऽस्य भरतत्वम्। भरतः खलु काशेयीमुपयेमे सार्वसेनीं सुनन्दां नाम। तस्यामस्य जज्ञे भूमन्युः ।३२।

भूमन्युः खलु दाशार्हीमुपयेमे विजयां नाम। तस्यामस्य जज्ञे सुहोत्रः ।३३।

सुहोत्रः खल्विक्ष्वाकुकन्यामुपयेमे सुवर्णां नाम। तस्यामस्य जज्ञे हस्ती य इदं हास्तिनपुरं स्थापयामास। एतदस्य हास्तिनपुरत्वम् ।३४।

हस्ती खलु त्रैगर्तीमुपयेमे यशोधरां नाम। तस्यामस्य जज्ञे विकुण्ठनो नाम ।३५।

विकुण्ठनः खलु दाशार्हीमुपयेमे सुदेवां नाम। तस्यामस्य जज्ञे अजमीढो नाम ।३६।

अजमीढस्य चतुर्विंशं पुत्रशतं बभूव कैकेय्यां गान्धार्यां विशालाया-मृक्षायां चेति। पृथक् पृथक् वंशधरा नृपतयः। तत्र वंशकरः संवरणः ।३७।

संवरणः खलु वैवस्वतीं तपतीं नामोपयेमे। तस्यामस्य जज्ञे कुरुः ।३८।

कुरुः खलु दाशार्हीमुपयेमे शुभाङ्गीं नाम। तस्यामस्य जज्ञे विदुरः ।३६।

विदुरस्तु माधवीमुपयेमे अमृतां नाम। तस्यामस्य जज्ञे परिक्षित् ।४१।

**अर्थ**–पुरु की भार्या कौसल्या थी। उससे पुरु ने अपने पुत्र जनमेजय को उत्पन्न किया जिसने तीन अश्वमेध यज्ञ किये तथा वह विश्वजित् यज्ञ करके वन में चला गया। जनमेजय ने माधवी (मधु की पुत्री) अनन्ता से विवाह किया। उससे प्राचीनवान् उत्पन्न हुआ। उसने प्राची दिशा के भूक्षेत्र को जीता, जहां से सूर्योदय होता है, यही उसके प्राचीनवान् नाम होने का कारण (रहस्य) था। प्राचीनवान् ने यादवी अश्मकी से विवाह किया। उससे संयाति उत्पन्न हुआ। संयाति ने दृषद्वान् (पर्वतक्षेत्र के राजा) की पुत्री वरांगी से विवाह किया। उससे उनका पुत्र अहंयाति उत्पन्न हुआ। अहंयाति ने कृतवीर्य की पुत्री भानुमती से विवाह किया। उनका पुत्र 'सार्वभौम' था।

सार्वभौम ने सुनन्दा कैकेयी को जीतकर अपहरण किया और उससे विवाह किया। उनसे जयत्सेन नाम का पुत्र उत्पन्न हुआ। जयत्सेन ने सुश्रवा वैदर्भी से विवाह किया। उसका पुत्र अवाचीन हुआ। अवाचीन ने अन्य वैदर्भी मर्यादा से विवाह किया, उनका पुत्र अरिह हुआ। अरिह ने अंग राजकुमारी से विवाह किया। उससे महाभौम उत्पन्न हुआ, महाभौम ने प्रसेनजित् की पुत्री सुयज्ञा से विवाह किया। उनका पुत्र अयुतायी हुआ। उसने दशसहस्र पुरुषमेध किये। इसलिए उसका नाम 'अयुतायी' हुआ। अयुतायी ने पृथुश्रवा की पुत्री कामा से विवाह किया। उनसे 'अक्रोधन नाम का पुत्र उत्पन्न हुआ। अक्रोधन ने कलिंग राजकुमारी करम्भा से विवाह किया। उससे देवातिथि पैदा हुआ। देवातिथि ने मर्यादा नाम की वैदेही से विवाह किया। उससे अरिह उत्पन्न हुआ। अरिह ने सुदेवा नाम्नी अंगराजकुमारी से विवाह किया। उनका पुत्र ऋक्ष हुआ। ऋक्ष ने तक्षकपुत्री ज्वला से विवाह किया। उसने मतिनार नाम के पुत्र को उत्पन्न किया। मतिनार ने सरस्वती तट पर गुणयुक्त द्वादशवार्षिक सत्र की समाप्ति पर सरस्वती उसके पास आई और पति के रूप में मतिनार का वरण किया। तब उसने तंसु नाम के पुत्र को उत्पन्न किया। इस सम्बन्ध में श्लोक (का अर्थ) है— 'मतिनार से सरस्वती ने पुत्र तंसु को उत्पन्न किया और तंसु ने कालिंगी (कलिंगराज पुत्री) से ईलिन (पुत्र) को उत्पन्न किया। ईलिन ने रथन्तर से दुष्यन्तादि पांच पुत्रों को उत्पन्न किया। दुष्यन्त ने विश्वामित्र पुत्री शकुन्तला से गान्धर्व विवाह किया। उनसे भरत उत्पन्न हुआ।' (इस सम्बन्ध में श्लोक प्रसिद्ध है) – 'माता भस्मा के समान है, पुत्र पिता का ही होता है उसी (पिता) का वह

होता है। हे दुष्यन्त ! पुत्र का पालन करो और शकुन्तला का अपमान मत करो। अपने वीर्य से उत्पन्न पुत्र हे नरदेव ! नरक से पिता को बचाता है। तुम ही इस गर्भ के धाता हो, शकुन्तला ने सत्य कहा है।" अतः यह 'भरत' (भरण-पोषण) का भरतत्व हुआ। भरत ने काशिराज की पुत्री सुनन्दा से विवाह किया जो सर्वसेन काशिराज की पुत्री थी। उससे भूमन्यु उत्पन्न हुआ। भूमन्यु ने दाशार्ही (दशार्ह राज की पुत्री) विजया से विवाह किया। उससे सुहोत्र उत्पन्न हुआ। सुहोत्र ने किसी ऐक्ष्वाक राजा की कन्या सुवर्णा से विवाह किया, उससे 'हस्ती' उत्पन्न हुआ। उसने हस्तिनापुर बसाया। यह उसका हस्तिनापुरत्व हुआ। उसकी पत्नी यशोधरा त्रैगर्ती थी। उसका पुत्र था विकुण्ठन। विकुण्ठन ने दाशार्ही सुदेवा से विवाह किया। उससे अजमीढ़ उत्पन्न हुआ। अजमीढ़ के १२४ पुत्र थे—कैकेयी, गान्धारी, विशाला, ऋक्षा इत्यादि से। वे पृथक्-पृथक् वंशों के प्रवर्तक थे। प्रमुख वंशकर संवरण था। संवरण ने वैवस्वती (सौरी—मित्र राजा की कन्या) तपती से विवाह किया। उसका पुत्र हुआ कुरु। कुरु का विवाह दाशार्ही शुभांगी से हुआ। उसका पुत्र विदूर (विदूरथ) था। विदूर ने माधवी अमृता से विवाह किया। उसका पुत्र परिक्षित् था।

परिक्षित् खलु बाहुदामुपयेमे सुयशां नाम। तस्यामस्य जज्ञे भीमसेनः।४२।

भीमसेनः खलु कैकेयीमुपयेमे कुमारीं नाम। तस्यामस्य जज्ञे प्रतिश्रवा नाम।४३।

प्रतिश्रवसः प्रतीपः खलु शैब्यामुपयेमे सुनन्दां नाम। तस्यां पुत्रानुत्पादयामास देवापिं शान्तनुं बाह्लीकं चेति।४४।

देवापिः खलु बाल एवारण्यं विवेश। शान्तनुस्तु महीपालो बभूव।४५। अत्रानुवंशश्लोको भवति—

यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते।
पुनर्युवा च भवति तस्मात् तं शान्तनुं विदुः॥
इति तदस्य शान्तनुत्वम्।४५।

शान्तनुः खलु गङ्गां भागीरथीमुपयेमे। तस्यामस्य जज्ञे देवव्रतो नाम; यमाहुर्भीष्ममिति।४७।

भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीं मातरमुदवाहयत्, यामाहुर्गन्धकालीति।४८।

तस्यां पूर्वं कानीनो गर्भः पराशराद् द्वैपायनोऽभवत्।

तस्यामेव शान्तनोरन्यौ द्वौ पुत्रौ बभुवतुः ।४६।

विचित्रवीर्यश्चित्राङ्गदश्च । तयोरप्राप्तयौवन एव चित्राङ्गदो गन्धर्वेण हतः । विचित्रवीर्यस्तु राजाऽऽसीत् ।५०।

विचित्रवीर्यः खलु कौसल्यात्मजे अम्बिकाम्बालिके काशिराजदुहितरावुपयेमे ।५१।

विचित्रवीर्यस्त्वनपत्य एव विदेहत्वं प्राप्तः । ततः सत्यवत्यचिन्तयन्मा दौष्यन्तो वंश उच्छेदं व्रजेदिति ।५२।

सा द्वैपायनमृषिं मनसा चिन्तयामास । स तस्याः पुरतः स्थितः किं करवाणीति ।५३।

सा तमुवाच—भ्राता तवानपत्य एव स्वर्यातो विचित्रवीर्यः । साध्वपत्यं तस्योत्पादयेति ।५४।

स तथेत्युक्त्वा त्रीन् पुत्रानुत्पादयामास; धृतराष्ट्रं, पाण्डुं विदुरं चेति ।५५।

तत्र धृतराष्ट्रस्य राज्ञः पुत्रशतं बभूव गान्धार्यां वरदानाद् द्वैपायनस्य ।५५।

**अर्थ**—परिक्षित् ने सुयशा बाहुदा से विवाह किया। उनका पुत्र भीमसेन था। भीमसेन ने 'कुमारी' नाम की कैकेयी से विवाह किया। उसका पुत्र था प्रतिश्रवा। प्रतिश्रवा का पुत्र था प्रतीप। उसका विवाह सुनन्दा शैब्या से हुआ। उसके पुत्र हुए—देवापि, शान्तनु और बाह्लीक। देवापि बाल्यकाल में ही अरण्य में प्रवेश कर गये। शान्तनु राजा हुए। अनुवंश श्लोक (अर्थ) है—"जिस जिस जीर्ण (वृद्ध) पुरुष को शान्तनु अपने हाथ से स्पर्श करते थे, वही पुरुष युवा हो जाता था, इसलिए वे शान्तनु कहलाये। यह उनके नाम की व्युत्पत्ति हुई। शान्तनु ने गंगा भागीरथी से विवाह किया। उसका पुत्र देवव्रत हुआ, जिसको 'भीष्म' कहते हैं। भीष्म ने अपने पिता का प्रिय करने के लिए पिता का विवाह सत्यवती से कराया, जिसको गन्धकाली (या मत्स्यगन्धा) कहते हैं। सत्यवती के कानीनपुत्र पराशर से कृष्णद्वैपायन व्यास थे। उससे शान्तनु के दो पुत्र हुए—चित्रांगद और विचित्रवीर्य। विचित्रवीर्य यौवनकाल से ही गन्धर्वराज द्वारा युद्ध में मारे गये। विचित्रवीर्य राजा हुए। विचित्रवीर्य ने कौसल्या की पुत्री और काशिराज की कन्यायें अम्बिका और अम्बालिका से विवाह किया। विचित्रवीर्य बिना पुत्र के ही मृत्यु को प्राप्त हुआ। तब सत्यवती ने सोचा कि कहीं यह भरतवंश उच्छिन्न न हो जाए। उसने (अपने पुत्र) द्वैपायन ऋषि का मन से

चिन्तन किया। वह माता के सामने उपस्थित होगये और बोले—"मैं आपकी क्या सेवा करूं?" वह बोली—"तुम्हारा भाई विचित्रवीर्य बिना पुत्र के ही स्वर्ग सिधार गया। तुम उसकी पत्नी से श्रेष्ठ पुत्र उत्पन्न करो।" कृष्णद्वैपायन ने कहा—"ठीक है", ऐसा कहकर तीन पुत्रों को उत्पन्न किया—धृतराष्ट्र, पाण्डु और विदुर।

गान्धारी से धृतराष्ट्र के सौ पुत्र हुए, कृष्णद्वैपायन के वरदान से।

तेषां धृतराष्ट्रस्य पुत्राणां चत्वारः प्रधाना बभूवुः। दुर्योधनो दुःशासनो विकर्णश्चित्रसेनेति।५७।

पाण्डोस्तु द्वे भार्ये बभूवतुः कुन्ती पृथा नाम माद्री च इत्युभे स्त्रीरत्ने।५८।

...सा तथोक्ता पुत्रानुत्पादयामास। धर्माद् युधिष्ठिरं मारुताद् भीमसेनं शक्रादर्जुनमिति।६१।

...माद्र्यामश्विभ्यां नकुलसहदेवावुत्पादितौ।६३।

...तत्र द्रौपदीं भार्यामविन्दन्। स्वविषयं चाभिजग्मुः।७४।

कुशलिनः पुत्रांश्चोत्पादयामासुः। प्रतिविन्ध्यं युधिष्ठिरः, सुतसोम वृकोदरः, श्रुतकीर्तिमर्जुनः, शतानीकं नकुलः, श्रुतकर्माणं सहदेव इति।७५।

युधिष्ठिरस्तु गोवासनस्य शैब्यस्य देविका नाम कन्यां स्वयंवरे लेभे। तस्यां पुत्रं जनयामास यौधेयं नाम।७६।

भीमसेनोऽपि काश्यां बलन्धरां नामोपयेमे वीर्यशुल्काम्। तस्यां पुत्रं सर्वगं नामोत्पादयामास।७७।

अर्जुनः खलु द्वारवतीं गत्वा भगिनीं वासुदेवस्य सुभद्रां भद्रभाषिणीं भार्यामुदवहत्। स्वविषयं चाभ्याजगाम कुशली। तस्यां पुत्रमभिमन्युमतीवगुणसम्पन्नं दयितं वासुदेवस्याजनयत्।७८।

नकुलस्तु चैद्यां करेणुमतीं नाम भार्यामुदावहत्। तस्यां पुत्रं निरमित्रं नामाजनयत्।७९।

सहदेवोऽपि माद्रीमेव स्वयंवरे विजयां नामोपयेमे मद्रराजस्य द्युतिमतो दुहितरम्। तस्यां पुत्रमजनयत् सुहोत्रं नाम।८०।

भीमसेनस्तु पूर्वमेव हिडिम्बायां राक्षसं घटोत्कचं पुत्रमुत्पादयामास।८१।

एत्यत एकादश पाण्डवानां पुत्राः। तेषां वंशकरोऽभिमन्युः।८२।

स विराटस्य दुहितरमुपयेमे उत्तरां नाम।८३।

परिक्षीणे कुले जातो भवत्वयं परिक्षिन्नामेति ।८४।
परिक्षित् खलु माद्रवतीं नामोपयेमे त्वन्मातरम्। तस्यां भवान् जनमेजयः ।८५।

अर्थ—धृतराष्ट्र के पुत्रों में चार प्रधान थे—दुर्योधन, दुःशासन, विकर्ण और चित्रसेन।

पाण्डु की दो पत्नियां थीं– पृथा कुन्ती और माद्री—दोनों ही स्त्रीरत्न थीं। कुन्ती ने (देवों से) पुत्रों को उत्पन्न किया—धर्मराज से युधिष्ठिर, वायुदेव से भीमसेन और इन्द्र से अर्जुन। माद्री ने अश्विनीकुमारों से नकुल और सहदेव को प्राप्त किया। पाण्डवों की पत्नी द्रौपदी थी। वे अपने राज्य में आये और कुशलतापूर्वक पुत्र उत्पन्न किये। युधिष्ठिर ने प्रतिविन्ध्य, भीमसेन ने सुतसोम, अर्जुन ने श्रुतकीर्ति, नकुल ने शतानीक और सहदेव ने श्रुतकर्मा द्रौपदी से उत्पन्न किये।

युधिष्ठिर ने गोवासन शैब्य की राजकन्या देविका को स्वयंवर में प्राप्त किया। उससे यौधेय नाम का पुत्र उत्पन्न किया। भीमसेन ने वीर्य (बल) के बदले काशेयी बलन्धरा को प्राप्त किया। उससे 'सर्वंग' नाम का पुत्र उत्पन्न किया। अर्जुन ने द्वारिका में जाकर प्रियभाषिणी सुभद्रा, जो वासुदेव कृष्ण की बहिन थी, से विवाह किया किया और कुशलतापूर्वक अपने राज्य में आगया। उससे अतिगुणसम्पन्न (बली) और वासुदेव के प्रिय अभिमन्यु पुत्र को उत्पन्न किया। नकुल ने चैद्यराजपुत्री करेणुमती से विवाह किया और उससे निरमित्र नाम का पुत्र उत्पन्न किया। सहदेव ने मद्रराजपुत्री विजया से स्वयंवर में विवाह किया। वह मद्रराज द्युतिमान् था। उससे सुहोत्र नाम का पुत्र उत्पन्न किया।

भीमसेन ने इनसे पूर्व हिडिम्बा राक्षसी से घटोत्कच नाम का पुत्र उत्पन्न किया। अतः पाण्डवों के ग्यारह (प्रधान) पुत्र थे। उनका वंशकर अभिमन्यु हुआ।

अभिमन्यु का विवाह विराट् की पुत्री उत्तरा से हुआ। परिक्षीण कुल में उसका पुत्र 'परिक्षित्' था। परिक्षित् ने आप (जनमेजय) की माता माद्रवती से विवाह किया, जिसके पुत्र आप जनमेजय हैं।

सौ धार्तराष्ट्रों में प्रमुख पुत्र—दुर्योधन, युयुत्सु, दुःशासन, दुःसह, दुःशल, जलसंधा, सम, विन्द, अनुविन्द, दुर्घर्ष, सुबाहु, दुष्प्रधर्षण, दुर्मर्षण, दुर्मुख, दुष्कर्ण, कर्ण, विविंशति, विकर्ण, शल, सत्त्व, सुलोचन, चित्र, उपचित्र, चित्राक्षा और चारुचित्र।

## महाभारत (गीताप्रेस वि० स० २०२६)

**जनमेजयभ्रातरः—**

जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते। तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति। (१।३।१)
एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामायोदस्तस्य शिष्यास्त्रयो बभूवुरुपमन्युरारुणिर्वेदश्चेति। (२।३।२१)
...एषा तस्यापि परीक्षा वेदस्य। (१।३।८०)
तस्यापि वसतस्त्रयः शिष्या बभूवुः। (१।३।८१)
...स कदाचिद् याज्ञकार्येणाभिप्रार्थित उत्तङ्कनामानं शिष्यं नियोजयामास। (१।३।८१)

**अर्थ**—परिक्षित् पुत्र जनमेजय भ्राताओं के साथ कुरुक्षेत्र में दीर्घसत्र कर रहा था। उसके तीन भाई थे—श्रुतसेन, उग्रसेन और भीमसेन।

इसी समय आयोद धौम्य नाम के ऋषि थे। उनके तीन शिष्य थे—उपमन्यु, आरुणि और वेद।...यह वेद की परीक्षा हुई। उसके आश्रम में भी उसके तीन शिष्य थे। वह किसी यज्ञ कार्य हेतु प्रस्थान कर गये और अपनी अनुपस्थिति में अपने शिष्य उत्तक को नियुक्त किया।

**उपरिचरवसुवंशः—**

राजोपरिचरो नाम धर्मनित्यो महीपतिः।१।
स चेदिविषयं रम्यं वसुः पौरवनन्दनः।२। (१।६३)
पुत्राश्चास्य महावीर्याः पञ्चासन्नमितौजसः।
नानाराज्येषु च सुतान् स सम्राडभ्यषेचयत्।
महारथो मागधानां विश्रुतो यो बृहद्रथः॥
प्रत्यग्रहः कुशाम्बुश्च यमाहुर्मणिवाहनम्॥
मावेल्लश्च यदुश्चैव राजन्यश्चापराजितः।
एते तस्य सुता राजन् राजर्षेर्भूरितेजसः।
न्यवासयन् नामभिः स्वैस्ते देशांश्च पुराणि च॥

**अर्थ**—राजा उपरिचर वसु धर्मात्मा थे। उनका राज्य सुन्दर चेदिदेश में था।

उनके महाबली और तेजस्वी पांच पुत्र थे, जिनको सम्राट् वसु ने विभिन्न राज्यों का राजा अभिषिक्त किया। मगध का राजा विख्यात बृहद्रथ को बनाया। अन्य राजा थे प्रत्यग्रह (प्रत्यग्रथ) कुशाम्बु, मणिवाहन, मावेल्ल और अपराजेय

यदु। राजर्षि उपरिचर वसु के ये तेजस्वी पुत्र थे, जिन्होंने अपने नाम से दश (जनपद) और नगर बसाये।

वासवाः पञ्च राजानः पृथग्वंशाश्च शाश्वताः।
वसन्तमिन्द्रप्रासादे आकाशे स्फटिके च तम्॥
उपतस्थुर्महात्मानं गन्धर्वाप्सरसो नृपम्।
राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम्॥
पुरोपवाहिनीं तस्या नदीं शुक्तिमतीं गिरिः।
गिरिं कोलाहलं तं तु पदा वसुरताडयत्॥
तस्यां नद्यामजनयन्मिथुनं पर्वतः स्वयम्॥
चकार पत्नीं कन्यां तु तथा तां गिरिकां नृपः।
(१।६३।३०-३४, ३५, ३७, ३९)

तत्राद्रिकेति विख्याता ब्रह्मशापाद् वराप्सराः।
उज्जह्रुरुदरात् तस्या स्त्री पुमांसं च मानुषम्।
स मत्स्यो नाम राजासीद् धार्मिकः सत्यसंगरः।
सा कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी।
सा तु सत्यवती नाम मत्स्यघात्यभिसंश्रयात्।
आसीत् सा मत्स्यगन्धैव कंचित् कालं शुचिस्मिता॥
(१।६३।५८, ६१, ६३, ६७, ६८, ६९)

**अर्थ**—इन्द्र के तुल्य या वसु के पुत्र वासव पांचों राजा पृथक्-पृथक् चिरकालिक वंशों के प्रवर्तक थे। स्फाटिक इन्द्रप्रासाद में वे आकाश में निवास करते थे। गन्धर्व और अप्सरायें उनकी सेवा में उपस्थित रहती थीं। इसलिए उनका नाम विख्यात होगया—'राजा उपरिचर वसु'। एक बार राजा उपरिचर वसु ने कोलाहल पर्वत को पाद प्रहार किया, जिससे शुक्तिमती नदी निकलती थी। उसके पाद प्रहार से नदी में पर्वत ने दो सन्तानें उत्पन्न कीं—कन्या गिरिका को राजा वसु ने अपनी पत्नी बनाया।

× × ×

किसी ब्रह्मर्षि के शाप से प्रख्यात श्रेष्ठ अप्सरा मर्त्यलोक में आगई। उसके उदर से एक स्त्री और एक पुरुष उत्पन्न हुआ। वह पुरुष मत्स्य नाम का मत्स्य देश का धार्मिक एवं सत्यवादी राजा हुआ तथा कन्या पुत्री मत्स्या मत्स्यगन्धा थी। वह सुन्दरी सत्यवती मत्स्यघात के कारण मत्स्यगन्धा नाम से भी प्रसिद्ध हुई।

**मरुत्तवंशः—**

आसीत् कृतयुगे तात मनुर्दण्डधरः प्रभुः।
प्रसन्धेरभवत् पुत्रः क्षुप इत्यभिविश्रुतः।२।
क्षुपस्य पुत्र इक्ष्वाकुर्महीपालोऽभवत् प्रभुः।३।
तस्य पुत्रशतं राजन्नासीत् परमधार्मिकम्।
तांस्तु सर्वान् महीपालानिक्ष्वाकुरकरोत् प्रभुः।४।
तेषां ज्येष्ठस्तु विंशोऽभूत् प्रतिमानो धनुष्मताम्।
विंशस्य पुत्र कल्याणो विविंशो नाम भारत।५।
विविंशस्य सुता राजन् बभूवुर्दश पंच च।६।
तेषां ज्येष्ठः खनीनेत्रः स तान् सर्वानपीडयत्।७।
तमपास्य च तद्राज्ये तस्य पुत्रं सुवर्चसम्।
अभ्यषिञ्चन्त राजेन्द्र मुदिता ह्यभवंस्तदा।६।
ततः प्रदध्मौ स करं प्रादुरासीत् ततो बलम्।१५।
एतस्मात् कारणाद् राजन् विश्रुतः स करन्धमः।१६।
तस्य कारन्धमः पुत्रस्त्रेतायुगमुखेऽभवत्।
अविक्षिन्नाम धर्मात्मा शौर्येणेन्द्रसमोऽभवत्।१६।
तस्य पुत्रोऽतिचक्राम पितरं गुणवत्तया।
मरुत्तो नाम धर्मज्ञश्चक्रवर्ती महायशाः।२३।

(महाभारते अश्वमेधपर्व अ० ४)

**अर्थ**—कृतयुग में राजा मनु वैवस्वत हुए। (उनका वंशज प्रसन्धि था)। प्रसन्धि का पुत्र 'क्षुप' नाम से विख्यात था। क्षुप का पुत्र राजा इक्ष्वाकु (द्वितीय) हुआ। उसके परमधार्मिक सौ पुत्र थे। उन सभी को इक्ष्वाकु ने विभिन्न प्रदेशों का राजा बनाया। उनमें ज्येष्ठ पुत्र 'विंश' नाम का राजा था जो वीरों में अप्रतिम था। विंश का पुत्र विविंश हुआ। विविंश के पन्द्रह पुत्र हुए। उनमें ज्येष्ठ 'खनीनेत्र' था, उसने अन्य भाइयों को पीड़ा दी, तब उसको हटाकर पिता विविंश ने खनीनेत्र के पुत्र सुवर्चा को राज्यसिंहासन पर अभिषिक्त किया, तब सभी प्रजाजन प्रसन्न हुए। उस सुवर्चा ने विशेष करों की घोषणा की जिससे उसके बल की वृद्धि हुई। इसलिए उसका दूसरा नाम 'करन्धम' विशेष प्रसिद्ध हुआ। उसका पुत्र 'कारन्धम' त्रेतायुगमुख में हुआ। जिसका नाम 'अविक्षित्' था, जो शौर्य में इन्द्र के समान था। गुणों में उसका पुत्र मरुत्त उसका अतिक्रमण कर गया, जो धर्मज्ञ, चक्रवर्ती और महायशस्वी था।

अथौघवान् नाम नृपो नृगस्यासीत् पितामहः।

तस्मौघवती कन्या पुत्रश्चौघरथोऽभवत् ।३८।
तामोघवान् ददौ तस्मै स्वयमोघवतीं सुताम् ।
सुदर्शनाय विदुषे भार्यार्थे देवरूपिणीम् ।३९।

**अर्थ**—उसी समय राजा नृग का पितामह 'ओघवान्' नाम का राजा था। उसकी पुत्री थी— 'औघवती' और पुत्र था औघरथ। राजा ओघवान् ने अपनी पुत्री औघवती अग्निपुत्र (आग्नेय) सुदर्शन को दे दी, जो देवरूपिणी उसकी पत्नी बनी।

**कुशिकवंशः (आजमीढ़ः)**—

भरतस्यान्वये चैवाजमीढ़ो नाम पार्थिवः ।२।
तस्य पुत्रो महानासीज्जह्नुर्नाम नरेश्वरः ।
दुहितत्वमनुप्राप्ता गङ्गा यस्य महात्मनः ।३।
तस्यात्मजस्तु सगुणः सिन्धुद्वीपो महायशाः ।
सिन्धुद्वीपाच्च राजर्षिर्बलाकाक्षो महाबलः ।४।
वल्लभस्तस्य तनयः साक्षाद्धर्म इवापरः ।
कुशिकस्तनयस्तस्य सहस्राक्षसमद्युतिः ।५।
कुशिकस्यात्मजः श्रीमान् गाधिर्नाम जनेश्वरः ।

(महा० अ० १३।अ० ४)

**अर्थ**—भरतवंश में राजा अजमीढ़ हुए। उनके एक पुत्र जह्नु नाम के राजा थे जिनकी कन्या गंगा नामवाली थी। उसका पुत्र उसके समान गुणों वाला यशस्वी सिन्धुद्वीप था। सिन्धुद्वीप का पुत्र महाबली राजर्षि बलाकाश्व हुआ। उसका पुत्र वल्लभ साक्षात् धर्मराज के समान था। उसका पुत्र इन्द्र के समान तेजस्वी 'कुशिक' था। कुशिक का पुत्र गाधि नाम का श्रेष्ठ राजा था।

**वैतहव्याः (वंशः)**—

मनोर्महात्मनस्तात प्रजा धर्मेण शासतः ।
बभूव पुत्रो धर्मात्मा शर्यातिरिति विश्रुतः ।६।
तस्यान्ववाये द्वौ राजन् राजानौ संबभूवतुः ।
हैहयस्तालजंघश्च वत्स्यश्च जयतां वरः ।७।
हैहयस्य च राजेन्द्र दशसु स्त्रीषु भारत ।
शतं बभूव पुत्राणां शूराणामनिवर्तिनाम् ।८। (१३।२०)

**अर्थ**—प्रजापति महापुरुष मनु के द्वारा धर्मपूर्वक शासन करते हुए उनका विख्यात पुत्र धर्मात्मा शर्याति हुआ। उसके वंश में दो राजा हुए—हैहय (अर्जुन) और तालजंघ। हैहय (अर्जुन) की दश स्त्रियों में सौ पुत्र हुए जो अति शूरवीर और युद्ध में डटे रहनेवाले थे।

**काशिवंशः—**

काशिष्वपि नृपो राजन् दिवोदास पितामहः ।
हर्यश्व इति विख्यातो बभूव जयतां वरः ।१०।
हर्यश्वस्य दायादः काशिराजोऽभ्यषिच्यत ।
सुदेवो देवसंकाशः साक्षाद् धर्म इवापरः ।१३।
सौदेवस्त्वथ काशीशो दिवोदासोऽभ्यषिच्यत ।१५।
वाराणसीं महातेजा निर्ममे शक्रशासनात् ।१६।
गङ्गाया उत्तरे कूले वप्रान्ते राजसत्तमः ।
गोमत्या दक्षिणे कूले शक्रस्येवामरावतीम् ।१८।

अर्थ—काशि वंश में दिवोदास का पितामह राजा 'हर्यश्व' नाम का विख्यात राजा हुआ। हर्यश्व का उत्तराधिकारी देवतुल्य एवं अपर धर्मराज के समान तेजस्वी काशिराज सुदेव था। सुदेव का पुत्र काशिराज दिवोदास काशी का राजा बना। इन्द्र की आज्ञा से उसने गंगा के उत्तर तटभूमि पर तथा गोमती के दक्षिण तट पर वाराणसी को अपनी राजधानी बनाया।

दिवोदासः पुरीं त्यक्त्वा पलायनपरोऽभवत् ।२२।
गत्वाऽऽश्रमपदं रम्यं भरद्वाजस्य धीमतः ।
जगाम शरणं राजा कृताञ्जलिररिंदम ।२३।
अथास्य तनयो जज्ञे प्रतर्दन इति श्रुतः ।३०।
भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः ।५७।
वीतहव्यो महाराज ब्रह्मवादित्वमेव च ।
तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः ।५८।
शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत् ॥
ऋग्वेदे वर्तते चाग्र्या श्रुतिर्यस्य महात्मनः ।५९।
पुत्रो गृत्समदस्यापि सुचेता अभवद् द्विजः ।
वर्चाः सुचेतसः पुत्रो विहव्यस्तस्य चात्मजः ।६१।
विहव्यस्य तु पुत्रस्तु वितत्यस्तस्य चात्मजः ।
वितत्यस्य सुतः सत्यः संतः सत्यस्य चात्मजः ।६२।
श्रवास्तस्य सुतश्चर्षिः श्रवसश्चाभवत् तमः ॥
तमसश्च प्रकाशोऽभूत् तनयो द्विजसत्तमः ।
प्रकाशस्य च वागिन्द्रो बभूव जयतां वरः ।६३।
तस्यात्मजश्च प्रमितिर्वेदवेदाङ्गपारगः ।
घृताच्यां तस्य पुत्रस्तु रुरुर्नामोदपद्यत ।६४।

प्रमद्वरायां तु रुरोः पुत्रः समुदपद्यत ।
शुनको नाम विप्रर्षिर्यस्य पुत्रोऽथ शौनकः ।६५।

(महा० १३।३०)

**अर्थ**—आक्रमण से दिवोदास वाराणसीपुरी छोड़कर पलायन कर गये । वे भागकर ऋषि भरद्वाज के आश्रम में गये और हाथ जोड़कर ऋषि की शरण ग्रहण की ।

दिवोदास पुत्र 'प्रतर्दन' इतिहास (श्रुति) में अति प्रसिद्ध हुआ ।

भृगु (भार्गव) ऋषि के वचन से वीतहव्य (हैहयवंशज) ब्रह्मर्षि (ब्राह्मण) होगया । वीतहव्य का पुत्र 'गृत्समद' रूप में इन्द्र के समान था । उसको इन्द्र समझकर दैत्य असुरों ने पकड़ लिया ।

ऋग्वेद (द्वितीय मण्डल) में उसकी श्रुति (मन्त्र) हैं । गृत्समद का पुत्र सुचेता हुआ । सुचेता का पुत्र हुआ वर्चा और उसका पुत्र विहव्य हुआ । विहव्य का पुत्र वितत्य हुआ । वितत्य का पुत्र सत्य और उसका पुत्र हुआ सन्त । सन्त का पुत्र था श्रवा और उसका पुत्र ऋषि तम हुआ । तम का पुत्र हुआ प्रकाश और उसका पुत्र हुआ वागिन्द्र उसका पुत्र था प्रमिति जो वेदवेदांग में पारंगत था । प्रमिति से घृताची द्वारा रुरु नाम का पुत्र उत्पन्न हुआ और रुरु द्वारा प्रमद्वरा से 'शुनक' नाम का पुत्र उत्पन्न हुआ, जिसके वंशज शौनक' कहलाये ।

## षष्ठोऽध्याय

# यदुवंशः

(वायुपुराण अ० ३२)

हैहयवंशः—

यदोः पुत्रा बभूवुर्हि पंच देवसुतोपमाः ।
सहस्रजिदथ श्रेष्ठः कोष्टुर्नीलो जितो लघुः ॥
सहस्रजित्सुतः श्रीमाञ्शतजिन्नाम पार्थिवः ।
शतजित्सुता विख्यातास्त्रयः परमधार्मिकाः ॥
हैहयश्च हयश्चैव राजा वेणुहयश्च यः ।
हैहयस्य तु दायादो धर्मतन्त्र इति श्रुतिः ॥
धर्मतन्त्रस्य कीर्तिस्तु संज्ञेयस्तस्य चाऽऽत्मजः ।
संज्ञेयस्य तु दायादो महिष्मान्नाम पार्थिवः ॥
आसीन्महीष्मतः पुत्रो भद्रश्रेण्यः प्रतापवान् ।
वाराणस्यधिपो राजा कथितः पूर्व एव हि ॥
भद्रश्रेण्यस्य दायादो दुर्दमो नाम पार्थिवः ।
दुर्दमस्य ततो धीमान्कनको नाम विश्रुतः ॥
कनकस्य तु दायादाश्चत्वारो लोकविश्रुताः ।
कृतवीर्यः कार्तिवीर्यः कृतवर्मा तथैव च ॥
कृतो जातश्चतुर्थोऽभूत्कृतवीर्यात्ततोऽर्जुनः ।
जज्ञे बाहुसहस्रेण सप्तद्वीपेश्वरो नृपः ॥

× × ×

तस्य पुत्रशतं ह्यासीत्पंच तत्र महारथाः ।
शूरश्च शूरसेनश्च वृष्ट्याद्यं वृष एव च ।
जयध्वजश्च वै पुत्रा अवन्तिषु विशाम्पते ॥
जयध्वजस्य पुत्रस्तु तालजङ्घः प्रतापवान् ॥
तस्य पुत्रशतं ह्येव तालजंघा इति श्रुतम् ।
तेषां पंचगणाः ख्याता हैहयानां महात्मनाम् ॥

वीतहोत्रा ह्यसंख्याता भोजाश्चावर्तयस्तथा ।
तुण्डिकेराश्च विक्रान्तास्तालजंघास्तथैव च ॥
वीतिहोत्रसुतश्चापि अनन्तो नाम पार्थिवः ।
दुर्जयस्तस्य पुत्रस्तु बभूवाऽमित्रदर्शनः ॥

**अर्थ**—यदु के पांच देवतुल्य पुत्र उत्पन्न हुए—ज्येष्ठपुत्र सहस्रजित्, क्रोष्टा, नील, जित और लघु ।

सहस्रजित् का पुत्र श्रीमान् शतजित् नाम का राजा हुआ। शतजित् के तीन परमधार्मिक पुत्र उत्पन्न हुए—हैहय, हय और वेणुहय । हैहय का उत्तराधिकारी धर्मतन्त्र राजा था। धर्मतन्त्र का पुत्र हुआ कीर्ति, और उसका पुत्र था संज्ञेय। संज्ञेय का पुत्र हुआ महिष्मान् राजा। महिष्मान् का पुत्र हुआ प्रतापी भद्रश्रेण्य, जो वाराणसी का शासक भी रहा, जैसाकि पूर्वकथित है। भद्रश्रेण्य का पुत्र हुआ राजा दुर्दम। दुर्दम का पुत्र विद्वान् कनक प्रसिद्ध राजा था। कनक के चार पुत्र हुए जो संसार में विख्यात थे—कृतवर्मा, कार्तिवीर्य, कृतवर्मा और कृतजात ।

कृतवीर्य का पुत्र अर्जुन हुआ, जिसके एकसहस्रबाहु थी तथा जो सम्पूर्ण पृथिवी (सप्तद्वीप) का सार्वभौम सम्राट् था। अर्जुन के सौ पुत्र थे, जिनमें पांच प्रधान महारथी हुए—शूर, शूरसेन, वृष्ट्याद्य, वृष और जयध्वज। जयध्वज के पुत्र अवन्ति के शासक हुए। जयध्वज का प्रधान पुत्र तालजंघ था, उसके सौ पुत्र (और वंशज भी) 'तालजंघ' नाम से इतिहास में प्रसिद्ध हुए।

महाबली हैहय क्षत्रियों के पांच गण विख्यात थे—वीतिहोत्र (असंख्य) भोज, आवर्ति (अवन्ति), तुण्डिकेर और पराक्रमी तालजंघ।

वीतिहोत्र का पुत्र अनन्त नाम का राजा था। उसका पुत्र हुआ दुर्जय और उसका पुत्र था अमित्रदर्शन ।

**क्रोष्टुवंशः**

क्रोष्टोः शृणुत राजर्षे वंशमुत्तमपुरुषम् ।
यस्याऽन्ववाये सम्भूतो वृष्णिर्वृष्णिकुलोद्वहः ॥
क्रोष्टोरेकोऽभवत्पुत्रो वृजिनीवान्महायशाः ।
वार्जिवतमिच्छन्ति स्वाहिं स्वाहावतां वरम् ॥
स्वाहेः पुत्रोऽभवद्राजा रुशद्रुर्ददतांवरः ।
सुतं प्रसूतमिच्छन्ति रुशद्रोरग्रचमात्मजम् ॥
महक्रतुभिरीजे स विविधैराप्तदक्षिणैः ।
चित्रैश्चित्ररथस्तस्य पुत्रकर्मभिरन्वितः ॥
एवं चित्ररथो वीरो यज्ञान्विपुलदक्षिणान् ।

शशबिन्दुः परं वृतो राजर्षीणमनुष्ठितः ॥
चक्रवर्ती महासत्त्वो महावीर्यो बहुप्रजः ।
तत्रानुवंशश्लोकोऽयं यस्मिन् गीतः पुराविदैः ॥
शशबिन्दोऽस्तु पुत्राणां शतानामभवच्छतम् ।
धीमतामनुरूपाणां भूरिद्रविणतेजसाम् ।
तेषां षट् च प्रधानास्तु पृथुसाह्वा महाबलाः ॥
पृथुश्रवाः पृथुयशाः पृथुधर्मा पृथुंजयः ।
पृथुकीर्तिः पृथुदन्तो राजानः शशबिन्दवः ।
शंसन्ति च पुराणानि पार्थश्रवसममन्तरम् ।
अन्तरः स पुरा यस्तु यज्ञस्य तनयोऽभवत् ।
उशना स तु धर्मात्मा अवाप्य पृथिवीमिमाम् ।
मरुतस्तस्य तनयो राजर्षीणामनुष्ठितः ॥
वीरः कम्बलबर्हिस्तु मरुत्ततनयः स्मृतः ।
पुत्रस्तु रुक्मकवचो विद्वान् कम्बलबर्हिषः ॥
राज्ञस्तु रुक्मकवचादपरावृत्य वीरहाः ।
जज्ञिरे पंच पुत्रास्तु महासत्त्वा महाबलाः ॥
रुक्मेषुः पृथुरुक्मश्च ज्यामघः हरिः···।

× × ×

**ज्यामघवंशः (विदर्भवंशः)—**

ज्यामघस्याऽभवद्भार्या शैव्या बलवती भृशम् ।
तस्य सा तपसोग्रेण शैव्या वैरां असूयत ।
पुत्रं विदर्भं सुभगा शैव्या परिणीता सती ।

**अर्थ**—अब राजर्षि क्रोष्टु के वंश का वर्णन सुनिये जो स्वयं एक उत्तम पुरुष थे तथा जिनके कुल में वृष्णिकुल नामक भगवान् कृष्ण ने जन्म लिया ।

क्रोष्टु का एकमात्र यशस्वी पुत्र हुआ वृजिनीवान् । वृजिनीवान् का पुत्र स्वाहि हुआ जो श्रेष्ठ यज्ञकर्त्ता था । स्वाहि का पुत्र महादानी रुशद्रु हुआ । वह रुशद्रु अपने कुल का अग्रणी पुत्र उत्पन्न करना चाहते थे, अतः अनेक महायज्ञों का अनुष्ठान करके पर्याप्त दक्षिणायें दीं । अतः उनका विचित्र कर्मों से युक्त पुत्र 'चित्ररथ' उत्पन्न हुआ । इसी प्रकार वीर राजा चित्ररथ ने विपुल दक्षिण यज्ञ किये तब 'शशबिन्दु' का जन्म हुआ ।

शशबिन्दु महाबली, विशाल शरीर और बहुत सन्तानों वाला महान् चक्रवर्ती सम्राट् था । उसके सम्बन्ध में अनुवंश (वंशसम्बन्धी) यह श्लोक पुराण

(इतिहास) में गाया जाता है। पुरातत्ववेत्ताओं द्वारा—"शशबिन्दु के सौ पुत्रों में प्रत्येक के सौ पुत्र उत्पन्न हुए जो सभी विद्वान् और रूप तथा धन और तेज से सम्पन्न थे। उनमें से छः अति प्रधान थे, जिनके नाम के आगे 'पृथु' (विशेषण) शब्द लगा हुआ था—यथा—पृथुश्रवा, पृथुयशा, पृथुधर्मा, पृथुंजय, पृथुकीर्ति और पृथुदान्त—ये सभी शशबिन्दु के पुत्र राजा थे। पुराणज्ञ शशबिन्दु के पश्चात् पृथुश्रवा को उसके पश्चात् यज्ञपुत्र पार्थश्रवस उशना को राजा वर्णन करते हैं। धर्मात्मा उशना ने इस पृथिवी का राज्य प्राप्त करके तदनन्तर राजर्षियों द्वारा सेवित मरुत्त को अपना पुत्र बनाया। उसका पुत्र कम्बलबर्हि विद्वान् (ऋषि) राजा था। उसका पुत्र रुक्मकवच हुआ। राजा रुक्मकवच से पांच वीर पुत्र उत्पन्न हुए जो विशाल शरीर और महाबली थे—रुक्मेषु, पृथुरुक्म, ज्यामघ हरि और ।

विदर्भवंश—ज्यामघ की बलवती पत्नी शैव्या थी। उसके उग्र तप द्वारा शैव्या ने पुत्र विदर्भ को उत्पन्न किया। सौभाग्यवती शैव्या ने (पति द्वारा अपहृत कन्या से) पुत्र विदर्भ का विवाह कराया।

राजपुत्रौ तु विद्वांसौ स्नुषायां क्रथकौशिकौ।
पुत्रो विदर्भोऽजनयच्छूरौ रणविशारदौ।
लोमपादं तृतीयन्तु पश्चाज्जज्ञे सुधार्मिकम्।
लोमपादात्मजो वस्तुराहृतिस्तस्य चात्मजः।
कौशिकस्य चिदिः पुत्रस्तस्माच्चैद्या नृपाः स्मृताः।
क्रथो विदर्भपुत्रस्तु कुन्तिस्तस्यात्मजोऽभवत्॥
कुन्तेर्धृष्टसुतो जज्ञे पुरो धृष्टः प्रतापवान्।
धृष्टस्य पुत्रो धर्मात्मा निर्वृतिः परवीरहा।
तस्य पुत्रो दशार्हस्तु महाबलपराक्रमः।
दशार्हस्य सुतो व्योमा ततो जीमूत उच्यते।
जीमूतपुत्रो विकृतिस्तस्य भीमरथः सुतः।
अथ भीमरथस्याऽऽसीत्पुत्रो रथवरः किल॥
तस्य पुत्रो नवरथस्ततो दशरथः स्मृतः।
तस्य चैकादशरथः शकुनिस्तस्य चात्मजः।
तस्मात्करम्भको धन्वी देवरातोऽभवत्ततः।
देवक्षत्रोऽभवद्राजा देवरातिर्महायशाः।
देवक्षत्रसुतो जज्ञे देवनः क्षत्रनन्दनः॥
देवनात्स मधुर्जज्ञे यस्य मेधार्थसम्भवः।

मधोश्चापि महातेजा मनुर्मनुवशस्तथा ॥
नन्दनश्च महातेजा महापुरुवशस्तथा ।
आसीत्पुरुवशात्पुत्रः पुरुद्वान्पुरुषोत्तमः ॥
जज्ञे पुरुद्वतः पुत्रो भद्रवत्यां पुरूद्वहः ।
ऐक्ष्वाकी त्वभवद्भार्या सत्त्वस्तस्यामजायत ॥
सत्त्वात्सत्त्वगुणोपेतः सत्त्वतः कीर्तिवर्धनः ।

**अर्थ**—जीमूत की पुत्रवधू से विदर्भ ने दो विद्वान् (राजर्षि) पुत्र उत्पन्न किये—'क्रथ' और 'कौशिक' जो महान् वीर और रणकुशल हुए। विदर्भ का तृतीय पुत्र लोमपाद हुआ जो अत्यन्त धार्मिक था। लोमपाद का पुत्र वस्तु और उसका पुत्र आहृति था।

कैशिक का पुत्र 'चिदि' हुआ, जिसके वंशज 'चैद्य' क्षत्रिय हुए। विदर्भपुत्र क्रथ का पुत्र 'कुन्ति' हुआ। कुन्ति का पुत्र था 'धृष्ट' जो युद्ध में प्रतापी और धृष्ट था। धृष्ट का पुत्र शत्रुहन्ता, धर्मात्मा राजा निर्वृत्ति था। उसका पुत्र 'दशार्ह' बड़ा महाबली और पराक्रमी था। दशार्ह का पुत्र हुआ व्योम और उसका पुत्र 'जीमूत' (द्वितीय) हुआ। जीमूत का पुत्र विकृति तथा उसका पुत्र भीमरथ था। भीमरथ का पुत्र था 'रथवर' और उसका पुत्र हुआ नवरथ और इसका पुत्र था दशरथ, उसका पुत्र एकादशरथ और उसका पुत्र शकुनि हुआ। उसका पुत्र धनुर्धर और करम्भक था और उसका पुत्र देवरात हुआ। देवरात का पुत्र महा-यशस्वी देवक्षत्र हुआ। देवक्षत्र का पुत्र था देवन, जो क्षत्रियों को आनन्द देने वाला था।

देवन का पुत्र 'मधु' था और उसका पुत्र मेधार्थसम्भव, महातेजस्वी मनु, मनुवश, नन्दन और महापुरुवश थे। महापुरुवश का पुत्र पुरुद्वान् हुआ। पुरुद्वान् का पुत्र भद्रवती से पुरुद्वह हुआ, उसकी पत्नी ऐक्ष्वाक वंश की कन्या थी। इसका पुत्र 'सत्वत'। यह 'सत्वत' सत्त्वगुण से सम्पन्न सात्विकी कीर्ति को बढ़ानेवाला हुआ।

### हरिवंश १।अ० ३७–३८

**सात्वतवंशः**—

बभूव माधवसुतः सत्वतो नाम वीर्यवान् ।
सत्त्ववृत्तिर्गुणोपेतो राजा राजगुणे स्थितः ।
सत्वतस्य सुतो राजा भीमो नाम महानभूत् ।
ये भैमाः सुसंवृताः सत्त्वतात् सात्त्वता स्मृताः ॥
राज्ये स्थिते नृपे तस्मिन् रामे राज्यं प्रशासति ।

शत्रुघ्नो लवणं हत्वा चिच्छेद स मधोर्वनम् ।।
तस्मिन् मधुवने स्थाने पुरीं च मथुरामिमाम् ।
निवेशयामास विभुः सुमित्रानन्दवर्धनः ।।
पर्यये चैव रामस्य भरतस्य तथैव च ।
सुमित्रासुतयोश्चैव स्थानं प्राप्तं च वैष्णवम् ।।
भीमेनेयं पुरी तेन राज्यसम्बन्धकारणात् ।
स्ववशे स्थापिता पूर्वं स्वयमध्यासिता तथा ।।
ततः कुशे स्थिते राज्ये लवे तु युवराजनि ।
अन्धको नाम भीमस्य सुतो राज्यमकारयत् ।।
अन्धकस्य सुतो जज्ञे रेवतो नाम पार्थिवः ।
ऋक्षोऽपि रेवताज्जज्ञे रम्ये पर्वतमूर्धनि ।।
रैवतस्यात्मजो राजा विश्वगर्भो महायशाः ।
बभूव पृथिवीपालः पृथिव्यां प्रथितः प्रभुः ।।
तस्य तिसृषु भार्यासु दिव्यरूपासु केशव ।
चत्वारो जज्ञिरे पुत्रा लोकपालोपमाः शुभाः ।।
वसुर्बभ्रुः सुषेणश्च सभाक्षश्चैव वीर्यवान् ।
यदुप्रवीराः प्रख्याता लोकपाला इवापरे ।।
तैरियं यादवो वंशः पार्थिवैर्बहुलीकृतः ।।

**अर्थ**—माधव का पुत्र 'सत्वत' हुआ जो बड़ा बलवान् और सर्वगुणों से सम्पन्न था। उसमें सभी राजगुण भी थे।

सत्वत का पुत्र भीम नाम का महान् राजा हुआ। इसी के नाम से भैम नाम के क्षत्रिय (यादव) और सत्वत से सात्वत क्षत्रिय प्रख्यात हुए। इसी भीम (सात्वत) के समय में रामदशरथि का राज्य चल रहा था। इसी समय शत्रुघ्न (दाशरथि) ने लवणासुर को मारकर मधुवन को नष्ट कर दिया तथा मधुवन में मथुरापुरी बसाई (वस्तुतः प्राचीन मधुपुरी-मथुरा) का शत्रुघ्न ने नवीकरण किया, मधु के नाम से नगरी पहिले ही बसी हुई थी। इसी युग में राम, भरत, लक्ष्मण और शत्रुघ्न ने जब वैष्णव पद को प्राप्त किया, तभी भीमसेन सात्वत ने अपने पूर्वराज्य पर पुनः कब्जा कर लिया। कुश के राज्यकाल और लव के यौवराज्यकाल में भीम के पुत्र अन्धक ने राज्य किया। अन्धक का पुत्र राजा रेवत हुआ। रेवत का एक पुत्र ऋक्ष रम्य पर्वत शिखर पर हुआ, जिसका नाम विश्वगर्भा था, जो पृथिवी पर यशस्वी राजा हुआ। उसकी दिव्यरूप वाली तीन पत्नियों से चार लोकपालों के समान शुभलक्षणयुक्त श्रेष्ठ और बलवान् चार पुत्र उत्पन्न

हुए—वसु, बभ्रु, सुषेण और सभाक्ष। ये चारों ही यादववीर चार लोकपालों के समान प्रख्यात थे। इनके द्वारा पृथिवी पर यादव वंश का बहुत विस्तार हुआ।

## वायुपुराण अ० ३४

**सात्वतवंशस्य विस्तारः—**

सात्वती रूपसम्पन्ना कौशल्या सुषुवे सुतान्।
अजिनं भजमानं च दिव्यं देवावृधं नृपम्॥
अन्धकं च महाभोजं वृष्णिं च यदुनन्दनम्॥
तेषां हि सर्गाश्चत्वारः शृणुध्वं विस्तरेण वै।

अर्थ—रूपसम्पन्न सत्वतपत्नी कोसल्या (कोसल देश की राजकुमारी) ने इन पुत्रों को उत्पन्न किया—भजी, भजमान, दिव्य देवावृध, अन्धक, महाभोज और यादव वृष्णि। उनके चार वंशों को विस्तार से सुनिये।

**भजमानवंशः—**

भजमानस्य सृंजय्यां बाह्यश्च परिबाह्यकः।
सृंजयस्य सुते द्वे तु बाह्यकस्ते उदावहत्।
तस्य भार्ये भगिन्यौ ते प्रसूतेति सुतान्बहून्॥
निमिश्च पणवश्चैव वृष्णिः परपुरंजयः॥
ये बाह्यकार्यसृंजय्यां भजमानाद्विजज्ञिरे।
अयुतायुः सहस्रजिदथ······वामकः।
बाह्यकार्यभगिन्यां ये भजमानाद्विजज्ञिरे।
तेषां देवावृधो राजा चकार परमं तपः॥
पुत्रं सर्वगुणोपेतं यथा देवावृधेप्सितः।
तत्र वंशे पुराणज्ञा गाथां गायन्ति वै द्विजाः।
बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः।
पुरुषाः पञ्चषष्टिश्च सहस्राणि च सप्ततिः।
येऽमृतत्वमनुप्राप्ता बभ्रुदेवावृधादपि॥

अर्थ—भजमान ने सृंजयराजकुमारी सृंजयी से बाह्य और परिबाह्यक पुत्र हुए। सृंजय वंश के (किसी अन्य) राजा की दो पुत्रियां थीं। उनका विवाह बाह्यक के साथ हुआ, उन दोनों भगिनियों ने, जो बाह्यक की पत्नियां थीं, बहुत से पुत्रों को उत्पन्न किया। उनमें से कुछ पुत्रों के नाम थे—निमि पणव, वृष्णि-शत्रुविजेता। बाह्यक ने आर्यसृंजयी से ये पुत्र उत्पन्न किये—अयुतायु, सहस्रजित् और वामक। बाह्यक ने आर्याभगिनी से जो भजमानवंशज उत्पन्न हुए उनमें देवावृध ने महान् तप किया, उसने अपना इष्टपुत्र, जो सर्वगुण सम्पन्न था, उसके

सम्बन्ध में पुराणज्ञ (इतिहासविद्) ब्राह्मण यह गाथा गाते हैं—बभ्रु मनुष्यों में श्रेष्ठ है जो देवों ने देवावृध (पिता) के समान किया। उसके साथ पैंसठ हजार और सत्तर पुरुषों ने अमरपद प्राप्त किया—बभ्रु देवावृध के समान।

**वृष्णिवंशः—**

गान्धारी चैव माद्री च वृष्णेर्भार्ये बभूवतुः।
गान्धारी जनयामास सुमित्रं मित्रनन्दनम्।
माद्री युधाजितं पुत्रं सा तु वै देवमीढुषम्॥
अनमित्रं सुतं चैव तावुभौ पुरुषोत्तमौ।
अनमित्रसुतो निघ्नो निघ्नस्य द्वौ बभुवतुः।
प्रसेनश्च महाभागः शक्रजिच्च सुतावुभौ॥
तस्य सत्राजितः सूर्यसखा प्राणसमोऽभवत्॥

× × ×

अनमित्राच्छिनिर्जज्ञे कनिष्ठाद् वृष्णिनन्दनात्।
सत्यवाक् सत्यसम्पन्नः सत्यकस्तस्य चात्मजः॥
सात्यकिर्युयुधानश्च तस्य भूतिः सुतोऽभवत्॥

**अर्थ**—वृष्णि की दो पत्नियां थीं—गान्धारी और माद्री। गान्धारी ने मित्रों को आनन्द देने वाले पुत्र सुमित्र को उत्पन्न किया। माद्री ने युधाजित् और देवमीढुष को उत्पन्न किया। एक अन्य पुत्र अनमित्र था, दोनों ही पुरुषोत्तम (श्रेष्ठ पुरुष) थे। अनमित्र का पुत्र था निघ्न। निघ्न के दो पुत्र हुए—महाभाग प्रसेन और शक्रजित्। प्रसेन का पुत्र था सत्राजित् जो सूर्यसखा और उनके प्राण के समान था।

कनिष्ठ वृष्णिपुत्र अनमित्र से शिनि उत्पन्न हुआ और उसका पुत्र सत्य सम्पन्न सत्यवादी सत्यक हुआ। सत्यक का पुत्र था युयुधान सात्यकि और उसका पुत्र भूति हुआ।

भूतेर्युगन्धरः पुत्र इति भौत्याः प्रकीर्तिताः॥
माद्र्या सुतस्य जज्ञे तु सुतः पृश्निर्युधाजितः।
जज्ञाते तनयौ पृश्नेः श्वफल्कश्चित्रकश्च यौ।

× × ×

श्वफल्कः काशिराजस्य सुतां भार्यामनिन्दिताम्।
गन्दिनीं नाम कन्यां हि ददौ श्वफल्काय सः।
तस्याः पुत्रः स्मृतोऽक्रूरः श्वाफल्को भूरिदक्षिणः॥

अर्थ—भूति का पुत्र युगन्धर हुआ। ये सभी भौत्य कहलाते थे। माद्रीपुत्र युधाजित् से पृश्नि उत्पन्न हुआ। पृश्नि के पुत्र श्वफल्क और चित्रक हुए।

श्वफल्क ने काशिराज की सुन्दरी पुत्री गन्दिनी से विवाह किया। काशिराज ने वह कन्या श्वफल्क को दे दी। उसका पुत्र अक्रूर श्वाफल्कि हुआ, जो यज्ञों में बड़ी दक्षिणायें देता था।

**हरिवंशपुराणे १।३४ अध्याय**

उपासङ्गस्तथा मद्गुर्मृदुरश्चारिमेजयः।
अविक्षिपस्तथोपेक्षः शत्रुघ्नोऽथारिमर्दनः॥
धर्मधृग् यतिधर्मा च ग्रध्रो भोजोऽन्धकस्तथा।
आवाहप्रतिवाहौ च सुन्दरी च वराङ्गना॥
अक्रूरेणाग्रसेनायां सुगात्र्यां कुरुनन्दनः।
प्रसेनश्चोपदेवश्च जज्ञाते देववर्चसौ।
चित्रकस्याभवन् पुत्राः पृथुर्विपृथुरेव च।
अश्वग्रीवोऽश्वबाहुश्च सुपार्श्वकगवेषणौ॥
अरिष्टनेमिरश्वश्च सुधर्मा धर्मभृत् तथा॥
सुबाहुर्बहुबाहुश्च श्रविष्ठाश्रवणे स्त्रियौ॥
अश्मक्यां जनयामास शूरं वै देवमीढुषः।
महिष्यां जज्ञिरे शूराद् भोज्यायां पुरुषा दश॥
वसुदेवो महाबाहुः पूर्वमानकदुन्दुभिः।
जज्ञे यस्य प्रसूतस्य दुन्दुभ्यः प्राणदन् दिवि॥
देवभागस्ततो जज्ञे देवश्रवा ·· पुनः।
अनाधृष्टिः कनबको वत्सवानथ गृंजिमः॥
श्यामः शमीको गण्डूषः पंच चास्य वराङ्गनाः।
पृथुकीर्तिः पृथा चैव श्रुतदेवा श्रुतश्रवाः॥
राजाधिदेवी च तथा पंचैता वीरमातरः।
पृथां दुहितरं वव्रे कुन्तिस्तां कुरुनन्दनः॥
शूरः पूज्याय वृद्धाय कुन्तिभोजाय तां ददौ॥

अर्थ—गन्दिनी अक्रूर के साथ उपासंग, मद्गु, मृदुर, अरिमेजय, अविक्षिप, उपेक्ष, शत्रुघ्न, अरिमर्दन धर्मधृक्, यतिधर्मा, ग्रध्र, भोज, अन्धक, आवाह और प्रतिवाह नामक पुत्र तथा वरांगना नाम की सुन्दरी कन्या भी उत्पन्न हुई। अक्रूर से उग्रसेनी सुगात्रा द्वारा देवतुल्य प्रसेन और उपदेव पुत्र उत्पन्न हुए। चित्रक के पुत्र थे पृथु, विमृथु, अश्वग्रीव, अश्वबाहु, सुपार्श्व, गवेशणक, अरिष्टनेमि

(नेमिनाथ) सुधर्मा, धर्मभृत्, सुबाहु, बहुबाहु तथा श्रविष्ठा और श्रवणा दो कन्यायें थीं।

देवमीढुष ने अश्मकी से 'शूर' नाम का पुत्र उत्पन्न किया। शूर से भोज राजकुमारी द्वारा दश पुत्र उत्पन्न हुए जिनमें वसुदेव प्रधान थे जिनके जन्म लेने पर आकाश में दुन्दुभियां बजने लगी। अन्य थे—देवभाग, देवश्रवा, अनाधृष्टि, कनबक, वत्सवान्, गृंजिम, श्याम, शमीक और गण्डूष। पांच श्रेष्ठ कन्यायें (शूर की पुत्रियां) थीं पृथुकीर्ति, पृथा (कुन्ती) श्रुतदेवा, श्रुतश्रवा और राजाधिदेवी—ये पांचों वीर पुत्रों की मातायें हुईं।

शूरपुत्री कुन्ती (पृथा) को कुन्तीराष्ट्र के राजा कुन्तिभोज ने वरण किया, अतः शूर ने वह पुत्री वृद्ध कुन्तिभोज के लिए दे दी।

तस्माद् कुन्तीति विख्याता कुन्तिभोजात्मजा पृथा।
श्रावन्तस्य श्रुतदेवायां जगृहुः सुषुवे सुतः।
श्रुतश्रवायां चैद्यस्य शिशुपालो महाबलः।
पृथुकीर्त्यां तु तनयः संजज्ञे वृद्धशर्मणः।
करुषाधिपतिर्वीरो दन्तवक्रो महाबलः॥
उद्धवो देवभागस्य महाभागः सुतोऽभवत्।
पण्डितानां परं प्राहुर्देवश्रवसमुद्धवम्॥
अश्मक्यां प्राप्तवान् पुत्रमनाधृष्टिर्यशस्विनम्॥
निवृतशत्रुं शत्रुघ्नं देवश्रवा व्यजायत॥
देवश्रवाः प्रजातस्तु नैषादिर्यः प्रतिश्रुतः।
एकलव्यो महाराज निषादैः परिवर्धितः।
वत्सावते त्वपुत्राय वसुदेवः प्रतापवान्।
अद्भिर्ददौ सुतं वीरं शौरिः कौशिकमौरसम्॥
गण्डूषाय त्वपुत्राय विष्वक्सेनो ददौ सुतान्।
चारुदेष्णं सुचारुं च पंचालं कृतलक्षणम्।
तन्द्रिजस्तन्द्रिपालश्च सुतौ कनबकस्य तु।
वीरश्चाश्वहनश्चैव वीरौ तावथ गृंजिमौ।

अर्थ—अतः कुन्ति की पत्नी पृथा कुन्ती (पाण्डवों की माता) नाम से विख्यात हुई।

अवन्तिराज ने श्रुतदेवा से विवाह किया और पुत्र उत्पन्न किया। श्रुतश्रवा चैद्य सुनीथ का पुत्र शिशुपाल उत्पन्न हुआ। पृथुकीर्ति से करुषराज वृद्धशर्मा द्वारा महाबली दन्तवक्र उत्पन्न हुआ।

देवभाग का पुत्र उद्धव था। देवश्रवा को पण्डितों में श्रेष्ठ कहा जाता है। अश्मकी से उद्धव ने अनाधृष्टि नाम के यशस्वीपुत्र को प्राप्त किया। देवश्रवा के निवृत्तशत्रु शत्रुघ्न उत्पन्न हुआ। जो एकलव्य नैषादि, निषादों द्वारा पालित-पोषित था, वह वसुदेव का पुत्र था उसको वसुदेव ने अपुत्र वत्सावत कौशिक को वसुदेव शौरि ने दे दिया। विष्वक्सेन कृष्ण ने गण्डूष को चारुदेष्ण और सुचारु (अपने पुत्रों) को दे दिया। तन्द्रिज और तन्द्रिपाल—कनबक के पुत्र थे और गृंजिम के वीर पुत्र थे— वीर और अश्ववह।

**(हरिवंश १।३५ अ०)**

**वसुदेवसन्ततिः—**

याः पत्न्यो वसुदेवस्य चतुर्दश वराङ्गनाः।
पौरवी रोहिणी नाम इन्दिरा च तथा वरा।
वैशाखी च तथा भद्रा सुनाम्नी चैव पंचमी।
सहदेवा शान्तिदेवा श्रीदेवा देवरक्षिता।।
वृकदेव्युपदेवी च देवकी चैव सप्तमी।
सुतनुर्वडवा चैव द्वे एते परिचारिके।।
पौरवी रोहिणी नाम बाह्लिकस्यात्मजाभवत्।
ज्येष्ठा पत्नी महाराज दयिताऽऽनकदुन्दुभेः।।
लेभे ज्येष्ठं सुतं रामं सारणं शठमेव च।
दुर्दमं दमनं श्वभ्रं पिण्डारकमुशीनरम्।
चित्रां नाम कुमारीं च रोहिणीतनया दश।
चित्रा सुभद्रेति पुनर्विख्याता कुरुनन्दन।।

**अर्थ**—वसुदेव की चौदह पत्नियां थीं—पौरवी, रोहिणी, इन्दिरा, वैशाखी, भद्रा, सुनाम्नी, सहदेवा, शान्तिदेवा, श्रीदेवा, देवरक्षिता, वृकदेवी, उपदेवी, देवकी, सुतनु, वडवा—अन्तिम दो परिचारिकायें थीं। पौरवी रोहिणी बाह्लिक की पुत्री थी। वह आनकदुन्दुभि (वसुदेव शौरि) की ज्येष्ठ पत्नी (महिषी) थी। उससे ज्येष्ठ पुत्र राम (बलराम=बलदेव), सारण, शठ, दुर्दम, दमन, श्वभ्र, पिण्डारक और उशीनर उत्पन्न हुए।

वसुदेव की चित्रा नाम की एक कन्या थी और रोहिणी से दश पुत्र उत्पन्न हुए। चित्रा ही सुभद्रा नाम से विख्यात हुई।

वसुदेवाच्च देवक्यां जज्ञे शौरिर्महायशाः।
रामाच्च निशठो जज्ञे रेवत्यां दयितः सुतः।।

अक्रूरात् काशिकन्यायां सत्यकेतुरजायत ।

× × ×

वसुदेवस्य भार्यासु महाभागासु सप्तसु ।
ये पुत्रा जज्ञिरे शूरा नामतस्तान् निबोध मे ।
भोजश्च विजयश्चैव शान्तिदेवासुतावुभौ ।
वृकदेवसुतामायां गदश्चास्तां सुतावुभौ ॥
उपासङ्गवरं लेभे तनयं देवरक्षिता ।
अवगाहं महात्मानं वृकदेवी व्यजायत ॥
गोपाली त्वप्सरास्तस्य गोपस्त्रीवेषधारिणी ।
धारयामास गार्ग्यस्य गर्भं दुर्धरमच्युतम् ।
स कालयवनो नाम जज्ञे राजा महाबलः ॥

**अर्थ**—वसुदेव से देवकी द्वारा महायशस्वी 'वासुदेव कृष्ण (शौरि)' उत्पन्न हुए। बलराम से रेवती द्वारा उनका प्रिय पुत्र निशठ उत्पन्न हुआ। अक्रूर से काशिकन्या द्वारा सत्यकेतु उत्पन्न हुआ।

वसुदेव से सात पत्नियों द्वारा जो पुत्र उत्पन्न हुए, उनके नाम थे भोज और विजय—शान्तिदेवा के पुत्र थे। वृकदेवपुत्री से गद और दो पुत्र उत्पन्न हुए। देवरक्षिता से उपासंगवर उत्पन्न हुआ। वृकदेवी से अवगाह पैदा हुआ।

कालयवन गोपाली नाम की अप्सरा (सुन्दरी) से, जो गोपवेशधारिणी थी, उसने गार्ग्य (शिशिरायण के) पुत्र अच्युत और दुर्धर पुत्र महाबली कालयवन को उत्पन्न किया।

**अन्धकवंशः (कुकुरवंशः)** —

अन्धकात् काश्यदुहिता चतुरोऽलभतात्मजान् ।
कुकुरं भजमानं च शर्यिं कम्बलबर्हिषम् ॥
कुकुरस्य सुतो धृष्णुर्धृष्णोस्तु तनयस्तथा ॥
कपोतरोमा तस्याथ तैत्तिरिस्तनयोऽभवत् ॥
जज्ञे पुनर्वसुस्तस्मादभिजित् तु पुनर्वसोः ।
तस्य वै पुत्रमिथुनं बभूवाभिजितः किल ॥
आहुकश्चाहुकी चैव ख्यातौ ख्यातिमतां वरौ ।

× × ×

आहुकीं चाप्यवन्तिभ्यः स्वसारं ददुरन्धकाः ।
आहुकस्य च काश्यायां द्वौ पुत्रौ सम्बभूवतुः ॥
देवकश्चोग्रसेनश्च देवपुत्रसमावुभौ ।

देवकस्याभवन्पुत्राश्चत्वारस्त्रिदशोपमाः ।
देववानुपदेवश्च सुदेवो देवरक्षितः ॥
कुमार्यः सप्त चाप्यासन् वसुदेवाय ता ददौ ।
देवकी शान्तिदेवा च सुदेवा देवरक्षिता ।
वृकदेवी उपदेवी च सुनाम्नी चैव सप्तमी ।

अर्थ—अन्धक से काश्यपुत्री ने चार पुत्रों को उत्पन्न किया—कुकुर, भजमान, शमी और कम्बलबर्हि । कुकुर का पुत्र हुआ धृष्णु, उसका पुत्र हुआ कपोतरोमा और उसका पुत्र था तैत्तिरि । उससे पुनर्वसु तथा पुनर्वसु से अभिजित् पुत्र उत्पन्न हुआ । अभिजित् से दो मिथुन सन्तान उत्पन्न हुई । आहुक और आहुकी जो बहुत विख्यात थे ।

अन्धक क्षत्रियों ने आहुकी का विवाह अवन्तिराज से कर दिया । आहुक द्वारा काशिराजपुत्री से दो देवतुल्य पुत्र उत्पन्न हुए—देवक और उग्रसेन । देवक के चार पुत्र हुए, जो देवतुल्य प्रभावशाली थे । देववान्, उपदेव, सुदेव और देवरक्षित ।

देवक की सात कन्यायें थीं जो उसने वसुदेव को दे दी (उनका विवाह वसुदेव से कर दिया) देवकी, शान्तिदेवा, सुदेवा, देवरक्षिता, वृकदेवी, उपदेवी और सप्तमी सुनाम्नी ।

नवाग्रसेनस्य सुतास्तेषां कंसस्तु पूर्वजः ।
न्यग्रोधश्च सुनामा च कङ्कशङ्कुसुभूमिपः ॥
राष्ट्रपालोऽथ सुतनुरनाधृष्टिश्च पुष्टिमान् ॥
तेषां स्वसारः पंचाऽऽसन् कंसा कंसवती तथा ।
सुतनू राष्ट्रपाली च कङ्का चैव वराङ्गना ।
उग्रसेनः सहापत्यो व्याख्यातः कुकुरोद्भवः ॥

अर्थ— उग्रसेन के नौ पुत्र थे, उनमें कंस ज्येष्ठ था । अन्य पुत्र थे—न्यग्रोध, सुनामा, कंक, शंकु, सुभूमिप, राष्ट्रपाल, सुतनु, अनाधृष्टि और पुष्टिमान् । उनकी पांच बहिनें थी— कंसा, कंसवती, राष्ट्रपाली, कंका नाम की श्रेष्ठ सुन्दरी । इस प्रकार उग्रसेन का पुत्रसहित कुकुरवंश कहा गया ।

**द्वितीयभजमानवंशः (अन्धकवंशान्तर्गतः)—**

भजनमानस्य पुत्रोऽथ रथमुख्यो विदूरथः ।
राजाधिदेवः शूरस्तु विदूरथ सुतोऽभवत् ॥
राजाधिदेवस्य सुता जज्ञिरे वीर्यवत्तराः ।
दत्तातिदत्तबलिनौ शोणाश्वः श्वेतवाहनः ॥

शमी च दण्डशर्मा च दण्डशत्रुश्च शत्रुजित् ।
श्रवणा च श्रविष्ठा च स्वसारौ सम्बभूवतुः ॥
शमीपुत्रः प्रतिक्षत्रः प्रतिक्षत्रस्य चात्मजः ।
स्वयंभोजः स्वयंभोजाद्हृदीकः सम्बभूव ह ॥
तस्य पुत्रा बभूवुर्हि सर्वे भीमपराक्रमाः ।
कृतवर्माग्रजस्तेषां शतधन्वाथ मध्यमः ।
देवर्षेर्वचनात् तस्य भिषग् वैतरणश्च यः ।
सुदान्तश्च विदान्तश्च कामदा कामदन्तिका ॥

**अर्थ**—भजमान (द्वितीय) का पुत्र महारथी विदूरथ था। विदूरथ का पुत्र राजाधिदेव शूर था। राजाधिदेव के बलशाली पुत्र थे दत्त और अतिदत्त, शोणाश्व, श्वेतवाहन, शमी, दण्डशर्मा, दण्डशत्रु और शत्रुजित्। उनकी दो बहिनें थीं—श्रवण और श्रविष्ठा।

शमी का पुत्र था प्रतिक्षत्र, उसका पुत्र हुआ स्वयंभोज, उसका पुत्र था हृदीक और हृदीक के सभी पुत्र भयंकर रूप से पराक्रमी थे—उनमें कृतवर्मा ज्येष्ठ था, शतधन्वा मध्यम था। देवर्षि नारद के वचन (वरदान) से भिषक् वैतरण, सुदान्त और विदान्त नाम के पुत्र तथा कामदा और कामदन्तिका पुत्रियां हुईं।

**कम्बलबर्हिवंशः**—

देववांश्चाभवत् पुत्रो विद्वान् कम्बलबर्हिषः ।
असमौजास्तथा वीरो नासमौजाश्च तावुभौ ॥
अजातपुत्राय सुतान् प्रददावसमौजसे ।
सुदंष्ट्रं चारुरूपं च कृष्णमित्यन्धकास्त्रयः ॥

(हरिवंशे १।३८ अ०)

**अर्थ**—कम्बलबर्हि का पुत्र हुआ देववान् विद्वान् तथा असमौजा और नासमौजा। असमौजा ने अपने भाई नासमौजा को अपने पुत्र सुदंष्ट्र, चारुरूप और कृष्ण (जो अन्धकवंशीय थे) दे दिये।

**वसुदेववंशः**—

ज्येष्ठा पत्नी महाभागा दयिताऽऽनकदुन्दुभेः ।
ज्येष्ठं लेभे सुतं रामं सारणं निशठं तथा ।
दुर्दमं दमनं शुभ्रं पिण्डारककुशीतकौ ।
चित्रां नाम कुमारीं च रौहिण्यष्टौ व्यजायत ।
पौत्रौ रामस्य जज्ञाते विज्ञातौ निशितोत्सुकौ ।

पार्श्वी च पार्श्वनन्दी च शिशुः सत्यधृतिस्तथा ॥
मन्दबाह्योऽथ रामाणगिरिकौ गिर एव च।
शुक्लगुल्मेति गुल्मश्च दरिद्रान्तक एव च॥
कुमार्यश्चापि पंचाद्या नामतस्ता निबोधत।
अर्चिष्मती सुनन्दा च सुरसा सुवचास्तथा॥
तथा शतबला चैव सारणस्य सुतास्त्विमाः।
भद्राश्वो भद्रगुप्तिश्च भद्रविद्यस्तथैव च।
भद्रबाहुर्भद्ररथो भद्रकल्पस्तथैव च।
सुपार्श्वकः कीर्तिमांश्च रोहिताश्वश्च भद्रकः।
दुर्दमश्चाभिभूतश्च रोहिण्याः कुलजाः स्मृताः॥
नन्दोपनन्दौ मित्रश्च कुक्षिमित्रस्तथाचलः।
चित्रोपचित्रे कन्ये च स्थितिः पुष्टिरथाऽपरा।
मदिरायाः सुता ह्येते सुदेवोऽथ विजज्ञिरे।
उपबिम्बोऽथ बिम्बश्च सत्त्वदत्तो महौजसः।
चत्वार एते विख्याता भद्रापुत्रा महाबलाः॥
वैशाख्यां समदाच्छौरिः पुत्रं कौशिकमुत्तमम्।
देवक्यां जज्ञिरे शौरिः सुषेणः कीर्तिमानपि।
तनयो भद्रसेनश्च यजुदायश्च पंचमः।
षष्ठो भद्रविदेकस्य कंसः सर्वान् जघान तान्।

× × ×

अतोऽस्य सहदेवायां शूरो जज्ञे भयासखः।
शार्ङ्गं देवाऽजनयत्तम्बुं शौरी जज्ञे कुलोद्वहम्॥
उपसङ्गं वसुं चापि तनयौ देवरक्षितौ।
एवं दश सुतास्तस्य कंसस्तानप्यघातयत्॥

अर्थ—वसुदेव की ज्येष्ठ पत्नी (रोहिणी) से राम, सारण, निशठ, दुर्दम, दमन, शुभ्र, पिण्डारक कुशीन और कौतक उत्पन्न हुए तथा चित्रा (सुभद्रा) नाम की पुत्री- इस प्रकार आठ पुत्र और एक पुत्री उत्पन्न की। राम के पौत्र थे—निशित, उत्सुक, पार्श्वी, पार्श्वनन्दी, शिशु, सत्यधृति, मन्दबाह्य, रामण, गिरिक, गिर, शुक्लगुल्म, गुल्म और दरिद्रान्तक।

वसुदेव की पांच कन्यायें थीं- अर्चिष्मती, सुनन्दा, सुरसा, सुवचा और शतबला। सारण के पुत्र थे—भद्राश्व, भद्रगुप्ति, भद्रविद्य, भद्रबाहु, भद्ररथ, सुपार्श्वक, कीर्तिमान्, रोहिताश्व, भद्रक, दुर्दम, अभिभूत—ये रोहिणीकुल के पुत्र थे।

मदिरा (वसुदेव की पत्नी) से—नन्द, उपनन्द, मित्र कुक्षिमित्र, अचल, चित्र और उपचित्र और कन्यायें थीं स्थिति तथा पुष्टि ।

भद्रा के पुत्र महाबली चार थे—उपबिम्ब, बिम्ब, सत्त्वदत्त और महोज ।

वैशाखी से शौरि वसुदेव ने कौशिक नाम के उत्तम पुत्र को उत्पन्न किया ।

देवकी से शौरि (कृष्ण वासुदेव), सुषेण, कीर्तिमान्, भद्रसेन और पंचम यजुदाय तथा षष्ठ भद्रविद्—कंस ने इन सबको (कृष्ण छोड़कर) मार दिया ।

वसुदेव ने सहदेवा से भया का सखा शूर नाम का पुत्र उत्पन्न किया । शार्ङ्गदेवा से तम्बु नाम का कुलवाहक वसुदेवपुत्र उत्पन्न हुआ । देवरक्षिता उपसंग और वसु वसुदेवपुत्र थे । इस प्रकार वसुदेव के इन दश पुत्रों को भी कंस ने मरवा दिया था ।

विजयं रोचनं चैव वर्धमानं तथैव च ।
एतान्सर्वान्महाभागानुपदेवा व्यजायत ॥
स्वगावहं महात्मानं वृकदेवी व्यजायत ।
आगही च स्वसा चैव सुरूपा शिशिरायणी ।
सप्तमं देवकी पुत्रं सुनासा सुषुवे भुवम् ।
गवेषणं महाभागं संग्रामे चित्रयोधिनम् ॥
श्राद्धदेवं पुरा येन वैनं विरचितं द्विजाः ।
शैव्यायामददाच्छौरिः पुत्रं कौशिकमव्ययम् ।
सुगन्धी वनराजी च शौरेरास्तां परिग्रहः ।
पुण्ड्रश्च कपिलश्चैव वसुदेवात्मजौ हि तौ ॥
तयोः राजाऽभवत् पुण्ड्रः कपिलस्तु वनं ययौ ।
तस्यां समभवद्वीरो वसुदेवात्मजो बली ।
राजा नाम निषादोऽसौ प्रथमः स धनुर्धरः ॥

(वायुपुराणे ३४ अ०)

अर्थ—वसुदेव पत्नी उपदेवा ने विजय, रोचन और वर्धमान नाम के महाभाग्यशाली पुत्र उत्पन्न किये । वृकदेवी ने स्वगावह नाम का पुत्र उत्पन्न किया । उसकी बहिन आगही थी । शिशिरायण की पुत्री सुरूपा थी । देवकी का सातवां पुत्र गवेषण था, जो युद्ध में विचित्र योद्धा था । वसुदेव ने श्राद्धदेव कौशिक नाम के पुत्र को शैव्या (पत्नी) से उत्पन्न किया । सुगन्धी और वनराजी भी शौरि वसुदेव की पत्नियां थीं । उनसे पुण्ड्र (पौण्ड्र वासुदेव) और कपिल उत्पन्न हुए । उनमें पुण्ड्र राजा हुआ और कपिल वन में चला गया । वसुदेव का पुत्र महाबली राजा निषादराज (एकलव्य) था, जो महान् धनुर्धर हुआ ।

**वासुदेवसन्ततिः—**

अष्टौ महिष्यः पुत्रिण्य इति प्राधान्यतः स्मृताः ।
सर्वा वीरप्रजाश्चैव तास्वपत्यानि मे शृणु ॥
रुक्मिणी सत्यभामा च देवी नाग्नजिती तथा ।
सुदत्ता च तथा शैव्या लक्ष्मणा चारुहासिनी ।
मित्रविन्दा च कालिन्दी जाम्बवत्यथ पौरवी ॥
सुभीमा च तथा माद्री रुक्मिणी तनयाञ्छृणु ॥
प्रद्युम्नः प्रथमं जज्ञे शम्बरान्तकरः शुभः ।
द्वितीयो चारुदेष्णश्च वृष्णिसिंहो महारथः ॥
चारुभद्रश्चारुगर्भः सुदेष्णो द्रुम एव च ।
सुषेणश्चारुगुप्तश्च चारुविन्दश्च वीर्यवान् ॥
चारुबाहुः कनीयांश्च कन्या चारुमती तथा ॥
जज्ञिरे सत्यभामायां भानुर्भीमरथः क्षुपः ।
रोहितो दीप्तिमांश्चैव ताम्रजाक्षो जलान्तकः ॥
भानुर्भीममलिका चैव ताम्रपर्णी जलन्धया ।
चतस्रो जज्ञिरे तेषां स्वसारो गरुडध्वजात् ॥

**अर्थ**--वासुदेव कृष्ण की पत्नियां और सन्तति—कृष्ण की प्रधान आठ महिषियां (रानियां) थीं—जो सभी वीर पुत्रों को उत्पन्न करने वाली थीं। उनके नाम और पुत्रों को सुनिये—रुक्मिणी, सत्यभामा, नाग्नजिती, सुदत्ता शैव्या, लक्ष्मणा, मित्रविन्दा कालिन्दी, जाम्बवती पौरवी और सुभीमा माद्री।

रुक्मिणीपुत्रों के नाम इस प्रकार हैं—प्रथम (ज्येष्ठ) पुत्र प्रद्युम्न था, जो बड़ा सुन्दर (शुभ) था, जिसने शम्बर असुर को मारा। द्वितीय चारुदेष्ण, द्रुम, सुषेण, चारुगुप्त, चारुविन्द, चारुबाहु और कन्या चारुमती, (रुक्मिणी की सन्तानें थीं)।

सत्यभामा के पुत्र थे—भानु, भीमरथ, क्षुप, रोहित, दीप्तिमान्, ताम्रजाक्ष, जलान्तक तथा चार पुत्रियां थी – भानु भीममलिका, ताम्रपर्णी और जलन्धरा। ये गरुडध्वज कृष्ण से उत्पन्न हुईं।

(हरिवंश २।१०३ अ०)

जाम्बवत्याः सुतो जज्ञे साम्बः समितिशोभनः ।
मित्रवान् मित्रविन्दश्च मित्रवत्यपि चाङ्गना ।
मित्रबाहुः सुनीथश्च नाग्नजित्याः प्रजाः शृणु ॥
भद्रकारो भद्रविन्दः कन्या भद्रवती तथा ।

सुदत्तायां तु शैब्यायां संग्रामजिदजायत ।
सत्यजित् सेनजिच्चैव तथा शूरः सपत्नजित् ॥
सुभीमायाः सुतो माद्रया वृकाश्वो वृकनिर्वृतिः ।
कुमारो वृकदीप्तिश्च लक्ष्मणायाः प्रजाः शृणु ॥
गात्रवान् गात्रगुप्तश्च गात्रविन्दश्च वीर्यवान् ।
जज्ञिरे गात्रवत्या च भगिन्याऽनुजया सह ॥
अश्रुतश्च सुतो जज्ञे कालिन्द्याः श्रुतसम्मितः ।
अश्रुतं श्रुतसैनायै प्रददौ मधुसूदनः ।
बृहत्यां तु गदं प्राहुः शैब्यायामङ्गदं सुतम् ।
उत्पन्नं कुमुदं चैव श्वेतं श्वेता तथाङ्गना ॥
अवगाहः सुमित्रश्च शुचिश्चित्ररथस्तथा ।
चित्रसेनः सुदेवायाश्चित्रा चित्रवती तथा ॥
वनस्तम्बश्च जज्ञाते सुतः स्तम्बवनश्च ह ।
निवासनाऽवनस्तम्बः कन्या स्तम्बवती तथा ।
उपसम्नश्च शङ्कश्च वज्रांशुः क्षिप्र एव च ।
कौशिक्यां सुतसोमायां यौधिष्ठिर्यां युधिष्ठिरः ॥
कपाली गरुडश्चैव जज्ञाते चित्रयोधिनौ ।
एवमादीनि पुत्राणां सहस्राणि निबोध मे ।
दशायुतं समाख्याता वासुदेवस्य ते सुताः ॥
अयुतानि तथा चाष्टौ शूरा रणविशारदाः ।
जनार्दनस्य प्रसवः कीर्तितोऽयं तथा मया ॥

**कृष्णोत्तरवंशः—**

प्रद्युम्नस्य सुतो जज्ञे वैदर्भ्यां राजसत्तम ।
अनिरुद्धो रणेऽरुद्धो जज्ञे स मृगकेतनः ॥
सानुर्जज्ञेऽनिरुद्धस्य वज्रः सानोरजायत ।
वज्राज्जज्ञे प्रतिरथः सुचारुस्तस्य चात्मजः ॥

**अर्थ**—जाम्बवती (पौरवी, पौरवराजा की पुत्री) से साम्ब नाम का पुत्र उत्पन्न हुआ जो सभा में सुशोभित होता था । अन्य जाम्बवतीपुत्र थे—मित्रवान्, मित्रविन्द, मित्रबाहु, सुनीथ और कन्या मित्रवती ।

नाग्नजिती (नग्नजित् गान्धार की पुत्री)— से भद्रकार, भद्रविन्द पुत्र और कन्या भद्रवती उत्पन्न हुई ।

सुदत्ता शैव्या (शिविराजकुमारी)—से संग्रामजित्, सत्यजित्, सेनजित्, सत्यजित् और शत्रघाती शूर नाम का पुत्र उत्पन्न हुआ।

सुभीमा माद्री (मद्रराजकुमारी)—से वृकाश्व, वृकनिवृ॑त्ति और कुमार वृकदीप्ति उत्पन्न हुए।

लक्ष्मण के पुत्र थे—गात्रवान्, गात्रगुप्त और बली गात्रविन्द और पुत्री गात्रवती थी।

मित्रविन्दा कालिन्दी (कलिन्दराजकुमारी)—का पुत्र था अश्रुत जो (श्रुति) इतिहास में प्रसिद्ध हुआ। मधुसूदन कृष्ण ने अश्रुत को श्रुतसेना को दे दिया।

बृहती शैव्या से अंगद, गद कुमुद और श्वेत तथा श्वेता कन्या उत्पन्न हुई। अन्य पुत्र थे—अवगाह, सुमित्र, शुचि, चित्ररथ और चित्रसेन।

सुदेवा के चित्रा, चित्रवती पुत्रियां और पुत्र—वनस्तम्ब तथा वनस्तम्ब हुए तथा अवनस्तम्ब और निवासना, स्तम्बवती, उपसन्न, शंक, वज्रांशु और क्षिप्र अन्य सन्तानें थीं।

कौशिकी सुतसोमपुत्री यौधिष्ठिरी में युधिष्ठिर, कपाली और गरुड नाम के विचित्र योद्धा पुत्र उत्पन्न हुए।

इस प्रकार वासुदेव कृष्ण के अनेक सहस्र पुत्र उत्पन्न हुए। कृष्ण के पुत्र (तथा पौत्रों) की संख्या एक लाख कही जाती है। इनमें अस्सी हजार पुत्र अत्यन्त शूर और रणविशारद थे। इस प्रकार जनार्दन कृष्ण की सन्तति का विवरण दिया गया।

विदर्भराजकुमारी से प्रद्युम्न का पुत्र हुआ अनिरुद्ध जिसकी युद्ध में अवरुद्ध गति (अबाध) थी। उसका मृगकेतु था। अनिरुद्ध का पुत्र सानु था। सानु का पुत्र वज्र हुआ, वज्र से प्रतिरथ और प्रतिरथ का पुत्र हुआ सुचारु।

**तुर्वसुवंशः—**

तुर्वसोस्तु सुतो वह्निर्वह्नेर्गोभानुरात्मजः।
गोभानोस्तु सुतो वीरस्त्रिसानुरपराजितः॥
करन्धमस्त्रिसानोस्तु मरुत्तस्य तु चात्मजः॥
अन्यस्त्वाविक्षितो राजा मरुत्तः कथितः पुरा।
अनपत्यो मरुत्तस्तु स राजाऽऽसीदिति श्रुतः।
दुष्कृतं पौरवं चापि सर्वे पुत्रमकल्पयन्॥
एवं ययातिशापेन जराया संक्रमेण च।
तुर्वसोः पौरवं वंशं प्रविवेश पुरा किल॥
दुष्कृतस्य दायाद शरूथो नाम पार्थिवः।

शरूथात्तु जनापीडश्चत्वारस्तस्य चात्मजाः ।
पाण्ड्यश्च केरलश्चैव चोलः कुल्यस्तथैव च ।।
तेषां जनपदाः कुल्या पाण्ड्याश्चोलाः सकेरलाः ।।

तुर्वसु का पुत्र वह्नि था। वह्नि का पुत्र गोभानु हुआ। गोभानु का पुत्र अपराजेय वीर त्रिसानु हुआ। त्रिसानु का पुत्र करन्धम हुआ। करन्धम का पुत्र मरुत्त हुआ। आविक्षित मरुत्त इस मरुत्त कारन्धम से पृथक् था। यह मरुत्त कारन्धम अनपत्य (बिना सन्तान) का था ऐसा इतिहास है। दुष्कृत पौरव को सभी तौर्वशों ने अपना उत्तराधिकारी मान लिया। इस प्रकार ययातिशाप एवं जरासंक्रमण के कारण तुर्वसुवंश पौरववंश में संक्रमित होगया। दुष्कृत का उत्तराधिकारी शरूथ नाम का राजा हुआ। शरूथ का पुत्र जनपीड हुआ, उसके चार पुत्र हुए—पाण्ड्य, केरल, चोल और कुल्य और इन्हीं के नाम से चार जनपद (राष्ट्र) प्रथित हुए—पाण्ड्य, केरल, चोल और कुल्य ।

**द्रुह्युवंशः—**

द्रुह्योस्तु तनयौ वीरौ बभ्रुः सेतुश्च विश्रुतौ ।
अरुद्धः सेतुपुत्रस्तु बाभ्रवो रिपुरुच्यते ।।
यौवनाश्वेन समिति कृच्छ्रेण निहतो बली ।
युद्धं सुमहदासीत्तु मासान्परि चतुर्दश ।
अरुद्धस्य तु दायादो गान्धारो नाम पार्थिवः ।।
ख्यायते यस्य नाम्ना तु गान्धारविषयो महान् ।।
गान्धारपुत्रो धर्मस्तु धृतस्तस्य सुतोऽभवत् ।।
धृतस्य दुर्दमो जज्ञे प्रचेतास्तस्य चात्मजः ।
प्रचेतसः पुत्रशतं राजानः सर्व एव ते ।।
म्लेच्छराष्ट्राधिपाः सर्वे ह्युदीचीं दिशमाश्रिताः ।।

(हरिवंश ३२ अ०)
(वायु० अ० ३६)

**अर्थ**—द्रुह्यु के दो विख्यात पुत्र हुए—बभ्रु और सेतु। सेतु का पुत्र हुआ अरुद्ध और बभ्रु का पुत्र था रिपु। अरुद्ध को मान्धाता यौवनाश्व ने बड़ी कठिनाई से युद्ध में मारा था। उनमें चौदह मास से अधिक समय तक युद्ध होता रहा। अरुद्ध का उत्तराधिकारी 'गान्धार' नाम का राजा हुआ, जिसके नाम से गान्धार देश (राष्ट्र) प्रथित हुआ। गान्धार का पुत्र था धर्म। धर्म का पुत्र हुआ धृत और उसका पुत्र हुआ दुर्दम। उसका पुत्र हुआ प्रचेता। प्रचेता के सौ पुत्र (या वंशज) हुए जो सभी उत्तर दिशा के म्लेच्छ राष्ट्रों के राजा बने ।

(वायु० अ० ३६)

**अनुवंशः—**

अनोः पुत्रा महात्मानस्त्रयः परमधार्मिकाः ।
सभानरः पक्षश्च परपक्षस्तथैव च ॥
सभानरस्य पुत्रस्तु विद्वान् कालानलो नृपः ।
कालानलस्य धर्मात्मा सृंजयो नाम धार्मिकः ॥
सृंजयस्याभवत्पुत्रो वीरो राजा पुरंजयः ।
जनमेजयो महासत्वः पुरंजयसुतोऽभवत् ॥
जनमेजयस्य राजर्षेर्महाशालोऽभवन्नृपः ॥
आसीदिन्द्रसमो राजा प्रतिष्ठितयशा दिवि ।
महामनाः सुतस्तस्य महाशालस्य धार्मिकः ॥
सप्तद्वीपेश्वरो राजा चक्रवर्ती महायशाः ।
महामनास्तु पुत्रौ द्वौ जनयामास विश्रुतौ ॥
उशीनरं च धर्मज्ञं तितिक्षुं चैव धार्मिकम् ॥

अनु के तीन परमधार्मिक पुत्र हुए— सभानर, पक्ष और परपक्ष। सभानर का पुत्र हुआ कालानल । राजा कालानल का पुत्र था धर्मात्मा राजा सृंजय । सृंजय का पुत्र हुआ वीर राजा पुरंजय । पुरंजय का पुत्र हुआ महाबली राजा जनमेजय । राजर्षि जनमेजय का पुत्र हुआ राजा महाशाल । धार्मिक महाशाल का पुत्र महामना इन्द्रतुल्य पराक्रमी और महायशस्वी राजा था, जिसकी कीर्ति स्वर्ग-लोक (इन्द्रलोक) तक फैली हुई थी । महायशस्वी सम्राट् महामना सम्पूर्ण पृथिवी अर्थात् सातों महाद्वीपों का शासक था । महामना के दो जगद्विख्यात पुत्र हुए— उशीनर और धार्मिक तितिक्षु ।

**औशीनरवंशः—**

उशीनरस्य पत्न्यस्तु पंच राजर्षिवंशजाः ।
मृगा कृमी नवा दर्वा पंचमी च दृषद्वती ॥
उशीनरस्य पुत्रास्तु पंच तासु कुलोद्वहाः ।
मृगायास्तु मृगः पुत्रो नवाया एव नव तु ।
कृम्याः कृमिस्तु दर्वायाः सुव्रतो नाम धार्मिकः ।
द्रषद्वती सुतश्चापि शिबिरौशीनरो द्विजः ॥
शिबे शिबपुरं ख्यातं यौधेयं तु मृगस्य तु ॥
नवस्य नवराष्ट्रं तु कृमेस्तु कृमिलापुरी ।
सुव्रतस्य तथाऽऽम्बष्ठाः शिबिपुत्रान्निबोधत ॥

शिबेस्तु शिबयः पुत्राश्चत्वारो लोकसम्मताः ।
वृषदर्भः सुवीरस्तु केकयो मद्रकस्तथा ॥
तेषां जनपदाः स्फीताः केकया माद्रकास्तथा ॥
वृषदर्भाः सूचीदीर्घास्तितिक्षोः शृणुत प्रजाः ।

**अर्थ**—औशीनर वंश की प्रसिद्ध शाखायें—उशीनर की राजर्षि पुत्रियां पांच पत्नियां थीं—मृगा, कृमी, नवा, दर्वा और पंचमी दृषद्वती। उनसे उशीनर के पांच वंशप्रवर्तक पुत्र उत्पन्न हुए। मृगी का पुत्र मृग, नवा का पुत्र नव, कृमि का पुत्र कृमि, देवी का पुत्र सुव्रत धार्मिक तथा द्वषद्वती का पुत्र शिबि औशीनर। शिबि से शिबपुर प्रसिद्ध हुआ। मृग से यौधेय क्षत्रिय प्रथित हुए। नव से नवराष्ट्र, कृमि से कृमिलापुरी और सुव्रत से अम्बष्ठराष्ट्र प्रसिद्ध हुआ।

शिबि औशीनर से चार राष्ट्र—शिबि से चार शैब्यपुत्र उत्पन्न हुए, जो पृथिवी लोक में सम्मानित थे—वृषदर्भ, सुवीर, केकय और मद्र। उनसे इन्हीं के चार राष्ट्र प्रथित हुए जो विशाल थे—कैकय, माद्रक, वृषदर्भ और सौवीर।

अब तितिक्षु वंश को सुनिये।

**तितिक्षुवंशः—**

तैतिक्षुरभवद्राजा पूर्वस्यां दिशि विश्रुतः ।
उशद्रथो महाबाहुस्तस्य हेमः सुतोऽभवत् ॥
हेमस्य सुतपा जज्ञे सुतः सुतयशा बली ।
जातो मनुष्ययोन्यां वै क्षीणे वंशे प्रजेप्सया ।
महायोगी स तु बलिर्बद्धो यः स महामनाः ॥
पुत्रानुत्पादयास चातुर्वर्ण्यकरान्भुवि ।
अङ्गं स जनयामास वङ्गं सुह्यं तथैव च
पुण्ड्रं कलिंगं च तथा बालेयं क्षत्रमुच्यते ।
बालेया ब्राह्मणाश्चैव तस्य वंशकराः प्रभोः ।

× × ×

**अङ्गवंशः—**

अङ्गपुत्रो महानासीद् राजेन्द्रो दधिवाहनः ।
दधिवाहनपुत्रस्तु राजा दिविरथोऽभवत् ।
पुत्रो दिविरथस्यासीच्छक्रतुल्यपराक्रमः ।
विद्वान् धर्मरथो नाम तस्य चित्ररथः सुतः ॥
अथ चित्ररथस्यापि पुत्रो दशरथोऽभवत् ।
लोमपाद इति ख्यातो यस्य शान्ता सुताभवत् ॥

तस्य दाशरथिर्वीरश्चतुरङ्गो महायशाः।
ऋष्यशृंगप्रसादेन जज्ञे कुलविवर्धनः ॥
चतुरङ्गस्य पुत्रस्तु पृथुलाक्ष इति स्मृतः।
पृथुलाक्षसुतो राजा चम्पो नाम महायशाः ॥
चम्पस्य तु पुरी चम्पा या मालिन्यभवत् पुरा।
पूर्णभद्रप्रसादेन हर्यङ्गोऽस्य सुतोऽभवत् ॥
हर्यङ्गस्य तु दायादो राजा भद्ररथः स्मृतः।
पुत्रो भद्ररथस्यासीद् बृहत्कर्मा प्रजेश्वरः ॥
बृहद्दर्भः सुतस्तस्य तस्माज्जज्ञे बृहन्मनाः।
बृहन्मनास्तु राजेन्द्र जनयामास व सुतम् ॥
नाम्ना जयद्रथं नाम यस्माद् दृढ़रथो नृपः।
आसीद् दृढ़रथस्यापि विश्वजिज्जमेजय ॥
दायादस्तस्य कर्णस्तु विकर्णस्तस्य चात्मजः।
तस्य पुत्रशतं त्वासीदङ्गानां कुलवर्धनम्।

अर्थ—तितिक्षु का पुत्र महाबली उशद्रथ पूर्व दिशा (पूर्व) में प्रसिद्ध वंश प्रवर्तक राजा हुआ। उसका पुत्र हुआ हेम। हेम का पुत्र था सुतपा (या विरोचन), उसका पुत्र हुआ बलि वैरोचन जो मनुष्य योनि में उत्पन्न हुआ (दुबारा), दैत्य असुर वंश के क्षीण होने पर जिससे उसकी प्रजावृद्धि हो सके। जिस बलि वैरोचन महायोगी और महामना को (विष्णु ने) बांधा था, उसने चातुर्वर्ण्य प्रवर्तक पांच पुत्र उत्पन्न किये—अंग, वंग, सुह्य, पुण्ड्र और कलिंग। ये बालेय क्षत्रिय कहलाते थे। बलि वैरोचन (अंगराज) से वंशप्रवर्तक ब्राह्मण भी उत्पन्न हुए।

अंग का पुत्र हुआ महान् राजेन्द्र दधिवाहन। दधिवाहन का पुत्र हुआ इन्द्रतुल्य पराक्रमी राजा दियिरथ। उसका पुत्र हुआ चित्ररथ। उसका पुत्र हुआ दशरथ, जो लोमपाद (रोमपाद) के नाम से विख्यात था जिसकी पुत्री शान्ता हुई। अंगराज दशरथ का पुत्र महायशस्वी वीर चतुरंग था जो ऋषि ऋष्यशृंग की कृपा से अपने कुल को बढ़ानेवाला हुआ। चतुरंग का पुत्र इतिहास में 'पृथुलाक्ष' नाम से विख्यात हुआ। पृथुलाक्ष का पुत्र राजा चम्प महायशस्वी था। चम्प नाम से चम्पापुरी प्रथित हुई जो उससे पूर्व 'मालिनी' कही जाती थी। पूर्णभद्र ऋषि की कृपा से चम्प का पुत्र हर्यङ्ग हुआ। हर्यङ्ग का उत्तराधियारी राजा भद्ररथ हुआ। भद्ररथ का पुत्र राजा बृहत्कर्मा था। उसका पुत्र बृहद्दर्भ हुआ। उससे बृहन्मना उत्पन्न हुआ। बृहन्मना ने जयद्रथ नाम के पुत्र को उत्पन्न किया जिससे दृढ़रथ उत्पन्न हुआ। दृढ़रथ का पुत्र विश्वजित् था, जिसका उत्तराधिकारी कर्ण हुआ। कर्ण का पुत्र हुआ विकर्ण। विकर्ण के अंगकुल के वर्द्धक सौ पुत्र हुए।

बृहद्दर्भसुतो यस्तु राजा नाम्ना बृहन्मनाः ॥
तस्य पत्नीद्वयं चासीच्चैद्यस्यैते सुते शुभे ॥
यशोदेवी च सत्या च ताभ्यां वंशस्तु भिद्यते ।
जयद्रथस्तु राजेन्द्र यशोदेव्यां व्यजायत ।
ब्रह्मक्षत्रोत्तरः सत्यां विजयो नाम विश्रुतः ॥
विजयस्य धृतिः पुत्रस्तस्य पुत्रो धृतव्रतः ।
धृतव्रतस्य पुत्रस्तु सत्यकर्मा महायशाः ॥
सत्यकर्मसुतश्चापि सूतस्त्वधिरथस्तु वै ।
यः कर्णं प्रतिजग्राह ततः कर्णस्तु सूतजः ॥
कर्णस्य वृषसेनस्तु वृषस्तस्यात्मजः स्मृतः ॥

(हरिवंशे १।३१।४३–५६)

**अर्थ**—बृहद्दर्भ का पुत्र राजा बृहन्मना था। उसकी दो पत्नियां थीं, जो चैद्यराज की पुत्रियां थीं—यशोदेवी और सत्या, इनसे वंश दो भागों में बंट गया। यशोदेवी से जयद्रथ उत्पन्न हुआ। सत्या से ब्रह्मक्षत्रोत्तर पुत्र विजय प्रसिद्ध हुआ। विजय का पुत्र धृति था, उसका पुत्र हुआ धृतव्रत। धृतव्रत का पुत्र था महायशस्वी सत्यकर्मा। सत्यकर्मा का पुत्र था अधिरथ सूत जिसने कुन्तीपुत्र कर्ण को ग्रहण किया। अतः कर्ण इसी कारण 'सूतपुत्र' कहलाया।

कर्ण का पुत्र हुआ वृषसेन और उसका पुत्र हुआ वृष।

**पाण्डव—जनमेजयवंशः**—

जनमेजयस्य के पुत्राः पठ्यन्ते लौमहर्षणे ।
कस्मिन् प्रतिष्ठितो वंशः पाण्डवानां महात्मनाम् ।

× × ×

पारीक्षितस्य काश्यायां द्वौ पुत्रौ सम्बभूवतुः ।
चन्द्रापीडश्च नृपतिः सूर्यापीडश्च मोक्षवित् ।
चन्द्रापीडस्य पुत्राणां शतमुत्तमधन्विनाम् ।
जनमेजय इत्येवं क्षात्रं भुवि परिश्रुतम् ॥
तेषां श्रेष्ठस्तु राजासीत् पुरे वारणसाह्वये ।
सत्यकर्णो महाबाहुर्यज्वा विपुलदक्षिणः ।
सत्यकर्णस्य दायादः श्वेतकर्णः प्रतापवान् ।
अपुत्रः स तु धर्मात्मा प्रविवेश तपोवनम् ।
तस्माद् वनगताद् गर्भं यादवी प्रत्यपद्यत ।
सुचारोर्दुहिता सुभ्रूर्मानिनी भ्रातृमालिनी ।

× × ×

कुमारं तं परित्यज्य भर्तारं चान्वगच्छत।

× × ×

श्रविष्ठायाश्च पुत्रौ द्वौ पिप्पलादश्च कौशिकः।
दृष्ट्वा कृपान्वितौ गृह्य प्राक्षालयतां जलैः॥
निघृष्टौ तस्य तौ पार्श्वौ शिलायां रुधिरप्लुतौ॥
अजश्यामौ तु पार्श्वौ तावुभावपि समाहितौ।
तथैव तु समारूढ़ो अजपार्श्वस्ततोऽभवत्॥
ततोऽजपार्श्व इति तौ चक्राते तस्य नाम ह।
स तु वेमकशालायां द्विजाभ्यामभिवर्धितः॥
वेमकस्य तु भार्या तमुद्वहत् पुत्रकारणात्।
वेमक्याः स तु पुत्रोऽभूद् ब्राह्मणौ सचिवौ च तौ।

(हरिवंशे ३।१ अ०)

अर्थ—(शौनक ने सौति से पूछा)—हे लौमहर्षणे ! जनमेजय के कौन से पुत्र पुराण में पढ़े जाते हैं और श्रेष्ठ पाण्डववंश किस पुत्र में प्रतिष्ठित है ?

(लौमहर्षणि—उग्रश्रवा सूत ने उत्तर दिया)—हे शौनक ! पारीक्षित् जनमेजय के काशिराजपुत्री वपुष्टमा से दो पुत्र उत्पन्न हुए—राजा चन्द्रापीड और मोक्षविद् सूर्यापीड। चन्द्रापीड के सौ उत्तम धनुर्धारी पुत्र पृथिवी पर (इतिहास में) 'जनमेजय या जानमेजय' नाम से ही विख्यात थे। हस्तिनापुर में उनमें सबसे बड़ा पुत्र महाबाहु सत्यकर्ण राजा हुआ, जो बड़ा भारी यज्ञकर्त्ता और विपुल दक्षिणाओं का दाता था।

सत्यकर्ण का उत्तराधिकारी प्रतापी राजा श्वेतकर्ण हुआ। वह बिना पुत्र के ही धर्माचरण करता हुआ तपोवन में चला गया। उसके वन में जाने से (पूर्व) ही यादव बंश की कन्या, सुचारु की पुत्री मानिनी सुभ्रू, जो अनेक भ्राताओं वाली थी, उसने (श्वेत कर्ण से ही) गर्भ धारण किया।

वह कुमार (शिशु) को छोड़कर अपने पति के पास तपोवन में ही चली गई।

श्रविष्ठा के दो पुत्र—पिप्पलाद और कौशिक मुनियों ने कृपान्वित होकर उस शिशु को देखा। उसको ग्रहण करके स्नानादि कराया। उसके (शिशु के) दोनों पार्श्व वन में शिलाओं से छिल गये थे और रुधिर से सने हुए थे। वे पार्श्व बकरे के पार्श्व के समान होगये थे। अतः उसका नाम मुनियों ने 'अजपार्श्व' (अज) रख दिया। उसका पालन वेमक की पाठशाला में दोनों ब्राह्मण मुनियों ने किया। वेमक मुनि की पत्नी ने पुत्र की इच्छा से उसका पालन पोषण किया। वह वेमकी का पुत्र हुआ और वे दोनों ब्राह्मण उसके सचिव (मन्त्री) बने।

(इसी 'अजपार्श्व' का दूसरा नाम अधिसीमकृष्ण था)।

---

## सप्तमोऽध्याय

# कलियुगीनराजवंशाः

## (पुराणपाठात् संकलिताः पार्जीटरकृतात्)

**सूत उवाच—**

यथा मे कीर्तितम् पूर्वं व्यासेनाक्लिष्टकर्मणा ।
भाव्यं कलियुगं चैव तथा मन्वन्तराणि च ।।
अनागतानि सर्वाणि ब्रुवतो मे निबोधत ।
अत ऊर्ध्वम् प्रवक्ष्यामि भविष्ये ये नृपास्तथा ।।
ऐलांश्चैव तथा इक्ष्वाकून् सौद्युम्नांश्चैव पार्थिवान् ।
येषु संस्थाप्यते क्षत्रम् ऐलैक्ष्वाकुकुलम् शुभम् ।।
तान् सर्वान् कीर्तयिष्यामि भविष्ये कथितान् नृपान् ।
तेभ्यो परेऽपि ये चान्ये उत्पत्स्यन्ते नृपाः पुनः ।।
क्षत्राः पारशवाः शूद्रास्तथाऽन्ये ये बहिश्चराः ।
आन्ध्राः शकाः पुलिन्दाश्च कुलिन्दा यवनास्तथा ।।
कैवर्ताभीरा ये चान्ये याश्चान्या म्लेच्छजातयः ।
पौरवा वीतिहोत्रा वै वैदिशा पंचकोशजाः ।।
मेकलाः कोशलाः पौण्ड्रा गोनर्दा············।
शुनीधर्माः शका नीपा याश्चान्या म्लेच्छजातयः ।
वर्षाग्रतो प्रवक्ष्यामि नामतश्चैव तान् नृपान् ।।

**अर्थ**—हे ऋषियो ! जिस प्रकार पहिले मुझसे सहज कार्य करनेवाले श्री व्यास जी ने कहा—भावी कलियुग और मन्वन्तरों का वृत्तान्त, वही भविष्य के सभी वर्णन मैं कहता हूं । आप सुनें । इससे आगे मैं आपसे भविष्य में होनेवाले राजाओं का वर्णन करूंगा । ऐल, ऐक्ष्वाक और सौद्युम्न राजाओं के मैं नाम कहूंगा । जिनसे इन ऐल और ऐक्ष्वाक वंशों की समाप्ति हुई । उन सभी भविष्य कालिक राजाओं को मैं कहूंगा । इनके अतिरिक्त आगे जो क्षत्रिय, पाराशव, शूद्र तथा बाह्य म्लेच्छ राजगण—आन्ध्र, शक, पुलिन्द, कुलिन्द, यवन, कैवर्त, आभीर

तथा पौरव, वीतिहोत्र, वैदिश, पंचकोशल, मेकल, कोसल, पौण्ड्र, गोनर्द, शुनीधर्म, शक, नीप तथा अन्य म्लेच्छ जातियां जो भी राजगण होंगे उनके राज्यकाल और नामों सहित बताऊंगा।

**पौरववंशः—**

अभिमन्योः परीक्षित्तु पुत्रः परपुरंजयः।
जनमेजयः पारीक्षितः पुत्रः परमधार्मिकः॥
जनमेजयात् शतानीक तस्माज्जज्ञे स वीर्यवान्॥
पुत्रोऽश्वमेधदत्तोऽभूच्च शतानीकस्य वीर्यवान्।
पुत्रोऽश्वमेधदत्ताद् वै जातः परपुरंजयः।
अधिसीमकृष्णो धर्मात्मा साम्प्रतं यो महायशाः॥
अधिसीमकृष्णपुत्रो विचक्षुर्भविता नृपः।
गंगयाऽपहृते तस्मिन् नगरे नागसाह्वये॥
त्यक्त्वा निचक्षुः नगरं कौशाम्ब्यां स निवत्स्यति।
भविष्यस्तु सुतः तस्य महाबलपराक्रमः॥

अर्थ—अभिमन्यु का पुत्र शत्रुघाती परीक्षित् हुआ। उसका पुत्र परमधार्मिक पारीक्षित जनमेजय था। जनमेजय से बलवान् राजा शतानीक उत्पन्न हुआ। शतानीक का पुत्र बलवान् राजा अश्वमेधदत्त हुआ जो दूसरों के राज्यों (नगरों) को जीतने वाला था। अश्वमेधदत्त का धर्मात्मा और महायशस्वी पुत्र हुआ अधिसीमकृष्ण, जो इस समय (उग्रश्रवा सौति के समय) राज्य कर रहा है।

अधिसीमकृष्ण (अजपार्श्व) का पुत्र होगा निचक्षु, जो गंगा के द्वारा हस्तिनापुर को बहाये जाने पर, उसे छोड़कर कौशाम्बी को राजधानी बनाकर उसे बसायेगा। उसका पुत्र बड़ा यशस्वी और महाबली होगा।

भूरिज्येष्ठसुतस्तस्य तस्य चित्ररथः स्मृतः।
शुचिरथः चित्ररथाद् वृष्णिमांश्च शुचिरथात्।
वृष्णिमतः सुषेणश्च भविष्यति शुचिः नृपः॥
तस्मात् सुषेणाद् भविता सुनीथो नाम पार्थिवः।
रुचहः सुनीथाद् भविता नृचक्षुर्भविता तथा।
नृचक्षुषदायादो भविता वै सुखीबलः॥
सुखीबलसुतश्चापि भावि राजा पारिप्लवः।
पारिप्लवसुतश्चापि भविता सुनयो नृपः।
मेधावी तस्य दायादो भविष्यति नराधिपः॥
मेधाविनः सुतश्चापि भविष्यति नृपञ्जयः।

ध्रुवो भाव्यः सुतस्तस्य तिग्मात्मा तस्य चात्मजः ।
तिग्मात्माद् बृहद्रथो भाव्यो वसुदानो बृहद्रथात् ।
वसुदानात् शतानीको भविष्योदयनस्तथा ।।
भविष्यते चोदयनात् वीरो राजा वहीनरः ।
वहीनरात्मजश्चैव दण्डपाणिर्भविष्यति ।।
दण्डपाणेर्निरमित्रो निरमित्राद् तु क्षेमकः ।
पंचविंशः नृपा ह्येते भविष्याः पुरुवंशजाः ।
अत्रानुवंशश्लोकोऽयं गीतो पुरा पुराविदैः ।
ब्रह्मक्षत्रस्य यो योनिर्वंशो देवर्षिसत्कृतः ।
क्षेमकम् प्राप्य राजानं संस्थाम् प्राप्स्यति वै कलौ ।
इत्येष पौरवो वंशो यथावत् परिकीर्तितः ।
धीमतः पाण्डुपुत्रस्यार्जुनस्य महात्मनः ।।

**अर्थ**—निचक्षु का पुत्र भूरिज्येष्ठ होगा और उसका पुत्र होगा चित्ररथ। चित्ररथ का पुत्र होगा शुचिरथ और शुचिरथ का पुत्र होगा वृष्णिमान्। वृष्णिमान् का पुत्र होगा सुषेण और उसका पुत्र होगा सुनीथ नाम का राजा। सुनीथ का पुत्र होगा रुचह और उसका पुत्र होगा नृचक्षु। नृचक्षु का पुत्र होगा सुखीबल और उसका पुत्र होगा राजा परिप्लव। परिप्लव का पुत्र होगा राजा सुनय और उसका उत्तराधिकारी होगा मेधावी नाम का राजा। मेधावी का पुत्र राजा नृपंजय। उसका पुत्र होगा ध्रुव तथा उसका पुत्र होगा तिग्मात्मा। तिग्मात्मा से उसका पुत्र बृहद्रथ भावी राजा होगा और बृहद्रथ का पुत्र होगा वसुदान। वसुदान का पुत्र होगा शतानीक तथा उसका पुत्र होगा उदयन। राजा उदयन से उसका वीरपुत्र होगा वहीनर और वहीनर का उत्तराधिकारी होगा राजा दण्डपाणि। दण्डपाणि का पुत्र होगा निरमित्र और निरमित्र का पुत्र होगा क्षेमक।

ये पच्चीस पौरव (भारत-पाण्डववंशीय) भविष्यकालिक (कलियुगीन) राजा होंगे। इस सम्बन्ध में पुराविदों (इतिहासज्ञों) ने यह अनुवंश श्लोक गाया है— "ब्रह्म और क्षत्र की योनि (मूल) यह देवर्षियों द्वारा सत्कृत वंश राजा क्षेमक के पश्चात् कलियुग में समाप्त हो जायेगा।

इस प्रकार यह पौरववंश महाबली और बुद्धिमान् पाण्डव अर्जुन का वंश यथावत् कहा गया।

**इक्ष्वाकुवंशः—**

अत ऊर्ध्वम् प्रवक्ष्यामि इक्ष्वाकूणाम् महात्मनाम् ।

बृहद्बलस्य दायादो वीरो राजा बृहत्क्षपः ॥
उरुक्षपः सुतस्तस्य वत्सव्यूह उरुक्षपात् ।
वत्सव्यूहात् प्रतिव्योमस्तस्य पुत्रो दिवाकरः ।
यश्च साम्प्रतमध्यास्ते अयोध्यां नगरीं शुभाम् ॥

अर्थ—(सूत जी ने कहा)—अब मैं आगे महाबली ऐक्ष्वाकों का वर्णन करूंगा ।

बृहद्बल का उत्तराधिकारी राजा बृहत्क्षप हुआ । उसका पुत्र हुआ उरुक्षप । उरुक्षप का पुत्र हुआ वत्सव्यूह और वत्सव्यूह का पुत्र हुआ प्रतिव्योम तथा उसका पुत्र था राजा दिवाकर, जो इस समय (अधिसीमकृष्ण पाण्डव और उग्रश्रवा सौति के समय), अयोध्या में राज्य कर रहा है ।

दिवाकरस्य पुत्रो वै भविता सहदेवो महामनाः ।
तस्य भानुरथो भाव्यः प्रतीताश्वश्च ततः सुतः ॥
प्रतीताश्वसुतश्चापि सुप्रतीको भविष्यति ।
मरुदेवः सुतस्तस्य सुनक्षत्रश्च ततः सुतः ॥
किन्नराश्वः सुनक्षत्राद् भविष्यति परंतपः ।
भविता चान्तरिक्षस्तु किन्नराश्वस्य सुतो महान् ।
अन्तरिक्षात् सुपर्णस्तु सुपर्णाच्चाप्यमित्रजित् ।
पुत्रस्तस्य बृहद्राजो धर्मी तस्य सुतः स्मृतः ॥
पुत्रः कृतंजयो नामा धर्मिणः स भविष्यति ।
कृतंजयसुतो विद्वान् भविष्यति रणंजयः ।
भविता संजयश्चापि वीरो राजा रणंजयात् ॥
रणंजयस्य सुतो शाक्यः शाक्याच्च शुद्धोधनोऽभवत् ।
शुद्धोधनस्य भविता सिद्धार्थो राहुलस्तस्य वै सुतः ।
प्रसेनजित् ततो भविता क्षुद्रको भविता ततः ।
क्षुद्रकात् कुलको भविता कुलकात् सुरथः स्मृतः ।
सुमित्रः सुरथस्यापि अन्त्यश्च भविता नृपः ।
एत ऐक्ष्वाकवः प्रोक्ता भविष्या ये कलौ युगे ॥
बृहद्बलान्वये जाता भविष्याः कुलवर्धनाः ।
निश्शेषाः कथिताश्चैव नृपा ये वै पुरातनाः ।
अत्रानुवंशश्लोकोऽयं विप्रैः गीतो पुरातनैः ।
इक्ष्वाकूणामयं वंशो सुमित्रान्तो भविष्यति ।
सुमित्रं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ।

अर्थ—दिवाकर का पुत्र होगा महामनस्वी राजा सहदेव। उसका पुत्र होगा भानुरथ और उसका पुत्र होगा प्रतीताश्व। प्रतीताश्व का पुत्र होगा सुप्रतीक और उसका पुत्र होगा मरुदेव और उसका पुत्र होगा सुनक्षत्र। सुनक्षत्र का पुत्र होगा किन्नराश्व और किन्नराश्व का महान् पुत्र होगा अन्तरिक्ष। अन्तरिक्ष का पुत्र होगा सुपर्ण और सुपर्ण का पुत्र होगा अमित्रजित्। उसका पुत्र होगा बृहद्भाज। उसका पुत्र होगा धर्मी। धर्मी का पुत्र होगा कृतंजय। कृतंजय का विद्वान् पुत्र होगा रणंजय। रणंजय का भावी पुत्र होगा वीर राजा संजय। संजय का पुत्र होगा शाक्य और शाक्य का पुत्र होगा शुद्धोधन। शुद्धोधन का पुत्र होगा सिद्धार्थ (गौतम बुद्ध) और उसका पुत्र होगा राहुल। तब राजा प्रसेनजित् होगा और उसका पुत्र होगा क्षुद्रक। क्षुद्रक का पुत्र होगा कुलक। कुलक से उसका पुत्र होगा राजा सुरथ। सुरथ का पुत्र राजा सुमित्र इस वंश का अन्तिम राजा होगा।

ये ऐक्ष्वाक राजा बृहद्बल के कुल में भविष्य युग (कलियुग) में हुए, जो इस कुल के वर्धक थे। मैंने पुरातन समस्त ऐक्ष्वाक वंश के राजा बता दिये। इस सम्बन्ध में प्राचीन इतिहासविद् विद्वानों ने यह श्लोक गाया है—"ऐक्ष्वाकों का यह वंश राजा सुमित्र तक ही रहेगा, इसके पश्चात् इसका अन्त हो जायेगा। सुमित्र को प्राप्त करके यह ऐक्ष्वाक वंश कलियुग में समाप्त हो जायेगा।"

**बार्हद्रथवंशः—**

अत ऊर्ध्वम् प्रवक्ष्यामि मागधा ये बृहद्रथाः।
जरासन्धस्य ये वंशे सहदेवान्वये नृपाः।
अतीता वर्तमानाश्च भविष्याश्च तथा पुनः॥
प्राधान्यतो प्रवक्ष्यामि गदतो मे निबोधत।
संग्रामे भारते वृत्ते सहदेवे निपातिते।
सोमाधिस्तस्य दायादो राजाऽभूत् स गिरिव्रजे।
पंचाशतं तथाऽष्टौ च समा राज्यमकारयत्।
श्रुतश्रवाश्चतुषष्टि समास्तस्यान्वयेऽभवत्॥
अयुतायुस्तु षड्विंशद् राज्यं वर्षाण्यकारयत्।
चत्वारिंशत् समास्तस्य निरमित्रो दिवं गतः।
पंचाशतं समाः षट् च सुक्षत्रो प्राप्तवान् महीम्॥
त्रयोविंशत् बृहत्कर्मा राज्यं वर्षाण्यकारयत्॥
सेनजित् साम्प्रतं चापि भुक्त्वा पंचाशतं महीम्।
श्रुतंजयस्तु वर्षाणि चत्वारिंशद् भविष्यति।

महाबलो महाबाहुर्महाबुद्धिपराक्रमः ।
अष्टाविंशतिवर्षाणि महीम् प्राप्स्यति वै विभुः ।
अष्टौ पंचाशतं चाब्दान् राज्ये स्थास्यति वै शुचिः ॥
अष्टाविंशतिसमा राजा क्षेमो भोक्ष्यते वै महीम् ।
सुव्रतस्तु चतुःषष्टिं राज्यम् प्राप्स्यति वीर्यवान् ॥
पंचविंशतिवर्षाणि सुनेत्रो भोक्ष्यते महीम् ।
भोक्ष्यते निव्रतिश्चैमामष्टाविंशतिः वै समाः ।
त्रिनेत्रो भोक्ष्यते ततः, चत्वारिंशत् तथाष्टौ च दृढ़सेनो भविष्यति ।
त्रयस्त्रिंशत्तु वर्षाणि महीनेत्रो प्रकाशते ।
द्वात्रिंशत्तु समा राजा सुचलस्तु भविष्यति ॥
चत्वारिंशत् समा राज्यं सुनेत्रो भोक्ष्यते ततः ।
सत्यजित् पृथ्वीम् राजा त्रयोविंशतिं भोक्ष्यते ।
प्राप्येमाम् विश्वजिच्चापि पंचविंशद् भविष्यति ।
रिपुजंयस्तु वर्षाणि पंचाशत् प्राप्स्यते महीम् ॥
द्वात्रिंशच्च नृपा ह्येते भवितारो बृहद्रथाः ।
पूर्णं वर्षसहस्रं वै तेषां राज्यं भविष्यति ॥

अर्थ—अब आगे मैं मगध के बार्हद्रथ राजाओं का वर्णन करूंगा, जो जरासन्धपुत्र सहदेव के कुल में हुए । भूतकाल, वर्तमान और भविष्य में जो राजा, इस वंश में हुए, उनका वर्णन मुझसे सुनो ।

महाभारतयुद्ध में सहदेव के मारे जाने पर सोमाधि उसका उत्तराधिकारी राजधानी गिरिव्रज (राजगृह) में हुआ । उसने वहां ५८ वर्षों तक राज्य किया । उसके पुत्र श्रुतश्रवा ने ६४ वर्ष राज्य किया । उसके पुत्र अयुतायु ने २६ वर्ष राज्य किया । उसके उत्तराधिकारी निरमित्र ने ४० वर्ष राज्य करके स्वर्ग सिधार गया । इसके पश्चात् ५६ वर्ष तक राजा सुक्षत्र प्रतापी ने मगध में राज्य किया । उसके पश्चात् २३ वर्ष पर्यन्त बृहत्कर्मा ने राज्य किया । इस समय (अधिसीमकृष्ण के समकालिक) सेनाजित् ५० वर्ष राज्य करेगा । उसका उत्तराधिकारी श्रुतंजय ४० वर्ष राज्य करेगा, वह महाबली, महाबाहु, महाबुद्धि तथा महापराक्रमी था । इसके अनन्तर २८ वर्ष राजा विभु पृथिवी पर राज्य करेगा । तदनन्तर राजा शुचि ५८ वर्ष तक राज्य करेगा । उसके पश्चात् राजा क्षेम २८ वर्षों तक पृथिवी का राज्य करेगा । उसका उत्तराधिकारी सुव्रत ६४ वर्ष तक राज्य करेगा । तब राजा सुनेत्र २५ वर्ष तक राज्य भोगेगा । तदनन्तर निव्रति २८ वर्ष पर्यन्त राज्य करेगा । तब राजा त्रिनेत्र

४० वर्ष तक राज्य करेगा और ८ वर्ष दृढ़सेन राजा रहेगा। उसके पश्चात् राजा महीनेत्र ३३ वर्ष तक शासन करेगा। उसके पश्चात् राजा सुचल ३२ वर्ष राज्य करेगा। तब सुनेत्र ४० वर्ष तक राज्य भोगेगा। उसके बाद राजा सत्यजित् २३ वर्ष तक राज्य करेगा। तदनन्तर राजा विश्वजित् २५ वर्ष तक राज्य करेगा। उसके बाद राजा रिपुंजय ५० वर्ष राजा रहेगा।

ये २२ बार्हद्रथ मागध राजा सम्पूर्ण एक सहस्र (१०००) वर्षों तक राज्य करेंगे।

**प्रद्योतवंशः—**

बृहद्रथेष्वतीतेषु वीतिहोत्रेषु अवन्तिषु।
पुलकः स्वामिनं हत्वा स्वपुत्रमभिषेक्ष्यति॥
मिषतां क्षत्रियाणां च बालकः।
पुलकोद्भवः सैव प्रणतसामन्तो भविष्यो नयवर्जितः।
त्रयोविंशत् समा राजा भविता स नरोत्तमः।
चतुर्विंशत्समा राजा पालको भविता ततः।
विशाखयूपो भविता नृपः पंचाशतं समाः।
एकविंशत् समा राजा सूर्यस्तु भविष्यति॥
भविष्यति समा विंशत् तत्सुतो नन्दिवर्धनः।
द्विपंचाशत् ततो भुक्त्वा अष्टात्रिंशत् शतम्।
भाव्याः प्रद्योताः पंच ते सुताः॥

**अर्थ**—(मगध में) बार्हद्रथों और अवन्ति में वीतिहोत्रों की राज्य समाप्ति पर मन्त्री पुलक ने (मागध राजा रिपुंजय) राजा को मारकर अपने 'बालक' पुत्र को राजा बनायेगा। सभी क्षत्रिय राजाओं के मध्य पुलकपुत्र बालक प्रद्योत नयवर्जित परन्तु प्रणतसामन्त (सामन्त वंश में) था। वह श्रेष्ठ राजा २३ वर्ष तक राज्य करेगा। उसका पुत्र पालक २४ वर्ष राज्य करेगा। तदनन्तर राजा विशाखयूप ५० वर्ष तक मगध में राज्य करेगा। पुनः राजा सूर्य २१ वर्ष तक राज्य करेगा। उसका पुत्र नन्दिवर्धन २० वर्ष राज्य करेगा। ये ५ प्रद्योतवंशीय राजा १३८ वर्ष तक राज्य करेंगे।

**शिशुनागवंशः—**

हत्वा तेषां यशः कृत्स्नं शिशुनागो भविष्यति।
वाराणस्यां सुतं स्थाप्याश्रयति गिरिव्रजम्।
शिशुनागश्च वर्षाणि चत्वारिंशद् भविष्यति।

काकवर्णः सुतस्तस्य षट्त्रिंशत् प्राप्स्यते महीम् ॥
षट्त्रिंशच्चैव वर्षाणि क्षेमधर्मा भविष्यति ।
चत्वारिंशत् समा राज्यं क्षत्रौजाः प्राप्स्यते ततः ।
अष्टाविंशतिवर्षाणि बिम्बसारो भविष्यति ।
अजातशत्रुभविता पंचविंशत् समा नृपः ।
पंचविंशत् समा राजा दर्शको तु भविष्यति ॥
उदायी भविता तस्माद् त्रयस्त्रिंशत् समा नृपः ।
सैव पुरवरम् पृथिव्यां कुसुमाह्वयम् ।
गङ्गाया दक्षिणे कूले चतुर्थेऽब्दे करिष्यति ।
चत्वारिंशत् समा भाव्यो राजा वै नन्दिवर्धनः ।
चत्वारिंशत् त्रयश्चैव महानन्दिर्भविष्यति ।
इत्येते भवितारो वै शैशुनागा नृपा दश ॥
शतानि त्रीणि वर्षाणि षष्टिवर्षाधिकानि तु ।
शिशुनागा भविष्यन्ति राजानः क्षत्रबन्धवः ॥

**अर्थ**—इन प्रद्योतों के यश का नाश करके शिशुनाग राजा बनेगा। वह अपने पुत्र को वाराणसी में राजा बनाकर स्वयं गिरिव्रज (राजगृह) में राज्य करेगा। शिशुनाग का राज्य ४० वर्ष पर्यन्त रहेगा। उसका पुत्र राजा काकवर्ण ३६ वर्ष राज्य करेगा। उसके पश्चात् राजा क्षेमधर्मा का राज्य ३६ वर्ष रहेगा। इसके पश्चात् राजा क्षत्रौजा ४० वर्ष तक राज्य करेगा। तदनन्तर उसका पुत्र बिम्बसार २८ वर्ष राज्य करेगा। बिम्बसार का पुत्र अजातशत्रु २५ वर्ष तक राज्य करेगा। उसके पश्चात् राजा दर्शक २५ वर्ष तक रहेगा। उसका पुत्र उदायी ३३ वर्ष राज्य करेगा। वही पृथिवी (मगध) पर श्रेष्ठ पाटलिपुत्र नगर को अपने राज्यकाल के चतुर्थ वर्ष में गंगा के दक्षिणी तट पर बसायेगा। उदायी के पश्चात् राजा नन्दिवर्धन ४० वर्ष राज्य करेगा। राजा महानदी ४३ वर्ष तक राज्य करेगा।

ये १० शैशुनाग राजा ३६० वर्ष राज्य करेंगे। (ब्राह्मणों के अनुसार शुद्धि की दृष्टि से) शैशुनाग राजा निम्नकोटि के क्षत्रिय (वस्तुतः नाग जाति के) थे।

**प्राक्शैशुनागा समकालिकावंशाः—**

एते सार्धम् भविष्यन्ति तावत् कालम् नृपाः परे ।
तुल्यकालम् भविष्यन्ति सर्वे ह्येते महीक्षितः ॥
ऐक्ष्वाकश्चतुर्विंशत् पांचाला सप्तविंशतिः ।

काशेयास्तु चतुर्विंशत् अष्टाविंशतिर्हैहयाः ।।
कलिङ्गाश्चैव द्वात्रिंशत् अश्मकाः पंचविंशतिः ।
कौरवाश्चापि षट्त्रिंशत् अष्टाविंशतिः मैथिलाः ।
शूरसेनाश्च त्रयोविंशत् वीतिहोत्राश्च विंशतिः ।
एते सर्वे भविष्यन्ति एककाले महीक्षितः ।
(वायुपुराणे )

**अर्थ**—ये राजा प्रायः एक ही समय में समकालिक शासक होंगे। यथा २४ ऐक्ष्वाक राजा, २७ पांचाल राजा, ३४ काशेय राजा, २८ हैहय राजा, ३२ कालिंग नृपति गण, २५ अश्मक राजा, ३६ कौरव राजा, २८ मैथिल राजा, २३ शूरसेन और २० वीतिहोत्र। ये सभी (शैशुनागों से पूर्व) प्रायः समकालिक राजा थे।

**नन्दवंशः**—

महानन्दिसुतश्चापि शूद्रायां कलिकांशजः ।
उत्पत्स्यते महापद्मः सर्वक्षत्रान्तको नृपः ।
ततः प्रभृतिर्राजानो भविष्याः शूद्रयोनयः ।।
एकराट् स महापद्म एकक्षत्रो भविष्यति ।
अष्टाशीति तु वर्षाणि पृथ्वीम् च भविष्यति ।
सर्वक्षत्रमथोद्धृत्य भाविनार्थेन चोदितः ।
सुकल्पादिसुता ह्यष्टौ समा द्वादश ते नृपाः ।।
महापद्मस्य पर्याये भविष्यन्ति नृपाः क्रमात् ।
उद्धरिष्यति तान् सर्वान् कौटिल्यो वै द्विरष्टभिः ।
भुक्त्वा महीम् वर्षशतम् ततो मौर्यान् गमिष्यति ।।

**अर्थ**—कलि का अंश, महानन्दी का पुत्र महापद्म नन्द शूद्रा से उत्पन्न होगा। वह महापद्म सभी क्षत्रियों का अन्तक होगा। उसके पश्चात् प्रायः शूद्र जातीय राजा होंगे। वह महापद्म एकक्षत्र एकराट् सम्राट् होगा। वह ८८ वर्ष तक पृथिवी का राज्य करेगा। भावी अर्थ से प्रेरित वह सभी क्षत्रवंशों का उच्छेद करेगा। उसके सुकल्पादि आठ पुत्र १२ वर्ष राज्य करेंगे। महापद्मयुग में ही ये राजा होंगे। (ये सभी नन्दवंश के राजा कहलायेंगे।)

कौटिल्य (चाणक्य) इन नन्द राजाओं का १६ वर्ष में उच्छेद करेगा, तब यह पृथिवी (भारतवर्ष) "१०० वर्ष नन्दों के अधीन" रहने के पश्चात् मौर्यों के पास चली जायेगी।

**मौर्यवंशः—**

कौटिल्यश्चन्द्रगुप्तं तु ततो राज्येऽभिषेक्ष्यति ।
षट्त्रिंशत्तु समा राजा भविता अशोक एव च ॥
सप्तानां दशवर्षाणि तस्य नप्ता भविष्यति ।
राजा दशरथोऽष्टौ तस्य पुत्रो भविष्यति ॥
भविता नववर्षाणि तस्य पुत्रश्चैव सम्प्रतिः ।
भविता शतधन्वा च तस्य पुत्रस्तु षट् स्मृतः ।
बृहद्रथस्तु वर्षाणि तस्य पुत्रं च सप्ततिः ॥
इत्येते दश मौर्यास्तु ये भोक्ष्यन्ति वसुन्धराम् ।
सप्तत्रिंशत् शतम् पूर्णं तेभ्यः शुङ्गान् गमिष्यति ॥
चन्द्रगुप्तं नृपम् राज्ये कौटिल्यः स्थापयिष्यति ।
चतुर्विंशत् समा राजा चन्द्रगुप्तो भविष्यति ॥
भविता बिन्दुसारस्तु पंचविंशत् समा नृपः ।
षट्त्रिंशत्तु समा राजा भविताऽशोक एव च ॥
तस्य पुत्रः कुणालस्तु वर्षाणि अष्टौ भविष्यति ।
कुणालतनयश्चाष्टौ भोक्ता वै बन्धुपालितः ।
दशनाह सप्त वर्षाणि तेषां नप्ता भविष्यति ।
राजा दशरथस्तु अष्टौ तस्य पुत्रो भविष्यति ।
भविता नववर्षाणि तस्य पुत्रस्तु सम्प्रतिः ।
शालिशूकः समा राजा त्रयोदश भविष्यति ।
सप्तवर्षाणि देवधर्मा भविष्यति नराधिपः ।
राजा शतधनुश्चाष्टौ तस्य पुत्रो भविष्यति ।
बृहद्रथस्तु वर्षाणि सप्ताशितिम् भविष्यति ॥
इत्येते नवमौर्यास्तु ये भोक्ष्यन्ति वसुन्धराम् ।
सप्तत्रिंशत् शतं पूर्णं तेभ्यः शुङ्गो भविष्यति ॥

अर्थ—कौटिल्य राज्य पर चन्द्रगुप्त को अभिषिक्त करेगा। ३६ वर्ष तक राजा अशोक राजा रहेगा। अशोक का नाती ७ वर्ष राजा रहेगा। उसका उत्तराधिकारी दशरथ ८ वर्ष राज्य करेगा। उसका पुत्र सम्प्रति नौ वर्ष राज्य करेगा। उसके पश्चात् शतधन्वा राजा होगा। उसका पुत्र ६ वर्ष राजा होगा। तदनन्तर बृहद्रथ ७० वर्ष राज्य करेगा। इस प्रकार दश मौर्य राजा पृथिवी पर १३७ वर्ष राज्य करेंगे। पुनः पृथिवी शुंगों के पास चली जायेगी।

कौटिल्य राजा चन्द्रगुप्त मौर्य को शासन पर स्थापित करेगा। चन्द्रगुप्त

२४ वर्ष तक राज्य करेगा। तब उसका पुत्र बिन्दुसार २५ वर्ष राज्य करेगा। तदनन्तर राजा अशोक ३६ वर्ष शासन करेगा। उसका पुत्र कुणाल ८ वर्ष राज्य करेगा। कुणाल का पुत्र बन्धुपालित भी ८ वर्ष राज्य करेगा। उसका नप्ता (अशोक का नाती दशरथ) सात वर्ष राज्य करेगा। दशरथ का पुत्र सम्प्रति ९ वर्ष राज्य करेगा। तदनन्तर शालिशूक १३ वर्ष शासन करेगा। उसके पश्चात् राजा देवधर्मा ७ वर्ष राजा होगा। राजा शतधनु ८ वर्ष और उसका पुत्र बृहद्रथ ८७ वर्ष राज्य करेगा। इस प्रकार नौ मौर्य राजा इस पृथिवी को १३७ वर्ष भोगेंगे। तदनन्तर पृथिवी का शासन शुंगों के पास चला जायेगा।

**शुङ्गवंशः—**

पुष्यमित्रस्तु सेनानीरुद्धृत्य स बृहद्रथम्।
कारयिष्यति वै राज्यं षट्त्रिंशत् समा नृपः॥
अग्निमित्रसुतश्चाष्टौ भविष्यति समा नृपः।
भविताऽपि वसुज्येष्ठः सप्त वर्षाणि वै नृपः।
वसुज्येष्ठसुतो भाव्यो दश वर्षाणि पार्थिवः।
ततोऽन्धकः समे द्वे तु तस्य पुत्रो भविष्यति।
भविष्यति समाः तस्मात् त्रीण्येवम् पुलिन्दकः।
भविष्यति च मेधस्तु त्रीणि वर्षाणि वै ततः।
भविता वज्रमित्रस्तु राजा पुनर्नव समाः।
द्वात्रिंशत्तु समा भागः समाभागात् ततो नृपः।
भविष्यति सुतस्तस्य देवभूमिः समा दश।
दशैते शुङ्गा राजानो भोक्ष्यन्तीमां वसुन्धराम्।
शतं पूर्णं दश द्वे च ततः कण्वान् गमिष्यति॥

**अर्थ**—सेनापति पुष्यमित्र शुंग बृहद्रथ मौर्य का उच्छेद करके ३६ वर्ष राज्य करेगा। उसका पुत्र अग्निमित्र ८ वर्ष राज्य करेगा। उसका पुत्र वसुज्येष्ठ ७ वर्ष राज्य करेगा। वसुज्येष्ठ का पुत्र १० वर्ष राजा रहेगा। तदनन्तर उसका पुत्र अन्धक दो वर्ष राज्य करेगा। तीन वर्ष पुलिन्दक राज्य करेगा। तदनन्तर मेध तीन वर्ष राजा होगा। वज्रमित्र नौ वर्ष राज्य करेगा। ३२ वर्ष भागमित्र राज्य करेगा। उसका पुत्र देवभूमि १० वर्ष राजा रहेगा।

ये १० शुंग राजा ११२ वर्ष राज्य करेंगे, तत्पश्चात् राज्य काण्वों के पास चला जायेगा।

**काण्ववंशः—**

अमात्यो वासुदेवस्तु बाल्याद् व्यसनिनं नृपम्।

देवभूमिमथोत्साद्य शुङ्गांस्तु भविता नृपः ॥
भविष्यति समा राजा नव काण्वायनो द्विजः ।
भूमिमित्रः सुतस्तस्य चतुर्दश भविष्यति ।
नारायणः सुतस्तस्य भविता द्वादशैव तु ।
सुशर्मा तत्सुतश्चापि भविष्यति दशैव तु ।
इत्येते शुङ्गभृत्यास्तु स्मृताः काण्वायना नृपाः ।
चत्वारस्तु द्विजा ह्येते काण्वा भोक्ष्यन्ति वै महीम् ।
चत्वारिंशत् पंच चैव भोक्ष्यन्तीमां वसुन्धराम् ।
एते प्रणतसामन्ता भविष्या धार्मिकास्तु ये ।
येषाम् पर्यायकाले तु भूमिरान्ध्रान् गमिष्यति ॥

अर्थ—देवभूमि का मन्त्री वासुदेव काण्वायन ब्राह्मण मूर्खतावश व्यसनी राजा (देवभूमि) को मारकर शुंगों का नाश करेगा और स्वयं राजा बनेगा। वह ९ वर्ष राज्य करेगा। उसका पुत्र भूमिमित्र १४ वर्ष राज्य करेगा। उसका पुत्र नारायण १२ वर्ष तक राजा रहेगा। उसका पुत्र सुशर्मा १० वर्ष राज्य करेगा। इस प्रकार काण्वायना शुंगभृत्य कहे गये। ये ४ काण्वायन राजा ४५ वर्ष तक राज्य करेंगे। ये राजा धार्मिक तथा सामन्तों को वश में रखेंगे। इनके राज्यकाल के अन्त में शासन आन्ध्र सातवाहनों के पास चला जायेगा।

**आन्ध्रसातवाहनवंशः—**

काण्वायाणां ततो भृत्यः सुशर्मा तु प्रसह्य तम् ।
शुङ्गानाम् चैव यशश्शेषम् क्षपित्वा तु बली एषः ।
शिशुकोऽन्ध्रकसजातीयः प्राप्स्यतीमाम् वसुन्धराम् ।
त्रयोविंशत् समा राजा सिमुको तु भविष्यति ।
कृष्णो भ्राता यवीयांस्तु अष्टादश भविष्यति ।
श्रीसातकर्णिर्भविता तस्य पुत्रो तु वै दश ।
पूर्णोत्संगस्ततो राजा वर्षाणि अष्टादशैव तु ॥
स्कन्धस्तम्भि तथा राजा वर्षाण्यष्टादशैव तु ।
पंचाशत् समाः षट् वै शातकर्णिर्भविष्यति ।
दश चाष्टौ च वर्षाणि तस्य लम्बोदरः सुतः ॥
अपीलको दश द्वे च तस्य पुत्रो भविष्यति ।
दश चाष्टौ च वर्षाणि मेघस्वातिर्भविष्यति ॥
स्वातिश्च भविता राजा समास्त्वष्टादशैव तु ।
स्कन्दस्वामिस्तथा राजा सप्तैव तु भविष्यति ।

मृगेन्द्रः स्वातिकणस्तु भविष्यति समास्त्रयः ।
कुन्तलो स्वातिकर्णस्तु भविताष्टौ समा नृपः ।।
एकं संवत्सरम् राजा स्वातिकर्णो भविष्यति ।।
षट्त्रिंशदेव वर्षाणि पुलोमाविर्भविष्यति ।
भवितारिष्टकर्णस्तु वर्षाणाम् पंचविंशतिः ।
ततः संवत्सरम् पंच हालो राजा भविष्यति ।।
पंच मन्तलको राजा भविष्यति समा नृपः ।
पुरीन्द्रसेनो भविता तस्मात् सौम्यो भविष्यति ।।
सुन्दरः शातकर्णिस्तु अब्दमेकम् भविष्यति ।।
चकोरशातकर्णिस्तु षण्मासान् वै भविष्यति ।
अष्टाविंशतिवर्षाणि शिवस्वातिर्भविष्यति ।।
राजा च गौतमीपुत्र एकविंशत् ततो नृपः ।
अष्टाविंशः सुतस्तस्य पुलोमाविर्भविष्यति ।।
एकोनत्रिंशतम् भाव्यः शातकर्णिस्ततो नृपः ।
शिवश्रीः वै पुलोमा तु सप्त वै भविता नृपः ।।

**अर्थ**—काण्वायनों का बली भृत्य सुशर्मा बलपूर्वक शुंगों के यश को समाप्त करके अपने शिशुक (पुत्र) आन्ध्रजातीय को राजा बनायेगा। शिशुक (या शिमुक २३ वर्ष तक राजा रहेगा। उसका अनुज १८ वर्ष राज्य करेगा। उसका पुत्र श्रीशातकर्णि दश वर्ष राज्य करेगा। उसका पुत्र पूर्णोत्संग १८ वर्ष राजा होगा। स्कन्धस्तम्भी १८ वर्ष राज्य करेगा। पुनः श्रीशातकर्णि ५६ वर्ष राज्य करेगा। उसका पुत्र लम्बोदर १८ वर्ष राज्य करेगा। उसका पुत्र अपीलक १२ वर्ष राजा होगा। मेघस्वाति १८ वर्ष राज्य करेगा। स्वाति १८ वर्ष राजा होगा। स्कन्दस्वामी ७ वर्ष राज्य करेगा। मृगेन्द्र स्वातिकर्णि ३ वर्ष शासन करेगा। कुन्तल स्वातिकर्ण ८ वर्ष राजा रहेगा। स्वातिकर्ण केवल एक वर्ष राज्य करेगा! पुलोमावि ३६ वर्ष पर्यन्त शासन करेगा। अरिष्टकर्ण २५ वर्ष तक राज्य करेगा। राजा हाल ५ वर्ष राज्य करेगा। इसी प्रकार मन्तलक ५ वर्ष राज्य करेगा। पुनः पुरीन्द्रसेन, तत्पश्चात् सौम्य राजा होगा। सुन्दर शातकर्णि केवल १ वर्ष राज्य करेगा। चकोर शातकर्णि केवल छः महीने शासन करेगा। शिवस्वाति २८ वर्ष तक राज्य करेगा। गौतमीपुत्र इक्कीस वर्ष तक राजा रहेगा। उसका पुत्र पुलोमावि २८ वर्ष राज्य करेगा। राजा शातकर्णि २९ वर्ष राजा होगा। शिवश्री पुलोमा ७ वर्ष के लिए राजा होगा।

शिवस्कन्धः शातकर्णिर्भविता त्रयो समाः ।
नवविंशति वर्षाणि यज्ञश्रीः शातकर्णिः ॥
षडेव भविता तस्माद् विजयस्तु समा नृपः ।
चन्द्रश्रीः शातकर्णिस्तु तस्य पुत्रः समा दश ।
पुलोमावि समा सप्त अन्त्यस्तेषाम् भविष्यति ॥
इत्येते वै नृपा त्रिंशत् आन्ध्रा भोक्ष्यन्ति वै महीम् ।
समाः शतानि चत्वारि षष्टिरेव च ॥

अर्थ—शिवस्कन्ध शातकर्णि ३ वर्ष राज्य करेगा । यज्ञश्री शातकर्णि २९ वर्ष शासन करेगा । विजय शातकर्णि ६ वर्ष राज्य करेगा । उसका पुत्र चन्द्रश्री शातकर्णि १० वर्ष राज्य करेगा । अन्तिम शातकर्णि (सातवाहन आन्ध्र) राजा ७ वर्ष राज्य करेगा ।

इस प्रकार ये ३० आन्ध्र सातवाहन राजा ४५० वर्ष देश का शासन करेंगे ।

**सातवाहनोत्तरकालीनवंशाः—**

आन्ध्राणां संस्थिते राज्ये तेषाम् भृत्यान्वये नृपाः ।
सप्तैवान्ध्रा भविष्यन्ति दशाभीरास्तथा नृपाः ॥
सप्त गर्दभिनस्तथा शकाश्चाष्टादशैव तु ।
यवनाष्टौ भविष्यन्ति तुषारास्तु चतुर्दश ॥
त्रयोदश गुरुण्डाश्च हूणा ह्योनविंशतिः ।
मौना एकादशैव तु । ( )

अर्थ—आन्ध्रसातवाहनवंश की समाप्ति पर उनके भृत्यगणों में सात आन्ध्रभृत्य (श्रीपार्वतीय=गुप्त वंश) के सात राजा, दश आभीर राजा, सात गर्दभिल (शूद्रक) राजा, अठारह शक राजा, आठ यवन राजा, चौदह तुरुष्क, तेरह गुरुण्ड, उन्नीस हूण राजा और ग्यारह मौन राजा होंगे ।

**पाठभेदः—**

दश गर्दभिनो नृपाः शका षोडश भूपालाः ।
भविष्यन्त्यतिलोलुपास्ततोऽष्टौ यवना भाव्याः ॥
चतुर्दश च तुषाराः । ( )

अर्थ—दश गर्दभिल राजा, सोलह शकराजा अतिलोपुप होंगे । आठ यवन और चौदह तुषार राजा होंगे ।

**अन्यपाठः—**

आन्ध्राः श्रीपार्वतीयाश्चैव शते द्वे पंचाशतम् समाः ।

सप्तषष्टिस्तु वर्षाणि दशाभीरास्तथैव च ।।
सप्त गर्दभिला भूयो भोक्ष्यन्तीमां वसुन्धराम् ।
शतानि त्रीणि अशीति च शकाष्टादशैव तु ।
यवनाष्टौ भविष्यन्ति सप्त वर्षाणि सहस्राणि ।
तुषाराणाम् मही स्मृता । अशीतिं चैव वर्षाणि भोक्तारो
यवना महीम् ।। शतान्यर्धचतुष्कानि भवितव्यास्त्रयोदश ।
गुरुण्डा वृषला सार्धम् भोक्ष्यन्ते म्लेच्छसम्भवाः ।
शतानि त्रीणि भोक्ष्यन्ते हूणा एकदशैव तु ।

**अर्थ**—आन्ध्रभृत्य श्री पार्वतीय २५० वर्ष राज्य करेंगे। दश आभीर राजा ६७ वर्ष और सात गर्दभिल राजा पृथिवी भोगेंगे। ३८० वर्ष अठारह शकराजा राज्य करेंगे। आठ यवन राजा होंगे। तुषार सात हजार वर्ष तक राज्य करेंगे। आठ यवन ८० वर्ष राज्य करेंगे। तेरह गुरुण्ड (मुरुण्ड) राजा ४५० वर्ष राज्य करेंगे। शूद्रों के साथ ये म्लेच्छ राज्य करेंगे। ग्यारह हूण राजा ३०० वर्ष राज्य करेंगे।

**भिन्नपाठः—**

आन्ध्रा भोक्ष्यन्ति वसुन्धरां शते द्वे च शतम् चैव ।
सप्त षष्टिं च वर्षाणि दशाभीरास्ततो नृपाः ।
सप्त गर्दभिनाश्चैव भोक्ष्यन्तीमां द्विसप्ततिः ।
शतानि त्रीणि अशीति च भोक्ष्यन्ति वसुधां शकाः ।।
पंचवर्षशतानि हि तुषाराणम् मही स्मृता ।।

**अर्थ**—आन्ध्र (भृत्य) २०० वर्ष राज्य करेंगे। १६७ वर्ष दश आभीर राजा राज्य करेंगे। सात गर्दभिल ७२ वर्ष राज्य करेंगे। ३८० वर्ष तक शक राज्य करेंगे और पांच सौ वर्ष पृथिवी (भारत) पर तुषारों का राज्य रहेगा।

**नागवंशः—**

शेषस्य नागराजस्य पुत्रः परपुरंजयः ।
भोगी भविष्यति राजा नागकुलोद्भवः ।।
सदाचन्द्रस्तु चन्द्रांशो द्वितीयो नखवांस्तथा ।
धनधर्मास्तथा चापि चतुर्थो वंगः स्मृतः ।।
भूतनन्दिस्तथा चापि वदिशे तु भविष्यति ।
शुङ्गनां तु कुलस्यान्ते शिशुनन्दिर्भविष्यति ।।
तस्य भ्राता यवीयांस्तु नाम्ना नन्दियशाः किल ।
तस्यान्वये भविष्यन्ति राजानस्ते त्रयस्तु वै ।।

दौहित्रः शिशुको नामा पुरिकायां नृपोऽभवत् ।

अर्थ—नागराज शेष का परपुरंजय (दूसरों को जीतनेवाला) पुत्र राजा भोगी नागवंशज राजा होगा। चन्द्रांश सदाचन्द्र और नखवान् (नहपान शकराज), तृतीय राजा और चतुर्थ राजा धनधर्मा वंग (वंगरि), विदिशा में भूतनन्दि और शुंगों के कुल के अन्त में शिशुनन्दि और उसका छोटा भाई नन्दियशा राजा होगा। उसके कुल में तीन राजा होंगे। शिशुनन्दि का दौहित्र पुरिका में राजा होगा।

**किलकिलावंशः (वाकाटकवंशः)—**

तच्छन्नेन च कालेन ततः कोलकिला नृपाः ।
ततः कोलकिलेभ्यश्च विन्ध्यशक्तिर्भविष्यति ॥
समा षण्णवति ज्ञात्वा पृथिवी च समेष्यति ।
विन्ध्यशक्तिसुतश्चापि प्रवीरो नाम वीर्यवान् ।
भोक्ष्यति च समाः षष्टिं पुरीं कांचनिकां च वै ।
यक्ष्यते वाजपेयैश्च समाप्तवरदक्षिणैः ।
तस्य पुत्रास्तु चत्वारो भविष्यन्ति नराधिपाः ॥

**अर्थ**—अन्धकारकाल के व्यतीत होने पर कोलकिल (या किलकिला) राजा होंगे। उनसे ही विन्ध्यशक्ति राजा होगा। वह ९६ वर्ष पृथिवी पर राज्य करेगा। उसका पुत्र प्रवीर जो बलवान् राजा था कांचनिकापुरी में ६० वर्ष राज्य करेगा। वह श्रेष्ठ दक्षिणाओं से मुक्त वाजपेय यज्ञ करेगा। उसके चार पुत्र (राजा) होंगे।

**अन्यपाठः—**

तेषूत्सन्नेषु कैंकिला यवना भूपतयो भविष्यन्त्यमूर्द्धाभिषिक्ताः ।
तेषामपत्यं विन्ध्यशक्तिस्त्वतः पुरंजयस्तस्माद्रामचन्द्रस्तस्माद्धर्मवर्मा
ततो वङ्गस्ततोऽभून्नन्दनस्ततस्सुनन्दी तद्भ्राता नन्दियशाशुक्रः
प्रवीर एते वर्षशतं षड्वर्षाणि भूपतयो भविष्यन्ति ॥

(विष्णुपुराणे ४।२४।५५-५७)

**अर्थ**—उसके उच्छिन्न होने पर कैंकिल नाम के यवन (?) मूर्धाभिषिक्त राजा होंगे। उनकी सन्तान पुरंजय विन्ध्यशक्ति, तदनन्तर धर्मवर्मा, तब वंग, पुनः नन्दन, पुनः सुनन्दी और उसका भ्राता नन्दियशा और तेजस्वी प्रवीर। इनका राजा १०६ वर्षपर्यन्त रहेगा।

**स्थानीयवंशाः—**

विन्ध्यकानां कुलेऽतीते नृपा वै बाह्लिकास्त्रयः ।

सुप्रतीको नाभिश्च समा भोक्ष्यन्ति त्रिंशतिम् ॥
शाक्यमानोऽभवत् राजा महिषाणाम् महीपतिः ।
पुष्पमित्रा भविष्यन्ति पटुमित्रास्त्रयोदश ।
मेकलायां नृपाः सप्त भविष्यन्ति सप्ततिम् ।
कौसलायां तु राजानो भविष्यन्ति महाबलाः ॥
मेघा इति संख्याता बुद्धिमन्तो नवैव तु ।
नैषधाः पार्थिवा सर्वे भविष्यन्ति आमनुक्षयात् ॥
नलवंशप्रसूतास्ते वीर्यवन्तो महाबलाः ॥

**अर्थ**— विन्ध्यकों के वंश की समाप्ति पर तीन बाह्लिक तथा सुप्रतीक नाभि तीस वर्ष तक राज्य करेंगे। महिषों का राजा शाक्यमान हुआ। पुष्पमित्र और पटुमित्र वंश के तेरह राजा हुए। मेकला में सात राजाओं ने ७० वर्ष राज्य किया। कोसला में महाबली और बुद्धिमान् ९ मेघसंज्ञक राजा होंगे। मनुष्यों के विनाश तक नलवंश में उत्पन्न महाबली राजा होंगे।

**विश्वफाणिः सम्राट्—**

मागधानाम् महावीर्यो विश्वफाणिर्भविष्यति ।
उत्साद्य पार्थिवान् सर्वान् सोऽन्यान् वर्णान् करिष्यति ॥
कैवर्तान् पंचकांश्चैव पुलिन्दान् ब्राह्मणांस्तथा ।
स्थापयिष्यति राज्ञो नानादेशेषु ते जनाः ।
विश्वफाणिर्महासत्त्वो युद्धे विष्णुसमो बली ॥
विश्वफाणिर्नरपतिः क्लीबकीर्ति इवोच्यते ।
उत्सादयित्वा क्षत्रं तु क्षत्रमन्यत् करिष्यति ॥
देवान् पितृंश्च विप्रांश्च तर्पयित्वाऽसकृत् पुनः ।
जाह्नवीतीरमासाद्य शरीरम् यास्यते बली ॥
संन्यस्य स्वशरीरं तु शक्रलोकं गमिष्यति ॥

**अर्थ**— मगध में विश्वफाणि नाम का महाबली राजा होगा। सभी राजाओं का विनाश करके वह अन्य वर्णों को क्षत्रिय (राजा) बनायेगा। कैवर्त, पंचक, पुलिन्द, ब्राह्मणक इत्यादि को विभिन्न देशों में राजा बनायेगा। महाबली विश्वफाणि युद्ध में विष्णु के समान बली था। विश्वफाणि आकृति में हिजड़े के समान था। उसने मूल क्षत्रियवंशों का विनाश करके अन्य म्लेच्छादि को क्षत्रिय बनाया। उसने बारम्बार देवों, पितरों और ब्राह्मणों का तर्पण किया। अन्त में उसने गंगातट पर अपने शरीर को क्षपित किया और अपने शरीर को छोड़कर स्वर्ग चला गया।

**अन्त्यवंशाः (गुप्तोत्तरकालीनवंशाः)—**

नवनागास्तु भोक्ष्यन्ति पुरीं चम्पावतीं नृपाः ।
मथुरां च पुरीं रम्याम् नागाः सप्त वै ।।
अनुगङ्गाप्रयागम् च साकेतम् मागधांस्तथा ।
एतान् जनपदान् सर्वान् भोक्ष्यन्ते गुप्तवंशजाः ।।
नैषधान् यदुकांश्चैव शेषितान् कालतोयकान् ।
एतान् जनपदान् सर्वान् भोक्ष्यन्ते मणिधान्यकाः ।
कोसलांश्चान्ध्रपुण्ड्रांश्चैव ताम्रलिप्तान् ससागरान् ।
चम्पां चैव पुरीं रम्याम् भोक्ष्यन्ते देवरक्षिताः ।।
कलिंगा महिषाश्चैव महेन्द्रनिलयाश्च ये ।
एतान् जनपदान् सर्वान् पालयिष्यति वै गुहः ।।
स्त्रीराज्यं भोजकाश्चैव भोक्ष्यन्ते कनकान्वयाः ।
सौराष्ट्रावन्त्याभीराश्च शूद्रा अर्बुदमालवाः ।।
व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनपदाः ।
सिन्धोश्च तटं चन्द्रभागां काश्मीरमण्डलम् ।।
भोक्ष्यन्ति शूद्रव्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः ।
तुल्यकालं भविष्यन्ति सर्वे ह्यते महीक्षितः ।
अल्पप्रसादा ह्यनृता महाक्रोधाः ह्यधार्मिकाः ।।

अर्थ—नौ नाग राजाओं ने चम्पावती में राज्य किया। सात नागराजाओं ने सुन्दर मथुरानगरी में राज्य किया। अन्तिम गुप्त राजाओं ने गंगा के तटवर्ती प्रयाग, साकेत और मगध में राज्य किया। मणिधान्यकों ने नैषध, यदुक, शेषित और कालतोयक जनपदों में राज्य किया। देवरक्षित क्षत्रियों ने कोसल, आन्ध्रपुण्ड्र, ताम्रलिप्त, सागरपर्यन्त, चम्पापुरी में राज्य किया। गुह राजा ने कलिंग, महिष, महेन्द्र पर्वत इत्यादि भूक्षेत्रों में शासन किया। कनक नाम के राजाओं ने स्त्री-राज्य, भोजक आदि में राज्य किया। सौराष्ट्र, अवन्ति, आभीर, अर्बुद, मालव इत्यादि में व्रात्य ब्राह्मण और शूद्रप्राय रहेगी। अब्राह्मण शूद्र व्रात्यादि ने सिन्धुतट, चन्द्रभागा और कश्मीर मण्डल में राज्य किया।

ये सभी राजा एककाल में होंगे तथा स्वभाव से क्रोधी, झूठे, अधार्मिक और बहुत कम प्रसन्न होंगे।

**राज्यकालस्य गणनाः—**

महापद्माभिषेकात्तु जन्म यावत्परीक्षितः ।
एतद्वर्षसहस्रन्तु ज्ञेयं पंचाशदुत्तरम् ।।

(एतद्वर्षसहस्रन्तु ज्ञेयं पंचदशोत्तरम् ।)
(एतद्वर्षसहस्रन्तु ज्ञेयं पंचशतोत्तरम् ।।)
प्रमाणं वै तथा चोक्तं महापद्मान्तरं च यत् ।
अन्तरं तच्छतान्यष्टौ षट्त्रिंशच्च समाः स्मृताः ।
एतत्कालान्तरं भाव्या आन्ध्रान्ता ये प्रकीर्तिताः ।।
भविष्यज्ञैस्तत्र संख्याताः पुराणज्ञैः श्रुतर्षिभिः ।।
सप्तर्षयस्तदा प्राहुः प्रतीपे राज्ञि वै शतम् ।
सप्तविंशैः शतैर्भाव्या आन्ध्राणां ते त्वन्वयाः पुनः ।
सप्तविंशतिपर्यन्ते कृत्स्ने नक्षत्रमण्डले ।
सप्तर्षयः तिष्ठन्ति पर्यायेण शतं शतम् ।
सप्तर्षीणाम् युगं ह्येतद्दिव्यया संख्यया स्मृतम् ।।

× × ×

सप्तर्षयो मघायुक्ताः काले पारिक्षिते शतम् ।
आन्ध्रांशे च चतुर्विंशे भविष्यन्ति मते मम ।।

अर्थ—परीक्षित् के जन्म से महापद्म नन्द के अभिषेक तक एक सहस्र पचास (वस्तुतः एक सहस्र पांच सौ) वर्ष व्यतीत हुए। महापद्म नन्द से आन्ध्र सातवाहन पूर्व तक ८३६ वर्ष व्यतीत हुए। भविष्यज्ञ इतिहासकारों ने आन्ध्रों तक के समय की गणना की है। सप्तर्षिनक्षत्र प्रतीप के राज्यकाल में जहां पर थे; वहां से २७०० वर्ष पश्चात् आन्ध्रों का वंश प्रारम्भ हुआ। सम्पूर्ण नक्षत्र मण्डल में सप्तर्षिगण २७०० वर्षपर्यन्त रहते हैं। प्रत्येक नक्षत्र में वे १००-१०० वर्ष रहते हैं। यह २७०० वर्ष सप्तर्षियुग कहा जाता है।

परीक्षित् राज्यकाल में सप्तर्षिगण मघानक्षत्र में थे और आन्ध्रसातवाहन (के प्रारम्भ) काल में तब से २४०० वर्ष व्यतीत हुए।

**कल्किर्विष्णुयशाः—**

अस्मिन्नेव युगे क्षीणे सन्ध्याश्लिष्टे भविष्यति ।।
कल्किर्विष्णुयशा नाम पाराशर्यः प्रतापवान् ।।
दशमो भाव्य सम्भूतो याज्ञवल्क्यपुरःसरः ।
अनुकर्षन् सर्वसेनां हस्त्यश्वरथसङ्कुलाम् ।
प्रगृहीतायुधैर्विप्रैर्वृतः शतसहस्रशः ।।
नात्यर्थं धार्मिका ये च ये च धर्मद्विषः क्वचित् ।
उदीच्यान्मध्यदेशांश्च तथा विन्ध्यापरान्तिकान् ।।
तथैव दाक्षिणात्यांश्च द्रविडान् सिंहलैः सह ।

गान्धारान् पारदांश्चैव पह्लवान् यवनाञ्शकान् ।
तुषारान् बर्बरान् चैव पुलिन्दान् दरदान् खशान् ॥
लम्पाकानांध्रकान् हूणान् किरातांश्चैव स प्रभुः ॥
प्रवृत्तचक्रो बलवान् म्लेच्छानामन्तकृद्बली ।
अदृश्यः सर्वभूतानां पृथिवीं विचरिष्यति ॥
मानवः स तु संजज्ञे देवस्यांशेन धीमतः ।
पूर्वजन्मनि विष्णुर्यः प्रमितिर्नाम वीर्यवान् ॥
गोत्रेण वै चन्द्रमसः पूर्णे कलियुगेऽभवत् ॥

× × ×

पंचविंशोत्थिते कल्पे पंचविंशतिः वै समाः ।
विनिघ्नन् सर्वभूतानि मानुषानेव सर्वशः ॥
कृत्वा बीजावशेषान्तु महीं क्रूरेण कर्मणा ॥
संघातयित्वा वृषलान् प्रायशस्तानधार्मिकान् ॥
ततः स वै तदा कल्किश्चारितार्थः ससैनिकः ।
कर्मणा निहता ये तु सिद्धास्ते तु पुनः स्वयम् ।
अकस्मात् कुपिताऽन्योन्यं भविष्यन्ति च मोहिताः ॥
क्षपयित्वा तु तान् सर्वान् भाविनार्थेन चोदितान् ॥
गङ्गायमुनयोर्मध्ये निष्ठां प्राप्स्यति सानुगः ॥

**अर्थ**—इसी युग (कलियुग) में, उसके क्षीण होने पर युगसन्ध्याकाल में कल्कि विष्णयशा नाम के पराशरगोत्रीय प्रतापी ब्राह्मण (विष्णु के अवतार) होंगे। भावी दशम अवतार के समय याज्ञवल्क्यगोत्रीय ब्राह्मण उनका पुरोहित होगा। हाथी, घोड़े और रथ से परिपूर्ण सभी प्रकार की सेना का वह संचालन करेंगे। लाखों ब्राह्मण उस सेना में आयुधों से सन्नद्ध होंगे। जो राजा अधिक धार्मिक नहीं थे तथा कुछ उनमें धर्मद्वेषी थे तथा उदीच्य, मध्यदेशीय, विन्ध्यक, अपरान्तिक, दाक्षिणत्य, द्रविड, सिंहल, गान्धार, पारद, पह्लव, यवन, शक, तुषार, बर्बर, पुलिन्द, दरद, खश, लम्पाक, आन्ध्रक, हूण और किरातों का वह चक्रवर्ती विष्णुयशाकल्कि नाश करेंगे। सभी प्राणियों में अदृश्य के समान वह सम्पूर्ण पृथिवी पर विजय प्राप्त करेंगे। वह देवांश से बुद्धिमान् मानव राजा के रूप में उत्पन्न हुए। पूर्वजन्म में वे प्रमिति नाम के बली विष्णु थे। चन्द्रगोत्र में कलियुग के पूर्ण (१२०० वर्ष बीतने) होने पर वे उत्पन्न हुए।

पच्चीसवें कल्प (वर्ष) में पच्चीस वर्ष पर्यन्त सभी प्राणियों और सभी मनुष्यों को मारते हुए तथा क्रूर कर्म से केवल उनका बीज वंश बचाते हुए सभी

वृषल (शूद्रप्रायः) अधार्मिक राजाओं को मारकर सैनिकों के सहित कल्कि अपना नाम चरितार्थ करेंगे।

अपने कर्म (युद्ध) द्वारा मारे जाने पर, पुनः सफल राजा कुपित होकर एवं मोहित होकर एक दूसरे को मारकर भावी उद्देश्य से प्रेरित कल्कि महाराज गंगा यमुना के मध्य अपने अनुचरों सहित निष्ठा (अन्त) को प्राप्त होंगे।

**महाभारते कल्किवृत्तान्तः-**

कल्की विष्णुयशा नाम द्विजः कालप्रचोदितः।
उत्पत्स्यते महावीर्यो महाबुद्धिपराक्रमः॥
सम्भूतः सम्भलग्रामे ब्राह्मणावसथे शुभे॥
उपस्थास्यन्ति योधाश्च शस्त्राणि कवचानि च।
स धर्मविजयी राजा चक्रवर्ती भविष्यति॥
स मे संकुलं लोकं प्रसादमुपनेष्यति।
उत्थितो ब्राह्मणो दीप्तः क्षयान्तकृदुदारधीः॥
संक्षेपको हि सर्वस्य युगस्य परिवर्तकः।
स सर्वत्र गतान् क्षुद्रान् ब्राह्मणैः परिवारितः॥
उत्सादयिष्यति तदा सर्वम्लेच्छगणान् द्विजः॥
ततश्चोरक्षपं कृत्वा द्विजेभ्यः पृथ्वीमिमाम्।
वाजिमेधे महायज्ञे विधिवत् कल्पयिष्यति॥
स्थापयित्वा च मर्यादाः स्वयम्भुविहिताः शुभाः।
वनं पुण्ययशःकर्मा रमणीयं प्रवेक्ष्यति॥
तच्छीलमनुवर्त्स्यन्ति मनुष्या लोकवासिनः।
विप्रैश्चोरक्षये चैव कृते क्षेमं भविष्यति॥
कृष्णाजिनानि शक्तीश्च त्रिशूलन्यायुधानि च।
स्थापयन् द्विजशार्दूलो देशेषु विजितेषु च॥
संस्तूयमानो विप्रेन्द्रैर्मानदानो द्विजोत्तमान्।
कल्की चरिष्यति महीं सदा दस्युवधे रतः॥
हा मातस्तात पुत्रेति तास्ता वाचः सुदारुणाः।
विक्रोशमानान् सुभृशं दस्यून् नेष्यति संक्षयम्॥
ततोऽधर्मविनाशो वै धर्मवृद्धिश्च भारत।
भविष्यति कृते प्राप्ते क्रियावांश्च जनस्तथा॥

(महा० ३।९०-९१ अध्याय)

अर्थ - काल से प्रेरित कल्की विष्णुयशा नाम के महाबली और महाबुद्धि ब्राह्मण ने सम्भलग्राम में ब्राह्मण के शुभ गृह में जन्म लिया। वे एक धर्मविजयी चक्रवर्ती राजा थे, जिसके साथ योद्धा, शस्त्र और कवच होंगे। वे इस धराधाम पर प्रसन्नता वापस लायेंगे। वे उदारबुद्धि उठ खड़े होकर तेजस्वी ब्राह्मण के रूप में दुष्टों का अन्त करेंगे। वे युग का अन्त करके नवीन परिवर्तयुग का प्रवर्तन करेंगे। वे ब्राह्मणों से परिवारित होकर सभी म्लेच्छगणों का विनाश करेंगे। वह चोरभय (दस्युभय) का नाश करके यथाविधि अश्वमेध यज्ञ करके इस पृथिवी को ब्राह्मणों को दान में दे देंगे। स्वयम्भू द्वारा विहित मर्यादाओं को प्रस्थापित करके वे पुण्यकीर्ति और यशःकर्मा वन में चले जायेंगे। तदनन्तर लोग उनके शील का अनुसरण करेंगे। चोर-दस्युओं का नाश होने पर ब्राह्मण (प्रजा) का कल्याण होगा। वह ब्राह्मण सिंहकल्कि महाराज विजित देशों में कृष्णजिन (यज्ञ) शक्ति, त्रिशूल एवं अन्य आयुध स्थापित करके ब्राह्मणों द्वारा स्तुत तथा वे ब्राह्मणों का सम्मान करेंगे।

कल्कि सदा दस्युओं का वध करते हुए पृथिवी पर विचरण करेंगे। दस्युगण हे माता हे पिता हे पुत्र! ऐसा कहकर भयंकर रूप से विलाप करेंगे। वे रोते बिलखते दस्युओं का विनाश करेंगे। तब अधर्म का विनाश और धर्म (यज्ञ) की वृद्धि होगी। तब कृतयुग की प्राप्ति होने पर लोग पुनः यज्ञादि में प्रवृत्त होंगे।

**कल्किपुराणे कल्किवृत्तान्तविशेषः—**

तच्छ्रुत्वा पुण्डरीकाक्षो ब्रह्माणमिदमब्रवीत्।
शम्भले विष्णुयशसो गृहे प्रादुर्भवाम्यहम्॥
सुमत्यां मातरि विभो! कन्यायां त्वन्निदेशतः॥
चतुर्भिर्भ्रातृभिर्देव करिष्यामि कलिक्षयम्।
भवन्तो बान्धवा देवाः स्वांशेवतरिष्यथ॥
इयं मम प्रिया लक्ष्मीः सिंहले संभविष्यति।
वृहद्रथस्य भूपस्य कौमुद्यां कमलेक्षणा।
भार्यायां मम भार्येषा पद्मा नाम्नी भविष्यति।

× × ×

कल्केर्ज्येष्ठास्त्रयः शूराः कवि-प्राज्ञ-सुमन्त्रकाः।

× × ×

गार्ग्यभर्ग्यविशालाया ज्ञातयस्तदनुव्रताः॥
विशाखयूपभूपालपालितास्तापवर्जिताः।

× × ×

त्वं गरुडमिदं चाश्वं कामगं बहुरूपिणम् ।
शुकमेनञ्च सर्वज्ञं मया दत्तं गृहाण भोः ।
रत्नत्सरुं करालं च करवालं महाप्रभम् ।
गृहाण गुरुभारायाः पृथिव्या भारसाधनम् ॥

× × ×

कवेः पत्नी कामकला सुषुवे परमेष्ठिनौ ।
बृहत्कीर्तिर्बृहद्बाहू महाबलपराक्रमौ ॥
प्राज्ञस्य सन्नतिर्भार्या तस्यां पुत्रौ बभूवतुः ।
यज्ञविज्ञौ सर्वलोकपूजितौ विजितेन्द्रियौ ॥
सुमन्त्रकस्तु मालिन्यां जनयामास शासनम् ।
वेगवन्तं च साधूनां द्वावेतावुपकारकौ ॥
ततः कल्किश्च पद्मायां जयो विजय एव च ॥
द्वौ पुत्रौ जनयामास लोकख्यातौ महाबलौ ॥

अर्थ—कमलयनविष्णु ने ब्रह्मा जी से कहा—हे विभो ! मैं आपके आदेश से माता सुमति कन्या से उत्पन्न होऊंगा शम्भलग्राम में विष्णुयशा ब्राह्मण के घर। हे देव ! मैं चार भाइयों के साथ कलियुग का विनाश करूंगा। मेरे बान्धव देवगण अपने-अपने अंश से पृथिवी पर अवतीर्ण होंगे। मेरी प्रिया यह लक्ष्मी सिंहल के राजा बृहद्रथ की भार्या कौमुदी के उदर से मेरी भार्या पद्मा के रूप में अवतार लेगी।

कल्कि के तीन शूरवीर भ्राता थे - कवि, प्राज्ञ और सुमन्त्रक।

गार्ग्य, भर्ग्य, विशालादि जातिबन्धु थे, जो उनका अनुसरण करते थे। विशाखयूप (प्रद्योतवंशीयमागधराजा) राजा द्वारा पालित और तापत्रयवर्जित प्रजा थी।

तुम इस गारुड अश्व, जो कामग और बहुरूपी है तथा इस सर्वज्ञ तोते को मेरे से ग्रहण करो और इस रत्नजटित कराल तलवार को जो बड़ी चमकीली है मुझसे ग्रहण करो जिससे गुरुभार पृथिवी का भार हल्का हो।

कवि की पत्नी कामकला ने परमेष्ठी बृहत्कीर्ति और बृहद्बाहु जो महाबली और महापराक्रमी थे को उत्पन्न किया। प्राज्ञ की पत्नी सन्नति से यज्ञविद् सर्वलोकपूजित, विजितेन्द्रिय दो पुत्र हुए और सुमन्त्रक की पत्नी मालिनी ने साधुओं के उपकारक शासन और वेगवान् को उत्पन्न किया।

कल्कि ने पद्मा से जय और विजय लोकविख्यात महाबली पुत्रों को उत्पन्न किया।

× × ×

समीक्ष्य कल्किः प्रोवाच पितामहमिवेश्वरः ।
कारयिष्याम्यश्वमेधं यामि दिग्विजयाय भोः ॥

× × ×

ततः कल्किर्म्लेच्छगणान्करवालेन कालितान् ।
बाणैः संताडितानन्यानानयद्यमसादनम् ॥
विशाखयूपोऽपि तथा कविप्राज्ञसुमन्त्रकाः ।
गार्ग्यभार्ग्यविशालाद्या म्लेच्छान्निन्युर्यमक्षयम् ॥
कपोतरोमा काकाक्षः काककृष्णादयोऽपरे ।
बौद्धाः शौद्धोधना याता युयुधुः कल्किसैनिकैः ॥

× × ×

सेनागणैः परिवृतः कल्किर्नारायण प्रभुः ।
भल्लाटनगरं प्रायात्खड्गधृक्सप्तिवाहनः ॥
शशिध्वजो महातेजा, गजायुतबलः सुधीः ।

× × ×

देवापिश्च मरुः कामं कल्केरादेशकारिणौ ।
प्रजाः संपालयन्तौ तु भुवं जुगुपतुः प्रभुः ।
विशाखयूपभूपालः कल्केर्निर्याणमीदृशम् ।
श्रुत्वा स्वपुत्रं विषये नृपं कृत्वा गतो वनम् ॥

**अर्थ**—कल्कि ने पितामह से ईश्वर के समान कहा—मैं दिग्विजय हेतु अश्वमेध यज्ञ कराऊंगा ।

तब कल्कि ने अपनी तलवार से काल के ग्रास बने म्लेच्छगणों को बाणों द्वारा यमलोक पहुंचाया । राजा विशाखयूप, कवि, प्राज्ञ और सुमन्त्रक, गार्ग्य, भार्ग्य, विशालादि ने म्लेच्छों का संहार किया । कपोतरोमा, काकाक्ष, काककृष्णादि अन्य शूरवीरों ने शौद्धधन बौद्धों से युद्ध किया !

सेनागणों से परिवृत नारायण प्रभु नारायण घोड़े पर सवार हो हाथ में तलवार ले भल्लाट नगर गये, जहां शशिध्वज राजा सहस्रों हाथियों की सेना के साथ खड़ा था ।

कल्कि की आज्ञा का पालन करनेवाले देवापि कौरव और मरु ऐक्ष्वाक ने स्वेच्छा से प्रजा और पृथिवी (राष्ट्र) की रक्षा की । विशाखयूप राजा भी कल्कि के महाप्रस्थान को देखकर अपने पुत्र को सिंहासन पर बैठाकर वन को चले गये ।

(कल्किपुराण)

**युगपुराणे राजवृत्तम् (कलिराजवृत्तान्तः)—**

ततः कलियुगे राजा शिशुनागात्मजो बली।
उदायी नाम धर्मात्मा पृथिव्यां प्रथितो गुणैः।
गंगातीरे स राजर्षिर्दक्षिणे स महानदे।
स्थापयेन्नगरं रम्यं पुष्पारामजनाकुलम्॥
तेषां पुष्पपुरं रम्यं नगरं पाटलीसुतम्।
पंच वर्षसहस्राणि स्थास्यते नात्र संशयः।
वर्षाणां पंचशतं च पंच संवत्सरास्तथा।
मासपंचमहोरात्रं मुहूर्ता पंच एव च॥
तस्मिन् पुष्पपुरे रम्ये जनराजशताकुले।
ऋतुक्षाः च कर्मसुतः शालिशूको भविष्यति।
स राजा कर्मसुतो दुष्टात्मा प्रियविग्रहः।
स्वराष्ट्रमर्दने घोरं धर्मवादी अधार्मिकः।
स ज्येष्ठभ्रातरं साधुं साकेते प्रथितं गुणैः।
स्थापयिष्यति मोहात्मा विजयं नाम धार्मिकम्।
ततः साकेतमाक्रम्य पञ्चाला माथुरास्तथा।
यवनाश्च सुविक्रान्ताः प्राप्स्यन्ति कुसुमध्वजम्।
ततः पुष्पपुरे प्राप्ते कर्दमे प्रथिते हि ते।
आकुला विषयाः सर्वे भविष्यन्ति न संशयः।
शस्त्रद्रुममहायुद्धं तद् भविष्यति पश्चिमम्।
अनार्याश्चाप्यधर्माश्च भविष्यन्ति नराधमाः।
ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्चैव युगक्षये।
समवेषाः समाचारा भविष्यन्ति न संशयः।
पाषंडैश्च समायुक्ता नरास्तस्मिन् युगक्षये।
स्त्रीनिमित्तं च मित्राणि करिष्यन्ति न संशयः।
चीरवल्कलसंवीता जटावल्कलधारिणः।
भिक्षुका वृषला लोके भविष्यन्ति न संशयः।

× × ×

**अर्थ**--कलियुग में शिशुनाग का आत्मज (वंशज) बली, धार्मिक और गुणवान् राजा उदायी होगा, जो राजर्षि गंगातट पर और शोणनद के दक्षिण में पुष्प वाटिकाओं से संकुल पाटलिपुत्र या पुष्पपुर नाम के रम्य नगर की स्थापना करेगा। वह नगर भविष्य में पांच हजार पांच सौ पांच वर्ष और पांच मास,

पांच दिन तथा पांच मुहूर्तपर्यन्त स्थित रहेगा। उस रम्य पुष्पपुर में, जिनमें सहस्रों नगरवासी रहते थे, ऋतुक्षा कर्मसुत शालिशूक (मौर्य) राजा होगा। वह कर्मसुत दुष्टात्मा युद्धप्रिय अधार्मिक परन्तु अपने को धार्मिक कहनेवाला अपनी प्रजा राष्ट्र का मर्दन करेगा। वह मोहात्मा अपने ज्येष्ठ भ्राता गुणी साधु विजय नाम के धार्मिक व्यक्ति को साकेत का शासक बनायेगा। तब पञ्चाल, माथुर और पराक्रमी यवनगण साकेत पर आक्रमण करके पाटलिपुत्र तक पहुंचेंगे। तब युद्ध होने पर प्रथित पुष्पपुर में सभी लोग व्याकुल हो जायेंगे, इसमें संशय नहीं। तदुपरान्त शस्त्रों और वृक्षों द्वारा महायुद्ध होगा, उस समय शासक और राजा अधार्मिक और अनार्य होंगे। उस समय ब्राह्मण, क्षत्रिय, वैश्य और शूद्र सभी का आचरण और वेश समान रूप से कुत्सित होगे। उस युगान्त में मनुष्य गण पाखण्डों से समायुक्त होंगे। वे लोग स्त्री के लिये ही मित्र बनायेंगे। चीरवल्कल पहिने जटावल्कलधारी भिक्षु (बौद्ध) और शूद्र लोक में बहुलता से होंगे।

धर्मभीततमा वृद्धा जनं भोक्ष्यन्ति निर्भयाः।
यवना ज्ञापयिष्यन्ति नगरे पंच पार्थिवाः।
मध्यदेशे न स्थास्यन्ति यवना युद्धदुर्मदाः।
तेषामन्योऽन्यसंभावाद् भविष्यति न संशयः।
आत्मचक्रोत्थितं घोरं युद्धं परमदारुणम्।
ततो युगवशात्तेषां यवनानां परिक्षये।
साकेते सप्त राजानो भविष्यन्ति महाबलाः।
लोहिद्रास्तथा योधैर्योधा युद्धपरिक्षताः।
करिष्यन्ति पृथ्वीं शून्यां रक्तघोराः सुदारुणाम्।
ततस्ते मागधाः कृत्स्ना गंगासीना सुदारुणाः।
रक्तपातं तथा युद्धं भविष्यति तु पश्चिमम्।
अग्निवेश्यास्तु ते सर्वे राजानो कृतविग्रहाः।
क्षयं यास्यन्ति युद्धेन यथैषामाश्रिता जनाः।
शकानां च ततो राजा ह्यर्थलुब्धो महाबलः।
दुष्टभावश्च पापश्च विनाशे समुपस्थिते।
कलिंगराजशतार्थे विनाशं वै गमिष्यति।

× × ×

विनष्टे शकराज्ये च शून्या पृथ्वी भविष्यति।
पुष्पनाम तदा शून्यं बीभत्सं भवति वनम्।

भविष्यति नृपः कश्चिन्न वा कश्चिद् भविष्यति ।
ततो तु रणे तुमुलो भविष्यति महाबलः ।
अम्लाटो लोहिताक्षेति पुष्पनामं गमिष्यति ।
सर्वे ते नगरं गत्वा शून्यमासाद्य पर्वतम् ।
अर्थलुब्धाश्च ते सर्वे भविष्यन्ति महाबलाः ।
ततः स म्लेच्छ आम्लाटो रक्ताशो रक्तवस्त्रभृत् ।
जनमादाय विवशं परमुत्सादयिष्यति ।
ततो वर्णांस्तु चतुरः स नृपो नाशयिष्यति ।
वर्णान्सावस्थितान् सर्वान् कृत्वा पूर्णाव्यवस्थितान् ।
आम्लाटो लोहिताश्च विपत्स्यति सबान्धवः ।

**अर्थ**—निर्भय वृद्धजन, परन्तु धर्महानि से भयभीत, लोगों को भय से मुक्त करेंगे । नगर में यवनगण पांच राज्यों की स्थापना करेंगे । युद्ध में दुर्मद यवन मध्यदेश में नहीं ठहर सकेंगे । वे स्वयं ही परस्पर भयंकर घोर युद्ध में फंस जायेंगे । युगवश (काल के वश) उन यवनों का नाश होगा और साकेत में महाबली सात राजा होंगे । योधागण परस्पर युद्ध में परिक्षत होंगे । वह घोर दारुण युद्ध से शून्य एवं रक्तरंजित होगी । तदुपरान्त गंगातट पर मागध युद्ध होगा जिसमें भारी रक्तपात होगा । अग्निवेशवंशीय सभी राजा युद्धग्रस्त होकर क्षय को प्राप्त होंगे तथा जो लोग उनके आश्रित होंगे, उनका भी विनाश होगा । धन का लोभी महाबली शकों का राजा, जो दुष्ट और पापी भी था, वह कलिंगराज हेतु विनाश को प्राप्त होगा ।

शकराज्य के विनष्ट हो जाने पर पृथिवी शून्य सदृश हो जायेगी । पुष्पपुर और पुष्पवन भी बीभत्स एवं शून्य हो जायेगा । उस समय वहां कोई राजा होगा और कदाचित् नहीं भी होगा । तब आम्लाट नाम का लोहिताक्ष शकराज पुष्पपुर में जायेगा । वे शक नगर में जायेंगे, वह शून्य (जनशून्य) पाकर पर्वत पर पहुंचेंगे । वे शकगण महाबली और धन के लोभी होंगे । वह शकराज म्लेच्छ आम्लाट लाल कपड़े पहिने हुए और लाल आंखों वाला दुष्ट राजा विवश लोगों का घोर विनाश करेगा । वह चारों ही वर्णों का नाश करेगा । जब वह म्लेच्छ सभी वर्णों को अव्यवस्थित कर देगा तब वह लोहिताक्ष आम्लाट सकुटुम्ब विपत्ति में पड़ जायेगा ।

ततो भविष्यति राजा गोपालो नाम नामतः ।
गोपालस्तु ततो राज्यं भुक्त्वा संवत्सरं नृपः ।
पुष्यके चाभिसंयुक्तं ततो निधनमेष्यति ।

ततो धर्मपरो राजा पुष्यको नाम नामतः।
सोऽपि संवत्सरं राज्यं भुक्त्वा निधनमेष्यति।
ततः स विपुलो राजा अनरण्यो महाबलः।
सोऽपि वर्षत्रयं भुक्त्वा पश्चान्निधनमेष्यति।
ततो विष्वक्यशा कश्चिद् ब्राह्मणो लोकविश्रुतः।
तस्यापि त्रीणि वर्षाणि राज्यं हृष्टं भविष्यति।
यतः पुष्पपुरं रम्यं तथैव जनसंकुलम्।
भविष्यति वीरं सिद्धार्थं प्रसवोत्सवसंकुलम्।
पुरस्य दक्षिणे पार्श्वे वाह्लं तस्य दृश्यते।
हयानां द्वे सहस्रे तु गजवाहास्तु कल्पतः।
तदा भद्रायके देशे अग्निमित्रस्तु कीलके।
तस्मिन्नुत्पत्स्यते कन्या सुमहारूपशालिनी।
तस्यार्थे स नृपो घोरं विग्रहं ब्राह्मणैः सह।
तत्र विवशा देहं विमोक्ष्यति न संशयः।
तस्मिन् युद्धे महाघोरेऽव्यतिक्रान्ते सुदारुणे।
आग्निवेश्यस्तदा राजा भविष्यति महाप्रभुः।
तस्यापि विंशद्वर्षाणि राज्यं स्फीतं भविष्यति।
आग्निवेश्यस्तदा राजा प्राप्य राज्यं महेन्द्रवत्।
भीमैश्च शरसंघातैर्विग्रहं समुपैष्यति।
तता शररसंघोरे प्रवृत्ते सुमहाबले।
वृषपातेन स नृपो मृत्युं समुपयास्यति।

× × ×

ततः सांतुवरो राजा हत्वा हेडेन मेदिनीं।
व्यतीते दशमे वर्षे मृत्युं समुपयास्यति।
ततः प्रनष्टचारित्रा स्वकर्मोपहता प्रजाः।
करिष्यन्ति शका घोरा बहुलाश्च इति श्रुतिः।

**अर्थ**—तदनन्तर गोपाल नाम का राजा होगा। एक वर्ष राज्य करने के पश्चात् पुष्यनक्षत्र में निधन को प्राप्त होगा। तदनन्तर पुष्यक नामक धर्मात्मा राजा होगा, वह भी एक वर्ष राज्य करके मृत्यु को प्राप्त होगा। तब महाबली अनरण्य राजा होगा। वह भी तीन वर्ष राज्य करके मृत्यु को प्राप्त होगा। तदनन्तर कोई विष्वक्यशा नामक कोई लोकप्रसिद्ध राजा तीन वर्ष राज्य करेगा। तब पुष्पपुर में, जो रम्य और जनों से भरा हुआ था, वीर राजा की सिद्धि का

महान् उत्सव होगा, उसका पाटलिपुत्र के दक्षिण पार्श्व में वाहन दिखलाई पड़ता है। दो हजार घोड़े और गजवाहिनी होगी।

भद्रायक देश में अग्निमित्र राजा होगा, उसकी श्रेष्ठ रूपवाली कन्या होगी। उसके लिए राजा का घोर युद्ध ब्राह्मणों के साथ होगा तब विवश होकर वह शरीर छोड़ेगा। उस अतिदारुण महाघोर युद्ध के पश्चात् आग्निवेश्य (ब्राह्मण) राजा होगा, उसका विशाल राज्य बीस वर्ष तक रहेगा। वह महेन्द्र के समान शासक होगा। भयंकर शबरों के युद्ध में वह महाबली राजा बैल से गिर जाने पर मर जायेगा।

तदनन्तर सांतुवर राजा क्रोध से लोगों को मारेगा और दश वर्ष व्यतीत होने पर मृत्यु को प्राप्त होगा। तब प्रजा का चरित्र नष्ट हो जायेगा और अपने ही कर्म से शक घोर अत्याचार करेंगे। ऐसा इतिहास (श्रुति) में प्रसिद्ध है।

चतुर्भागं तु शस्त्रेण नाशयिष्यन्ति प्राणिनाम्।
हरिष्यन्ति शकाः कोशं चतुर्भागं स्वकं परम्॥
ततः प्रजायां शेषायां तस्य राज्यपरिक्षयात्।
देवो द्वादशवर्षाणि अनावृष्टिः करिष्यति।
प्रजाः नाशं गमिष्यन्ति दुर्भिक्षभयपीडिताः।
तत पापक्षते लोके दुर्भिक्षे लोमहर्षणे।
भविष्यति युगस्यान्ते सर्वप्राणिविनाशनम्॥
जनमारस्ततो घोरो भविष्यति न संशयः।

× × ×

एतद्भविष्यमाख्यातं मया ते बर्हिध्वजः॥

(इति गार्गीये ज्योतिषे स्कन्दपुराणं नामाध्यायः)

**अर्थ**—वे शकगण प्रजा के चतुर्थ भाग को शस्त्रों से मार देंगे। तथा कोश के चतुर्थ भाग का भी अपहरण करेंगे। तब अवशिष्ट प्रजा का राज्यपरिक्षय के कारण पर्जन्य देव बारह वर्ष तक नहीं बरसेंगे। अतः दुर्भिक्ष भय से पीड़ित प्रजा नाश को प्राप्त होगी। तब पाप से नष्ट एवं घोर दुर्भिक्ष से सभी प्राणियों का युग के अन्त में नाश होगा। उस समय जनता का घोर संहार (मृत्यु) होगा।

हे कार्तिकेय! मैंने आपसे यह भविष्यकालिक वृत्तान्त कहा।

---

अष्टोऽध्यायः

# कलियुगीनविद्यावंशाः

(वायुपुराण अ० २३, श्लोक १०६-२१२)

## व्यासानां परम्परा (अष्टाविंशतियुगेषु)

**प्रथमे युगे—**

तदा चतुर्युगावस्थे कल्पे तस्मिन्युगान्तिके ।
भविष्यामि शिखायुक्तः श्वेतो नाम महामुनिः ॥
हिमवच्छिखरे रम्ये छागले पर्वतोत्तमे ।
चतुःशिष्या शिवे युक्ताः भविष्यन्ति तदा मम ।
श्वेतश्चैव शिखश्चैव श्वेताश्वः श्वेतलोहितः ॥
चत्वारस्ते महात्मानो ब्राह्मणा वेदपारगाः ॥

**अर्थ**—प्रथम युग के प्रथम व्यास ब्रह्मा (कश्यप)—चतुर्युगाख्यकल्प के युगान्त में मैं शिखायुक्त 'श्वेत' नाम का महामुनि होऊंगा । हिमवान् पर्वत के शिखर 'छागल' नाम के पर्वत पर मेरे योगी चार शिष्य होंगे—श्वेत, शिख, श्वेताश्व और श्वेतलोहित । वे चारों ब्राह्मण और वेदपारंगत होंगे ।

**द्वितीये युगे—**

पुनरस्तु मम देवेशो द्वितीयद्वापरे प्रभुः ।
प्रजापतिर्यदा व्यासः सत्यो नाम भविष्यति ।
तदा लोकहितार्थाय सुतारो नाम नामतः ।
भविष्यामि कलौ तस्मिल्लोकानुग्रहकारणात् ।
तत्रापि मम ते पुत्रा भविष्या नाम नामतः ।
दुन्दिभिः शतरूपश्च ऋचीकः केतुमांस्तथा ॥

**अर्थ**—द्वितीययुग में प्रजापति सत्य व्यास—पुनः द्वितीय द्वापर (परिवर्तयुग) में समर्थ प्रभु प्रजापति सत्यनारायण नाम के व्यास होंगे । तब उस कलियुग में जनता की भलाई के लिए मैं 'सुतार' नाम से अवतार लूंगा । तब उस समय मेरे चार पुत्र होंगे—दुन्दुभि, शतरूप, ऋचीक और केतुमान् ।

**तृतीये युगे—**

तृतीये द्वापरे चैव यदा व्यासस्तु भार्गवः ।
तदा ह्यहं भविष्यामि दमस्तु युगान्तिके ॥
तत्रापि च भविष्यन्ति चत्वारो मम पुत्रकाः ।
विशोकश्च विकेशश्च विशापः शापनाशनः ॥

**अर्थ**—तृतीय युग के तृतीय व्यास उशनाकाव्य— तृतीय युग में जब भार्गव (उशनाकाव्य—शुक्राचार्य) होंगे। तब मैं युगान्त में 'दम' नाम से प्रसिद्ध योगी होऊंगा। तब मेरे चार पुत्र होंगे—विशोक, विकेश, विशाप और शापनाशन।

**चतुर्थे युगे—**

चतुर्थे द्वापरे चैव यदा व्यासोऽङ्गिराः सुतः ।
तदाऽहं भविष्यामि सुहोत्री नाम नामतः ।
तत्रापि मम सत्पुत्राश्चत्वारश्च तपोधनाः ॥
भविष्यन्ति द्विजश्रेष्ठा योगात्मानो दृढव्रताः ।
सुमुखो दुर्मुखश्चैव दुर्दमो दुरतिक्रमः ॥

**अर्थ**—चतुर्थ युग के व्यास बृहस्पति आंगिरस— चतुर्थ युग में अंगिरा के पुत्र बृहस्पति होंगे। तब मैं सुहोत्री नाम का योगी होऊंगा। वहां मेरे चार तपस्वी पुत्र होंगे - श्रेष्ठ ब्राह्मण, योगी और दृढ़व्रती—सुमुख, दुर्मुख, दुर्दम और दुरतिक्रम।

**पंचमे युगे—**

पंचमे द्वापरे चैव व्यासस्तु सविता यदा ।
तदा चापि भविष्यामि कङ्को नाम महातपाः ।
अनुग्रहार्थं लोकानां योगात्मा नैककर्मकृत् ।
चत्वारस्तु महाभागा अविरजाः शुद्धयोनयः ॥
पुत्रा मम भविष्यन्ति योगात्मानो दृढव्रताः ।
सनकः सनन्दश्चैव प्रभुर्यस्य सनातनः ॥
ऋभुः सनत्कुमारश्च निर्ममा निरहंकृताः ।

**अर्थ**—पंचम युग में पंचम व्यास सविता (विवस्वान्=सूर्य)—पंचम युग में पंचम व्यास सविता=विवस्वान् होंगे। उस युग में मैं महातपस्वी कंक नाम का योगी होऊंगा। लोकों (जनता) की भलाई के लिए अनेक कर्मों का कर्त्ता मैं योगी होऊंगा। मेरे महाभाग्यशाली चार निष्पाप और शुद्ध योनि पुत्र होंगे—वे दृढ़व्रती योगी होंगे—सनक, सनन्द, सनातन और सनत्कुमार। वे निर्मम (संन्यासी) और निरहंकृत होंगे।

**षष्ठे युगे**—

परिवर्ते पुनः षष्ठे मृत्युर्व्यासो यदा विभुः।
तदाऽप्यहं भविष्यामि लोकाक्षि नाम नामतः॥
शिष्याश्च मम ते दिव्या योगात्मानो दृढव्रताः।
भविष्यन्ति महाभागाश्चत्वारो लोकसम्मताः।
सुधामा विरजश्चैव शंखः पादप एव च॥

**अर्थ**—षष्ठ द्वापर में मृत्यु = यम वैवस्वत व्यास—छठे परिवर्त में जब प्रभु यम वैवस्वत (मृत्यु) व्यास होंगे, तब मैं 'लोकाक्षि' नाम का योगीश्वर होऊंगा। उस समय मेरे दिव्य योगी दृढ़वती चार भाग्यशाली, लोकपूजित पुत्र (या शिष्य) होंगे—सुधामा, विरजा, शंख और पादप।

**सप्तमे युगे**—

सप्तमे परिवर्ते तु यदा व्यासः शतक्रतुः।
विभुर्नाम महातेजाः पूर्वमासीच्छतक्रतुः॥
तदाऽप्यहं भविष्यामि कलौ तस्मिन्युगान्तके।
जैगीषव्येति विख्यातः सर्वेषां योगिनां वरः।
तत्रापि मम ते पुत्रा भविष्यन्ति युगे तदा॥
सारस्वतः सुमेधश्च वसुवाहः सुवाहनः।

**अर्थ**—सप्तम युग में शतक्रतु (इन्द्र) व्यास—सप्तम परिवर्त युग में शतक्रतु (सौ यज्ञों को करानेवाला पुरोहित, काश्यप इन्द्र व्यास होगा। महातेजस्वी इन्द्र पहिले शतक्रतु (ऋत्विक्) ब्राह्मण = शक्र था। (बाद में देवराज इन्द्र हुआ)। उस समय कलियुग (परिवर्त) के अन्त में, मैं योगियों में श्रेष्ठ 'जैगीषव्य' होऊंगा। तब मेरे चार पुत्र (शिष्य) होंगे—सारस्वत (अपान्तरतमा—शिशु आंगिरस दाधीच), सुमेधा, वसुवाह और सुवाहन।

**अष्टमे युगे**—

वसिष्ठश्चाष्टमे व्यासः परिवर्तें भविष्यति।
कपिलश्चासुरिश्चैव तथा पंचशिखो मुनिः।
वाग्वलिश्च महायोगी सर्व एव महौजसः॥

**अर्थ**—अष्टम युग में अष्टम व्यास = वसिष्ठ मैत्रावरुणि—आठवें युग में वसिष्ठ व्यास होंगे। उस समय कपिल, आसुरि, पंचशिख और वाग्वलि—महायोगी और महातपस्वी होंगे।

**नवमे युगे**—

परिवर्तेऽथ नवमे व्यासः सारस्वतो यदा।

तदा चाहं भविष्यामि ऋषभो नाम नामतः ॥
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ।
पराशरश्च गार्ग्यश्च भार्गवो ह्यङ्गिरास्तथा ॥

अर्थ—नवम युग में नवम व्यास = सारस्वत = अपान्तरमा - नवम परिवर्त में सारस्वत व्यास होंगे। तब मैं 'ऋषभ' नाम का योगी होऊंगा। उस समय मेरे महातेजस्वी पुत्र होंगे—पराशर, गार्ग्य, भार्गव और आंगिरस।

**दशमे युगे—**

दशमे द्वापरे व्यासस्त्रिधामा नाम नामतः।
भविष्यन्ति यदा विप्रस्तदाऽहं भविता पुनः।
हिमवच्छिखरे रम्ये भृगुतुङ्गे नगोत्तमे ॥
नाम्ना भृगोस्तु शिखरं तस्मात्तच्छिखरं भृगुः।
तत्रैव मम ते पुत्रा भविष्यन्ति दृढव्रताः।
बलबन्धुर्निरामित्रः केतुश्रृंगस्तपोधनः ॥

अर्थ—दशम युग में दशम व्यास त्रिधामा—दशम परिवर्त युग में त्रिधामा नाम का व्यास होगा, तब मैं भार्गव ब्राह्मण के रूप में योगी होऊंगा। हिमालय पर रम्य भृगुतंग शिखर पर मेरे चार दृढ़वती पुत्र होंगे—बलबन्धु, निरामित्र, केतुश्रृंग और तपोधन।

**एकादशे युगे—**

एकादशे द्वापरे तु शरद्वान् व्यासो भविष्यति।
तदाऽप्यहं भविष्यामि गङ्गाद्वारे कलेर्धुरि ॥
उग्रा नाम महानादास्तत्रैव मम पुत्रकाः।
भविष्यन्ति महोजस्काः सुवृत्ता लोकविश्रुताः ॥
लम्बोदरश्च लम्बश्च लम्बाक्षो लम्बकेशकः।

अर्थ—एकादश युग में एकादश व्यास शरद्वान् (गौतम)—एकादश युग में शरद्वान् गौतम व्यास होंगे। तब मैं हरिद्वार में कलि के अन्त में उग्र नाम से होऊंगा। वहां मेरे उग्र नाम से ही चार शिष्य होंगे, जो महानाद करते होंगे—लम्बोदर, लम्ब, लम्बाक्ष और लम्बकेशक।

**द्वादशे युगे—**

द्वादशे परिवर्ते तु शततेजा महामुनिः।
भविष्यति महासत्त्वो व्यासः कविवरोत्तमः।
ततोऽप्यहं भविष्यामि अत्रिर्नाम युगान्तके ॥
हैमकं वनमासाद्य योगमास्थाय भूतले ॥

अत्रापि मम ते पुत्रा भस्मस्नानानुलेपनाः।
भविष्यन्ति महायोगा रुद्रलोकपरायणाः ॥
सर्वज्ञः समबुद्धिश्च साध्यः सर्वस्तथैव च ॥

अर्थ—द्वादशयुग में द्वादश व्यास शततेजा मुनि—द्वादश युग में महाबली श्रेष्ठ कवि महामुनि शततेजा व्यास होंगे। तब मैं अत्रि (दत्तात्रेय) नाम का योगी होऊंगा। उस समय पृथिवी पर हैमक नाम के वन में योगस्थ होकर रहूंगा। तब चार पुत्र भस्म से स्नान करेंगे। वे रुद्र के भक्त और महायशी होंगे सर्वज्ञ, समबुद्धि, साध्य और सर्व।

**त्रयोदशे युगे—**

त्रयोदशे पुनः प्राप्ते परिवर्ते क्रमेण तु।
धर्मो नारायणो नाम व्यासस्तु भविता यदा ॥
तदाऽप्यहं भविष्यामि बालिर्नाम महामुनिः।
बालखिल्याश्रमे पुण्ये पर्वते गन्धमादने ॥
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः।
सुधामा काश्यपश्चैव वसिष्ठो विरज्यस्तथा ॥

अर्थ—त्रयोदश युग में त्रयोदश व्यास धर्म नारायण—त्रयोदश परिवर्त में धर्म नारायण (द्वितीय) नाम के व्यास होंगे। तब मैं बालि नाम का महामुनि और महायोगी होऊंगा।

बालखिल्याश्रम में पुण्य गन्धमादन पर्वत पर मेरे महातपस्वी चार शिष्य होंगे—सुधामा, काश्यप, वसिष्ठ और विरजा।

**चतुर्दशे युगे—**

यदा व्यास सुरक्षस्तु पर्यायश्च चतुर्दश।
तत्रापि पुनरेवाहं भविष्यामि युगान्तिके ॥
वंशे त्वङ्गिरस श्रेष्ठो गौतमो नाम योगवित्।
तस्माद्भविष्यति पुण्यं गौतमं नाम तद्वनम् ॥
तत्रापि मम ते पुत्रा भविष्यन्ति कलौ तथा ॥
अत्रिरुग्रतपाश्चैव श्रवणोऽथ सुविष्टकः ॥

अर्थ— चतुर्दश युग के चौदहवें व्यास सुरक्षमुनि—चतुर्दश युग में सुरक्ष व्यास होंगे। युगान्त में मैं अंगिरा के वंश में गौतम आंगिरस नाम का योगी होऊंगा। उसी के नाम से वह पुण्यवन 'गौतम' कहलायेगा। उस समय मेरे युगान्त में चार शिष्य होंगे—अत्रि (आत्रेय), उग्रतपा, श्रवण और सुविष्टक।

**पंचदशे युगे—**

ततः प्राप्ते पंचदशे परिवर्ते क्रमागते ॥

त्र्यारुणिस्तु यदा व्यासो द्वापरे भविता प्रभुः ॥
तदाऽप्यहं भविष्यामि नाम्ना वेदशिरा द्विजः ।
तत्र वेदशिरा नाम अस्त्रं तत्पारमेश्वरम् ॥
भविष्यति महावीर्यं वेदशीर्षश्च पर्वतः ।
हिमवत्पृष्ठमाश्रित्य सरस्वत्या नदीतटे ॥
तदाऽपि मम ते पुत्रा भविष्यन्ति तपोधनाः ।
कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः ॥

**अर्थ**—पंचदश युग में त्र्यारुणि व्यास—पंचदश परिवर्त के आने पर त्र्यारुणि नाम का व्यास होगा । तब मैं वेदशिरा नाम का योगी होऊंगा और पारमेश्वर अस्त्र होऊंगा । महावीर्य वेदशिरा के नाम से वेदशीर्ष पर्वत होगा । हिमालय के पृष्ठ में सरस्वती के तट पर, तपस्वी मेरे चार शिष्य होंगे—कुणि, कुणिबाहु, कुशरीर और कुनेत्रक ।

**षोडशे युगे**—

ततश्च षोडशे चापि परिवर्ते क्रमागते ।
व्यासस्तु संजयो नाम भविष्यति तदा प्रभुः ॥
तदाऽप्यहं भविष्यामि गोकर्णो नाम नामतः ।
तस्माद् भविष्यते पुण्यं गोकर्णं नाम तद्वनम् ॥
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ।
काश्यपो ह्युशनाश्चैव च्यवनोऽथ बृहस्पतिः ॥

**अर्थ**—षोडश युग में व्यास संजय—सोलहवें परिवर्त युग में समर्थ संजय नाम के व्यास होंगे । उस समय मैं (शिव) गोकर्ण नाम का महायोगी होऊंगा । उस समय मेरे नाम से गोकर्णवन प्रख्यात होगा । मेरे महातेजस्वी चार पुत्र होंगे—काश्यप, उशना, च्यवन, बृहस्पति ।

**सप्तदशे युगे**—

ततः सप्तदशे चैव परिवर्ते क्रमागते ।
तदा भविष्यति व्यासो नाम्ना देवकृतंजयः ॥
तदाऽप्यहं भविष्यामि गुहावासीति नामतः ।
हिमवच्छिखरे चैव महातुङ्गे महालये ।
सिद्धक्षेत्रं महापुण्यं भविष्यति महालयम् ॥
तत्रापि मम ते पुत्रा ब्रह्मज्ञा योगवेदिनः ।
भविष्यन्ति महात्मानो मर्मज्ञा निरहंकृताः ।

उतथ्यो वामदेवश्च महाकालो महालयः ॥
तेषां शतसहस्रं तु शिष्याणां ध्यानसाधनम् ।

अर्थ—सप्तदश युग के व्यास देव कृतंजय—क्रमशः सप्तदशवें परिवर्त युग में देव कृतंजय नाम का व्यास होगा। तब मैं 'गुहावसी' नाम का महायोगी होऊंगा। मनोहर हिमालय पर्वत के महालय महातुंग पर्वत पर महापुण्य सिद्ध क्षेत्र में मेरे ब्रह्मज्ञानी और योगी पुत्र होंगे—उतथ्य, वामदेव, महाकाल और महालय। वे मर्मज्ञ एवं निरंहकारी होंगे। उनके लाखों शिष्य (अनुयायी) होंगे।

**अष्टादशे युगे—**

ततोऽष्टादशमश्चैव परिवर्ती यदा भवेत् ।
तदा ऋतञ्जयो नाम व्यासस्तु भविता मुनिः ।
तदाऽप्यहं भविष्यामि शिखण्डी नाम नामतः ॥
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः ॥
वाचश्रवाः ऋचीकः श्यावाश्वश्च दृढव्रतः ॥

अर्थ—अष्टादश युग में अठारहवां व्यास ऋतंजय—क्रमशः अठारहवें परिवर्त युग में ऋतंजय नाम के व्यास होंगे, तब मैं शिखण्डी नाम से प्रसिद्ध योगी होऊंगा। तब मेरे तपोधन पुत्र होंगे—वाचश्रवा, ऋचीक, श्यावाश्व और दृढ़व्रत।

**एकोनविंशे युगे—**

ततस्त्वेकोनविंशे तु परिवर्ते क्रमागते ।
व्यासस्तु भविता नाम्ना भरद्वाजो महामुनिः ॥
तत्रापिऽहं भविष्यामि जटामालीति नामतः ।
हिमवच्छिखरे रम्ये जटायुर्यत्र पर्वतः ॥
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ॥
हिरण्यनाभो कौशल्यः काक्षीवान् कुयुमिस्तथा ।

अर्थ—उन्नीसवें युग में उन्नीसवें व्यास भरद्वाज (भारद्वाज)—क्रमशः उन्नीसवें परिवर्त युग में महामुनि भरद्वाज व्यास होंगे। उस समय में मैं जटामाली नाम का योगी होऊंगा। हिमालय पर्वत पर जटायु शिखर पर मेरे तेजस्वी शिष्य होंगे--हिरण्यनाभ, कौसल्य, कक्षीवान् और कुयुमि।

**विंशतितमे युगे—**

ततो विंशतमे सर्गे परिवर्ते क्रमेण तु ।
वाजश्रवाः स्मृतो व्यासो भविष्यति महामतिः ॥

तदाऽप्यहं भविष्यामि ह्यट्टहासेति नामतः ।
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ॥
सुमन्तुर्बर्बरिर्विद्वान् सुबन्धुः कुशिकन्धरः ॥

**अर्थ**—बीसवें युग में बीसवें व्यास वाजश्रवा—बीसवें युग में महामति वाजश्रवा (गौतम) व्यास होंगे । तब मैं 'अट्टहास' नाम का योगी होऊंगा । वहां मेरे तेजस्वी शिष्य होंगे—सुमन्तु, बर्बरि, सुबन्धु और कुशिकन्धर ।

**एकविंशे युगे**—

एकविंशे पुनः प्राप्ते परिवर्ते क्रमेण तु ।
वाचस्पतिः स्मृतो व्यासो यदा स ऋषिसत्तमः ।
तदाऽप्यहं भविष्यामि दारुको नाम नामतः ।
तस्माद्भविष्यते पुण्यं देवदारुवनं महत् ॥
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ।
प्लक्षो दाक्षायणिश्चैव केतुमाली बकस्तथा ॥

**अर्थ**—इक्कीसवें युग में इक्कीसवां व्यास वाचस्पति—क्रमशः इक्कीसवें युग ऋषिश्रेष्ठ वाचस्पति नाम के व्यास होंगे । तब मैं दारुक नाम का योगीश्वर होऊंगा । उनके नाम से महान् देवदास वन प्रथित होगा । उस समय मेरे तेजस्वी शिष्य होंगे– प्लक्ष, दाक्षायणी, केतुमाली और बक ।

**द्वाविंशे युगे**—

द्वाविंशे परिवर्ते तु व्यासः शुक्लायनो यदा ।
तदाऽप्यहं भविष्यामि वाराणस्यां महामुनिः ।
नाम्ना वै लाङ्गली भीमो यत्र देवा सवासवाः ।
द्रक्ष्यन्ति मां कलौ तस्मिन्नतवीर्णं हलायुधम् ॥
यत्रापि मम ते पुत्रा भविष्यन्ति सुधार्मिकाः ।
तुल्यार्चि मधुः पिङ्गाक्षः श्वेतकेतुस्तथैव च ॥

**अर्थ**—बाईसवें युग के बाईसवें व्यास शुक्लायन—बाईसवें युग में शुक्लायन नाम के व्यास होंगे । तब मैं वाराणसी में लांगली भीम महामुनि (महायोगी) होऊंगा । उस समय मुझे युगान्त में इन्द्रसहित देवगण हलायुध' के रूप में देखेंगे । उस समय मेरे अत्यन्त धार्मिक पुत्र होंगे –तुल्यार्चि, मधु, पिगांक्ष और श्वेतकेतु ।

**त्रयोविंशे युगे**—

परिवर्ते त्रयोविंशे तृणविन्दुर्यदा मुनिः ।
व्यासो भविष्यति ब्रह्मा तदाऽहं भविता पुनः ।

श्वेतो नाम महाकायो मुनिपुत्रः सुधार्मिकः ।
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ।।
उशिजो बृहदुक्थश्च देवलः कविरेव च ।।

अर्थ—तेईसवें युग में तृणबिन्दु व्यास—तेईसवें परिवर्त युग में महामुनि तृणबिन्दु नाम के व्यास होंगे। तब मैं श्वेत ब्रह्मा (ब्राह्मण) नाम से महाकाय मुनिपुत्र, सुधार्मिक योगी होऊंगा। उस समय मेरे शिष्य होंगे—उशिज, बृहदुक्थ, देवल और कवि।

**चतुर्विंशे युगे—**

परिवर्ते चतुर्विंशे ऋक्षो व्यासो भविष्यति ।
तत्राहं भविता ब्रह्मन् कलौ तस्मिन्युगान्तिके ।
शूली नाम महायोगी नैमिषे योगिवन्दिते ।।
तत्रापि मम ते पुत्रा भविष्यन्ति तपस्विनः ।
शीलहोत्रोऽग्निवेश्यश्च युवनाश्वः शरद्वसुः ।।

अर्थ—चौबीसवें युग में चौबीसवें व्यास ऋक्ष (वाल्मीकि)—चौबीसवें युग में ऋक्ष (वाल्मीकि) नाम का व्यास होगा। युगान्त में मैं 'शूली' नाम का महायोगी नैमिषारण्य होऊंगा। उस समय में मेरे चार तपस्वी शिष्य होंगे—शीलहोत्र, अग्निवेश्य, युवनाश्व और शरद्वसु।

**पंचविंशे युगे—**

पंचविंशे पुनः प्राप्ते परिवर्ते यथाक्रमम् ।
वासिष्ठस्तु यदा व्यासः शक्तिनाम भविष्यति ।
तदाऽप्यहं भविष्यामि दण्डी मुण्डीश्वरः प्रभुः ।
कोटिवर्षं समासाद्य नगरं देवपूजितम् ।
तत्रापि मम ते पुत्रा भविष्यन्ति क्रमागताः ।
योगात्मनो महात्मानः सर्वे ते ह्यूर्ध्वरेतसः ।
छगलः कुम्भकर्षाश्वः कुम्भश्चैव प्रवाहुकः ।

अर्थ—पच्चीसवें युग में पच्चीसवें व्यास शक्ति वसिष्ठ—यथाक्रम पच्चीसवें परिवर्त के प्राप्त होने पर शक्ति वासिष्ठ नाम के व्यास होंगे। उस समय मैं, दण्डी मुनीश्वर प्रभु नाम से पूज्य कोटिवर्ष नगर में रहूंगा। तब मेरे चार प्रधान शिष्य होंगे—वे सभी योगी, महात्मा और ब्रह्मचारी होंगे—छगल, कुम्भकर्षाश्व, कुम्भ और प्रबाहुक।

**षड्विंशे युगे—**

षड्विंशे परिवर्ते तु यदा व्यासः पराशरः ।

तदाऽप्यहं भविष्यामि सहिष्णुर्नाम नामतः ॥
पुण्यं रुद्रवटं प्राप्यं कलौ तस्मिन् युगान्तिके ।
तत्रापि मम ते पुत्रा भविष्यन्ति सुधार्मिकाः ॥
उलूको वैद्युतश्चैव शर्वको ह्याश्वलायनः ।

**अर्थ**—छब्बीसवें युग में छब्बीसवें व्यास पराशर—छब्बीसवें युग में व्यास पराशर होंगे। युगान्त कलि में पुण्य रुद्रवट के आश्रम में मैं 'सहिष्णु नाम का योगी होऊंगा। उस समय मेरे अत्यन्त धार्मिक शिष्य होंगे— उलूक, वैद्युत, शर्वक और आश्वलायन।

**सप्तविंशे युगे—**

सप्तविंशतमे प्राप्ते परिवर्ते क्रमागते ।
जातूकर्ण्यो यदा व्यासो भविष्यति तपोधनः ।
तदाऽप्यहं भविष्यामि सोमशर्मा द्विजोत्तमः ।
प्रभासं तीर्थमासाद्य योगात्मा लोकविश्रुतः ॥
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः ।
अक्षपादः कणादश्च उलूको वत्स एव च ॥

**अर्थ**—सत्ताईसवें युग में सत्ताईसवें व्यास कातूकर्ण्य—सत्ताईसवें युग में क्रमागत रूप से तपस्वी जातूकर्ण्य (पाराशर्य) व्यास होंगे। उस समय मैं ब्राह्मण सोमशर्मा के नाम से महायोगी के रूप में प्रसिद्ध प्रभासतीर्थ में रहूंगा। वहां मेरे चार तपस्वी शिष्य होंगे—अक्षपाद (गौतम), कणाद, उलूक और वत्स।

**अष्टाविंशे युगे—**

अष्टाविंशे पुनः प्राप्ते परिवर्ते क्रमागते ।
पराशरसुतः श्रीमान् विष्णुर्लोकपितामहः ॥
यदा भविष्यति व्यासो नाम्ना द्वैपायनः प्रभुः ।
तदा षष्ठेन चांशेन कृष्णः पुरुषसत्तमः ॥
वसुदेवाद् यदुश्रेष्ठो वासुदेवो भविष्यति ।

× × ×

दिव्यां मेरुगुहां पुण्यां त्वया सार्धं च विष्णुना ।
भविष्यामि तदा ब्रह्मन्नकुली नाम नामतः ॥
तत्रापि मम ते पुत्रा भविष्यन्ति तपस्विनः ।
कुशिकश्चैव गार्ग्यश्च मित्रको रुष्ट एव च ॥
योगयुक्ता महात्मानो ब्राह्मणा वेदपारगाः ।
प्राप्य माहेश्वरं योगं विमला ह्यूर्ध्वरेतसः ॥

रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ।।

(वायुपुराणे, त्रयोविंशोऽध्यायः)

अर्थ— अट्ठाइसवें युग में पाराशर्य कृष्णद्वैपायन व्यास—अट्ठाइसवें परिवर्त युग में पराशरसुत, श्रीमान् विष्णु के अवतार पितामह (पाण्डवों के) श्री कृष्णद्वैपायन व्यास होंगे। उसी समय महायोगीश्वर पुरुषोत्तम भगवान् के षष्ठांश से उत्पन्न वसुदेव के पुत्र यदुश्रेष्ठ वासुदेव कृष्ण होंगे।

उस समय मैं दिव्य, पुण्य, मेरुगुहा में विष्णु (कृष्ण वासुदेव) के साथ 'नकुली' नाम से महायोगी होऊंगा। उस समय मेरे चार तपस्वी पुत्र (शिष्य) होंगे—कुशिक (कौशिक), गार्ग्य, मित्रक और रुष्ट। वे योगी, महात्मा, ब्राह्मण, वेदज्ञ, विमल (निष्पाप) ब्रह्मचारी माहेश्वर योग को प्राप्त करके रुद्रलोक (शिवधाम) को जायेंगे, जहां से पुनर्जन्म नहीं होता है।

**वेदव्यास परम्परा:—**

द्वापरे प्रथमे स्वायम्भुवो मतः।
बिभेद बहुधा वेदोपनिषद्ब्राह्मणान् प्रभुः।
द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः ।।
तृतीये चोशना व्यासश्चतुर्थेस्याद् बृहस्पतिः ।।
सविता पंचमे व्यासः षष्ठे मृत्युः प्रकीर्तितः ।।
सप्तमे च तथैवेन्द्रो वसिष्ठश्चाष्टमे मतः ।।
सारस्वतश्च नवमे त्रिधामा दशमे मतः ।।
एकादशे तु ऋषभः सुतेजा द्वादशे स्मृतः।
त्रयोदशे तथा धर्मः सुचक्षुस्तु चतुर्दशे ।।
त्रय्यारुणिः पंचदशे षोडशे तु धनंजयः।
कृतंजय सप्तदशे ह्यष्टादशे ऋतंजयः ।।
ततो व्यासो भरद्वाजस्तस्मादूर्ध्वं तु गौतमः ।।
वाचश्रवाश्चैकविंशे तस्मान्नारायणः परः ।।
तृणविन्दुस्त्रयोविंशे वाल्मीकिस्तत्परः स्मृतः ।।
पंचविंशे तथा शक्तिस्ततो पराशरः स्मृतः ।।
सप्तविंशे तथा व्यासो जातुकर्णो महामुनिः।
पराशरसुतो व्यासः कृष्णद्वैपायनोऽभवत् ।।
स एव सर्ववेदानां पुराणानां प्रदर्शकः ।।

(कूर्मपुराण अध्याय ५२)

अर्थ—प्रथम द्वापर (प्रथम परिवर्त युग) में स्वायम्भुव (कश्यप) वेदव्यास थे, उन्होंने अनेकबिध से वेद, ब्राह्मण और उपनिषदों का विभाजन किया। द्वितीय द्वापर (परिवर्त युग) में प्रजापति (ब्रह्मा =वरुण) वेदव्यास थे। तृतीय युग में उशना काव्य (शुक्राचार्य) वेदव्यास थे। चतुर्थ युग में बृहस्पति व्यास हुए। पांचवें युग में सविता (विवस्वान्) पंचम व्यास थे। षष्ठ युग में वैवस्वतमनु व्यास हुए और सप्तम युग में इन्द्र शतक्रतु=शक्र) वेदव्यास बने। अष्टमयुग में वसिष्ठ, नवम युग में सारस्वत (अपान्तरतमा), दशम युग में त्रिधामा ऋषि, एकादश में ऋषभ, द्वादश युग में सुतेजा, त्रयोदश में धर्म, चतुर्दश युग में सुचक्षु, पंचदश में त्यारुणि, षोडश में धनंजय, सप्तदश में कृतंजय, अष्टादश में ऋतंजय व्यास थे। तदनन्तर उन्नीसवें युग में भरद्वाज, बीसवें युग में गौतम, इक्कीसवें में वाचश्रवा, बाइसवें में नारायण (द्वितीय), तेईसवें युग में तृणबिन्दु, चौबीसवें में वाल्मीकि, पच्चीसवें युग में शक्ति वासिष्ठ, तदनन्तर छब्बीसवें युग में पराशर व्यास, सत्ताईसवें युग में जातूकर्ण महामुनि व्यास और अट्ठाईसवें (अन्तिम) युग में कृष्णद्वैपायन व्यास हुए, वही व्यास सभी वेदों और पुराणों के पथप्रदर्शक (रचयिता) थे।

**पुराणप्रवक्तृपरम्परा:—**

ब्रह्मा ददौ शास्त्रमिदं पुराणं मातरिश्वने।
तस्माच्चोशनसा प्राप्तं तस्माच्चापि बृहस्पतिः॥
बृहस्पतिस्तु प्रोवाच सवित्रे तदनन्तरम्॥
सविता मृत्यवे प्राह मृत्युश्चेन्द्राय वै पुनः॥
इन्द्रश्चापि वसिष्ठाय सोऽपि सारस्वताय च॥
सारस्वतस्त्रिधाम्ने च त्रिधामा च शरद्वते।
शरद्वतस्त्रिविष्टाय सोऽन्तरिक्षाय दत्तवान्॥
वर्षिणे चान्तरिक्षो वै सोऽपि च त्रयारुणाय।
त्र्य्यारुणो धनंजये स च प्रादात् कृतंजये।
कृतंजयात्तृणंजयो भरद्वाजाय सोऽप्यथ॥
गौतमाय भरद्वाजः सोऽपि निर्यन्तरे पुनः॥
निर्यन्तरस्तु प्रोवाच तथा वाजश्रवाय च॥
स ददौ सोमशुष्माय स ददौ तृणबिन्दवे॥
तृणबिन्दुस्तु ऋक्षाय ऋक्षः प्रोवाच शक्तये।
शक्तेः पराशरश्चापि गर्भस्थः श्रुतवानिदम्।
पराशराज्जातुकर्णस्तस्माद्द्वैपायनः प्रभुः।

द्वैपायनात्पुनश्चापि मया प्रोक्तं द्विजोत्तमाः ।
मया वै तत्पुनः प्रोक्तं पुत्रायऽमितबुद्धये ।।

(वायुपुराणे अध्याय १०३)

अर्थ— ब्रह्मा (कश्यप) ने यह पुराणशास्त्र मातरिश्वा (वायुमुनि) को दिया (पढ़ाया), वायुमुनि से उशना (शुक्र) ने प्राप्त किया, शुक्र से बृहस्पति ने पढ़ा, देवगुरु बृहस्पति ने सविता (विवस्वान्) को पढ़ाया और विवस्वान् ने अपने पुत्र वैवस्वत यम को पुराण पढ़ाया । वैवस्वत यम ने अपने शिष्य इन्द्र (शतक्रतु) को पढ़ाया, इन्द्र ने वसिष्ठ ऋषि को पुराण अध्ययन कराया, वसिष्ठ ने सारस्वत दाधीच (अपान्तरतमा) ऋषि को पुराण पढ़ाया । सारस्वत ने त्रिधामा को, त्रिधामा ने शरद्वान् को, शरद्वान् ने त्रिविष्ट को, उसने अन्तरिक्ष ऋषि को पुराण विद्या दी । अन्तरिक्ष ने वर्षी को, वर्षी ने त्र्यारुणि को, त्र्यारुणि ने धनंजय को, उसने कृतंजय को पुराण पढ़ाया । कृतंजय से पुराण तृणंजय ने पढ़ा, उसने भरद्वाज को और उसने अपने शिष्य निर्यन्तर को, निर्यन्तर ने वाजश्रवा को और उसने सोमशुष्म को पुराण विद्या दी । उसने तृणबिन्दु को दी, तृणबिन्दु ने ऋक्ष (वाल्मीकि) ऋषि को पुराण पढ़ाया । ऋक्ष ने शक्ति को, शक्ति ने पराशर को गर्भ में ही पुराण सुनाया । पराशर से जातूकर्ण्य ने पुराण सुना और जातूकर्ण्य ने कृष्णद्वैपायन को पुराणविद्या प्रदान की ।

श्रीकृष्ण द्वैपायन ने मुझे (रोमहर्षण सूत) को, हे ब्राह्मणो पुराण पढ़ाया और मैंने अपने अमितबुद्धि पुत्र उग्रश्रवा सौति को पुराण विद्या दी ।

**कुशिकवंशः—**

जह्नोरजस्तु तनयो बलाकाश्वस्तु तत्सुतः ।
कुशिको नाम धर्मज्ञस्तस्य पुत्रो महीपते ।३।
गाधिर्नामाभवत् पुत्रः कौशिकः पाकशासनः ।६।
तस्य कन्याभवद् राजन् नाम्ना सत्यवती प्रभो ।
तां गाधिर्भृगुपुत्राय सर्चीकाय ददौ प्रभुः ।७।
ततः सत्यवती पुत्रं जनयामास भार्गवः ।२९।
ऋचीको जनयामास जमदग्निं तपोनिधिम् ।३१।
अर्जुनो नाम तेजस्वी क्षत्रियो हैहयाधिपः ।३५।
दत्तात्रेयप्रसादेन राजा बाहुसहस्रवान् ।३६।
आपवस्तु ततो रोषाच्छशापार्जुनमच्युत ।४२।
विश्वामित्रस्य पौत्रस्तु रैभ्यपुत्रो महातपाः ।५६।
परावसुर्महाराज क्षिप्त्वाऽऽह जनसंसदि ।५७।

प्रतर्दनप्रभृतयो राम किं क्षत्रिया न ते ।५८।

(महा० १२।अ० ४९)

**अर्थ**—जह्नु का पुत्र अज (अजक) था, उसका पुत्र था बलाकाश्व और उसका पुत्र था धर्मज्ञ कुशिक (राजा)। कुशिक का पुत्र हुआ गाधि जिसको कौशिक और पाकशासन (इन्द्र) भी कहते हैं। गाधि की कन्या सत्यवती थी। गाधि ने अपनी कन्या सत्यवती भृगुपुत्र (भार्गव) ऋचीक को दे दी। सत्यवती ने तपोनिधि पुत्र जमदग्नि को उत्पन्न किया। तेजस्वी हैहयाधिपति क्षत्रिय राजा अर्जुन, महर्षि दत्तात्रेय की कृपा से 'बाहु सहस्रवान् (हजार भुजाओं वाला या हजार पुत्रों वाला)।' आपने (वसिष्ठ ने) क्रोध में अर्जुन को (उसके नाश का) शाप दिया।

विश्वामित्र का पौत्र और रैभ्य का पुत्र महातपस्वी परावसु था। उसने आक्षेपपूर्वक परशुराम से कहा--"क्या प्रतर्दन इत्यादि क्षत्रिय नहीं हैं?"

**पुराणप्रवक्तृपरम्परा (विष्णुपुराणे)**—

इदमार्षं पुरा प्राह ऋभवे कमलोद्भवः।
ऋभुः प्रियव्रतस्याह स च भागुरयेऽब्रवीत्॥
भागुरिः स्तम्भमित्राय दधीचाय स चोक्तवान्।
सारस्वताय तेनोक्तं भृगुस्सारस्वतेन च।
भृगुणा पुरुकुत्साय नर्मदायै स चोक्तवान्॥
नर्मदा धृतराष्ट्राय नागाय पूरणाय च॥
ताभ्यां च नागराजाय प्रोक्तं वासुकये द्विज।
वासुकिः प्राह वत्साय वत्सश्चाश्वतराय वै।
कम्बलाय च तेनोक्तमेलापुत्राय तेन वै।
पातालं समनुप्राप्तस्ततो वेदशिरा मुनिः।
प्राप्तवानेतदखिलं स च प्रमतये ददौ।
दत्तं प्रमतिना चैतज्जातूकर्णाय धीमते।
जातूकर्णेन चैवोक्तमन्येषां पुण्यकर्मणाम्।
पुलस्त्यवरदानेन मयाप्येतत्स्मृतिं गतम्।
मयापि तुभ्यं मैत्रेय यथावत्कथितं त्विदम्॥

(विष्णु पुराण ६।८)

**अर्थ**—इस आर्ष (ऋषिकृत) इस विष्णु पुराण (आदिम-मूल) को ब्रह्मा (कश्यप) ने ऋभु को पढ़ाया, ऋभु ने प्रियव्रत (अज्ञात वंश) को पढ़ाया, प्रियव्रत ने भागुरि (भृगु ?) को, भागुरि ने स्तम्भमित्र को और उसने दधीचि को पढ़ाया।

दधीचि ने (अपने पुत्र) सारस्वत (अपान्तरतमा) ऋषि को, सारस्वत ने भृगु (भार्गव अज्ञात) को, भृगु ने पुरुकुत्स (ऐक्ष्वाक) को, पुरुकुत्स ने (अपनी पत्नी) नर्मदा (नागकन्या) को यह पुराण पढ़ाया। नर्मदा ने धृतराष्ट्र नाग और पूरण नाग को, उन दोनों नाग ऋषियों ने वासुकि नागराज को, वासुकि ने वत्स नाग को, वत्स ने अश्वतर को, उसने कम्बल को, उसने ऐलपुत्र नाग को, उसने पाताल (विदेश) में जाकर वेदशिरा (मार्कण्डेय) मुनि को, वेदशिरा ने प्रमति (भार्गव) को पुराण पढ़ाया। प्रमति ने जातूकर्ण्य ऋषि को, जातूकर्ण्य ने अन्य पुण्यकर्मा ऋषियों को (उनमें पौलस्त्य-पुलस्त्य ऋषि थे) पढ़ाया। पुलस्त्य से मैंने (पराशर ने) विष्णु-पुराण प्राप्त किया! मैंने हे मैत्रेय (बकदाल्भ्य) ऋषे! आपको यथावद् यह पुराण सुना दिया है।

## मन्त्रद्रष्टार ऋषिगणाः

### (वायुपुराण अ० ५९ श्लोक ८८

**मन्त्रकृतः ऋषयः आदिवंशाः—**

भृगुर्मरीचिरत्रिश्च अङ्गिराः पुलहः क्रतुः।
मनुर्दक्षो वसिष्ठश्च पुलस्त्यश्चेति ते दश ॥

अर्थ—भृगु, मरीचि, अत्रि, अंगिरा, पुलह, क्रतु, मनु, दक्ष, वसिष्ठ और पुलस्त्य—ये दश (आदिम ऋषि) थे।

**ऋषिगणः—**

काव्यो बृहस्पतिश्चैव कश्यपश्चोशनास्तथा।
उतथ्यो वामदेवश्च अयास्यश्चौशिजस्तथा॥
कर्दमो विश्रवाः शक्तिर्बालखिल्यास्तथा धराः।
इत्येते ऋषयः प्रोक्ता ज्ञानतो ऋषितां गताः॥

अर्थ—उशनाकाव्य, बृहस्पति, कश्यप, उशना (वही), उतथ्य, वामदेव, अयास्य, औशिज, कर्दम, विश्रवा, शक्ति, बालखिल्य तथा धरा—ये ऋषि कथित हैं जो ज्ञान द्वारा ऋषित्व को प्राप्त हुए।

**ऋषिपुत्राः—**

वत्सरो रहूगणश्चैव भरद्वाजस्तथैव च।
बृहदुक्थः शरद्वांश्च अगस्त्यश्चौशिजस्तथा॥
ऋषिर्दीर्घतमाश्चैव बृहदुक्थः शरद्वतः।
वाजश्रवाः सुवित्तश्च सुवाग्वेषपरायणः।
दधीचः शङ्खश्चैव राजा वैश्रवणस्तथा।
इत्येते ऋषिकाः प्रोक्ताः·····················॥

**अर्थ**—वत्सर, रहूगण, भरद्वाज, बृहदुक्थ, शरद्वान्, अगस्त्य, औशिज, दीर्घतमा, बृहदुक्थ, शरद्वान्, वाजश्रवा, सुवित्त, सुवाग्वेष (श्यावाश्व), दधीचि, शंख, वैश्रवण ये ऋषीक कहे गये हैं।

## आङ्गिरसवंशीया मन्त्रकृतः ऋषयः

**भार्गवाः**—

भृगुः काव्यः प्रचेतास्तु दधीचो ह्याप्नुवानपि।
औवोऽथ जमदग्निश्च विदः सारस्वतस्तथा॥
अद्विषेणो ह्यरूपश्च वीतहव्यः सुमेधसः॥
वैन्यः पृथुर्दिवोदासः प्रश्वारो गृत्समन्तभः।
एकोनविंशदित्येते ऋषयो मन्त्रवादिनः॥

**अर्थ**—भृगु, काव्य, उशना, प्रचेता (वरुण), दधीचि, आप्नुवान्, और्व, जमदग्नि, विद, सारस्वत, अद्विषेण, अरूप, वीतहव्य, सुमेधा, वैन्य, पृथु, दिवोदास, प्रश्वार, गृत्समद, नभ—ये उन्नीस मन्त्रकर्ता अंगिरस ऋषि थे।

**आङ्गिरसः**—

अङ्गिरा वेधसश्चैव भरद्वाजोऽथ वाष्कलिः।
तथामृतस्तथा गार्ग्यः शेनी संहृतिरेव च।
पुरुकुत्सोऽथ मान्धाता अम्बरीषस्तथैव च॥
आहार्योपाजमीढश्च ऋषभो बलिरेव च।
पृषदश्वो विरूपश्च कण्वश्चेवाथ मुद्गलः।
युवनाश्वः पौरुकुत्स्यस्त्रसदस्युः सदस्युमान्॥
उतथ्यश्च भारद्वाजस्तथा वाजश्रवा अपि।
आयाप्यश्च सुवित्तिश्च वामदेवस्तथैव च।
औशजो बृहदुक्थश्च ऋषिर्दीर्घतमा तथा॥
कक्षीवांश्च त्रयस्त्रिशत् स्मृता अङ्गिरसो वराः।
एते मन्त्रकृतः सर्वे काश्यपांस्तु निबोधत।

**अर्थ**—अंगिरा, वेधस, भरद्वाज, वाष्कलि, गार्ग्य, शेनी, संहृति, पुरुकुत्स, मान्धाता, अम्बरीष, आहार्य, अजमीढ़, ऋषभ, बलि, पृषदश्व, विरूप, कण्व, मुद्गल, युवनाश्व, पौरुकुत्स त्रसदस्यु, सदस्युमान्, उतथ्य, भरद्वाज, वाजश्रवा, आयाप्य, अयास्य, सुवित्ति, वामदेव, औशज, बृहदुक्थ, दीर्घतमा, कक्षीवान्—ये ३३ आंगिरस मन्त्रकर्ता ऋषि थे।

अब काश्यप ऋषियों के नाम सुनिये।

**काश्यपाः—**

काश्यपश्चैव वत्सारो विभ्रमो रैभ्य एव च ।
असितो देवलश्चैव षडेते ब्रह्मवादिनः ॥

**अर्थ**—काश्यप, वत्सार, विभ्रम, रैम्य, असित और देवल ये छः प्रमुख ब्रह्मकर्त्ता (वेदकर्त्ता) काश्यप ऋषि थे।

**आत्रेयः—**

अत्रिरर्च्चिसनश्चैव श्यावाश्वश्चाथ निष्ठुरः ।
बल्गूतको मुनिर्धीमांस्तथा पूर्वातिथिश्च यः ।
इत्येते चात्रयः प्रोक्ता मन्त्रकारा महर्षयः ।

**अर्थ**—अत्रि, अर्च्चिसन, श्यावाश्व, निष्ठुर, बल्गूतक, विद्वान् ऋषि पूर्वातिथि—ये आत्रेय मन्त्रकर्त्ता ऋषि थे।

**वासिष्ठाः—**

वसिष्ठश्चैव शक्तिश्च तथैव च पराशरः ।
चतुर्थ इन्द्रप्रमितिः पंचमस्तु भरद्वसुः ॥
षष्ठस्तु मैत्रावरुणः कुण्डिनः सप्तमस्तथा ॥
सुद्युम्नश्चाष्टमश्चैव नवयोऽथ बृहस्पतिः ॥
दशमस्तु भरद्वाजो मन्त्रब्राह्मणकारकाः ॥

**अर्थ**—वसिष्ठ, शक्ति, पराशर, चतुर्थ इन्द्रप्रमिति, पंचम भरद्वसु, षष्ठ मैत्रावरुणि, कुण्डिन सप्तम, अष्टम सुद्युम्न, नवम बृहस्पति और दशम भरद्वाज—ये मन्त्रों और ब्राह्मणग्रन्थों के रचयिता ऋषिगण थे।

**कृष्णद्वैपायनशिष्यपरम्पराः—**

पराशरात् सत्यवत्यामंशांशकलया विभुः ।
अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ।
पैलाय संहितमाद्यां बह्वृचाख्यामुवाच ह ।
वैशम्पायसंज्ञाय निगदाख्यं यजुर्गणम् ॥
साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् ॥
अथर्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे ।

(भागवते १२।६

अर्थ—पराशर से सत्यवती द्वारा भगवदंशकला से प्रभु, महाभाग्यशाली भगवान् कृष्णद्वैपायन व्यास ने वेद की चार संहितायें बनाईं—उन्होंने अपने प्रमुख शिष्य पैल को ऋग्वेद (बह्वृच) संहिता पढ़ाई, वैशम्पायन को निगद (गद्यरूप) यजुर्वेद, जैमिनि को सामवेद और अपने शिष्य सुमन्तु को अथर्ववेद पढ़ाया।

**व्यासशिष्याः—**

अस्मिन् युगे कृतो व्यासः पाराशर्यः परंतपः ।
द्वैपायन इति ख्यातो विष्णोरंशः प्रकीर्तितः ॥
ब्रह्मणा चोदितः सोऽस्मिन्वेदं व्यस्तुं प्रचक्रमे ।
अथ शिष्यान्स जग्राह चतुरो वेदकारणात् ।
जैमिनिं च सुमन्तुं च वैशम्पायनमेव च ।
पैलं तेषां चतुर्थं तु पंचमं लोमहर्षणम् ॥
ऋग्वेदश्रावकं पैलं जग्राह विधिवद् द्विजम् ।
यजुर्वेदप्रवक्तारं वैशम्पायनमेव च ॥
जैमिनिं सामवेदार्थश्रावकं सोऽन्वपद्यत ।
तथैवाथर्ववेदस्य सुमन्तुमृषिसत्तमम् ॥
इतिहासपुराणस्य वक्तारं सम्यगेव हि ।
मां चैव प्रतिजग्राह भगवानीश्वरः प्रभुः ॥

**अर्थ**—इस (द्वापर) युग में पाराशर्य कृष्णद्वैपायन व्यास विष्णु के अंशावतार कहे गये हैं। ब्रह्मा (ईश्वर) प्रेरणा से उन्होंने वेद का विस्तार करना प्रारम्भ कर दिया। उन्होंने प्रमुख चार शिष्यों को वेद पढ़ाये। जैमिनि, सुमन्तु, वैशम्पायन, पैल और पांचवें शिष्य लोमहर्षण थे। उन्होंने शिष्य पैल को ऋग्वेद, वैशम्पायन को यजुर्वेद, जैमिनि को सामवेद पढ़ाया। अथर्ववेद प्रमुख रूप से सुमन्तु को और पंचमवेद इतिहासपुराण को मुझ (लोमहर्षण) को भगवान् प्रभु व्यास ने पढ़ाया।

**पैलशिष्याः—**

ऋचो गृहीत्वा पैलस्तु व्यभजत्तद्द्विधा पुनः ।
द्विः कृत्वा संयुगे चैव शिष्याभ्यामददात्प्रभुः ।
इन्द्रप्रमतये चैकां द्वितीयां वाष्कलाय च ।
चतस्रः संहिताः कृत्वा वाष्कलिर्द्विजसत्तमः ।
शिष्यानध्यापयामास शुश्रूषाभिरतान् हि तान् ॥
बोध्यं तु प्रथमां शाखां द्वितीयामग्निमाठरम् ।
पराशरं तृतीयां तु याज्ञवल्क्यमथापराम् ॥
इन्द्रप्रमतिरेकां तु संहितां द्विजसत्तमः ।
अध्यापयन्महाभागं माण्डूकेयं यशस्विनम् ॥
सत्यश्रवसमग्रचं तु पुत्रं स तु महायशाः ।
सत्यश्रवा सत्यहितं पुनरध्यापयद् द्विजः ॥
सोऽपि सत्यतरं पुत्रं पुनरध्यापयत्प्रभुः ।

सत्यश्रियं महात्मानं सत्यधर्मपरायणम् ॥
अभवंस्तस्य शिष्या वै त्रयस्तु सुमहौजसः ।
सत्यश्रियस्तुविद्वासः शास्त्रग्रहणतत्पराः ॥
शाकल्यः प्रथमस्तेषां तस्मादन्यो रथीतरः ।
वाष्कलिश्च भारद्वाज इति शाखाप्रवर्तकाः ।

अर्थ— व्यास से पैल ने ऋग्वेद पढ़कर उसने पुनः उसके दो विभाग किये अर्थात् एक साथ दो शिष्यों को पढ़ाया—एक इन्द्रप्रमति और दूसरा बाष्कलि था। बाष्कलि के चार शिष्यों ने चार संहितायें (शाखायें) बनाई। सेवा में रत शिष्यों में से बौध्य ने प्रथम बौध्यशाखा, द्वितीय अग्निमाठर शाखा, तृतीय पाराशर शाखा और चतुर्थी याज्ञवल्क्य शाखा बनाई। पैलशिष्य इन्द्रप्रमति ने अपनी ऋग्वेद संहिता (शाखा) महाभाग्य यशस्वी माण्डूकेय (शौनक) को पढ़ाई। यशस्वी माण्डूकेय ने अपने पुत्र सत्यश्रवा को पढ़ाई। उसने भी अपने पुत्र सत्यहित को पढ़ाई। पुनः सत्यहित ने अपने पुत्र सत्यतर को वह ऋक्संहिता शाखा पढ़ाई। उसने अपने पुत्र सत्यश्री को पढ़ाई जो महामनस्वी और सत्यधर्मपरायण था। सत्यश्री के सुमहातेजस्वी, विद्वान्, शास्त्रग्रहण में तत्पर तीन शिष्य थे, प्रथम शाकल्य (देवमित्र), द्वितीय रथीतर और तृतीय बाष्कलि भारद्वाज। ये तीनों अपनी-अपनी ऋग्वेद शाखा के प्रवर्तक थे।

पैलः स्वसंहितामूचे इन्द्रप्रमितये मुनिः ।
वाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥
चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गवः ।
पराशरायाग्निमित्रे इन्द्रप्रमितिरात्मवान् ।
अध्यापयत् संहितां स्वां माण्डूकेयमृषिं कविम् ॥
तस्य शिष्यो देवमित्रः सौभर्यादिभ्य ऊचिवान् ॥

(भागवते १२।६)

× × ×

वेदमित्रस्तु शाकल्यो महात्मा द्विजसत्तमः ।
चकार संहिताः पञ्च बुद्धिमान् पदवित्तमः ।
तच्छिष्या अभवन् पञ्च मुद्गलो गालवस्तथा ॥
शालीयश्च तथा वात्स्यः शैशिरेयस्तु पंचमः ॥ (वायुपुराणे)
बाष्कलिश्च भारद्वाजस्तिस्रः प्रोवाच संहिताः ।
रथीतरो निरुक्तञ्च पुनश्चक्रे चतुर्थकम् ॥

तस्य शिष्यास्तु चत्वारः पैलश्चेलकस्तथा ।
धीमान् शितबलाकश्च गजश्चैव द्विजोत्तमाः ।।

(वायुपुराण अ० ६०)

**अर्थ**—पैल ने अपनी (ऋग्वेद) संहिता मुनि इन्द्रप्रमिति को पढ़ाई। इन्द्रप्रमिति ने बाष्कल को, उसने भी अपने चार शिष्यों को पढ़ाई—बौध्य, याज्ञवल्क्य, पराशर और अग्निमित्र को पढ़ाई। इन्द्रप्रमिति ने अपनी संहिता माण्डूकेय ऋषि को पढ़ाई। उसने अपने शिष्य देवमित्र शाकल्य को और शाकल्य ने सौभरि आदि शिष्यों को पढ़ाई।

वेदमित्र शाकल्य के पांच शिष्य—विद्वान् ब्राह्मण वेदमित्र शाकल्य ने, जो पदवेत्ता था, पांच शिष्यों के माध्यम से पांच ऋग्वेद शाखा कीं—वे शिष्य थे—मुद्गल, गालव, शालीय, वात्स्य और पंचम शैशिरेय।

बाष्कलि भारद्वाज के तीन शिष्य—बाष्कलि भारद्वाज के तीन शिष्यों ने संहितायें बनाईं। रथीतर ने पुनः चतुर्थ निरुक्त शास्त्र को रचा। उस रथीतर के चार शिष्य थे—पैल, चेलक, विद्वान् शितबलाक और गज।

**वैशम्पायनशिष्यपरम्परा**—

वैशम्पायनगोत्रोऽसौ यजुर्वेदं व्यकल्पयत् ।
षडशीतिस्तु येनोक्ताः संहिता यजुषां शुभाः ।।

× × ×

उदीच्या मध्यदेशाश्च प्राच्याश्चैव पृथग्विधाः ।
श्यामायनिरुदीच्यानां प्रधानः सम्बभूव ह ।
मध्यप्रतिष्ठानामरुणिः प्रथमः स्मृतः ।
आलम्बिरादिः प्राच्यानां त्रयोदशादयस्तु ते ।

**अर्थ**—वैशम्पायन गोत्रीय शिष्य ने यजुर्वेद की संरचना की। (उसके शिष्यों ने) छियासी (८६) कृष्ण यजुर्वेद की श्रेष्ठ संहितायें बनाईं—प्रवचन कीं।

वे उदीच्य, मध्यदेशीय और प्राच्य पृथक् पृथक् थीं।

उदीच्यों में श्यामायनि शाखा प्रधान थी। मध्यदेशीय आचार्यों में आरुणि शाखा प्रधान थी। प्राच्यशाखाओं में आलम्बि शाखा प्रथम थी। उनकी तेरह और शाखायें थीं।

(वायुपुराण अ० ६०)

इत्येते चरकाः प्रोक्ताः संहितावादिनो द्विजाः ।

× × ×

याज्ञवल्क्यस्य शिष्यास्ते कण्ववैधेयशालिनः ।

मध्यन्दिनश्च शापेयी विदग्धश्चाप्यथ उद्दलः ।
ताम्रायणो वात्स्यश्च तथा मालवशैषिरी ।
आटवी च तथा पर्णी वीरणी सपराशरः ।
इत्येते वाजिनः प्रोक्ता दश पंच च संस्मृताः ।

अर्थ—ये वैशम्पायनशिष्य, सभी चरक कहे जाते हैं, जिन्होंने संहिताओं का प्रवचन किया ।

याज्ञवल्क्य वाजसनेय के शिष्य—(शुक्ल यजुर्वेद के प्रवर्तक) याज्ञवल्क्य वाजसनेय के पन्द्रह शिष्य थे—काण्व, वैधेय, शालि, मध्यंदिन, शापेयी, विदग्ध, उद्दल, ताम्रायण, वात्स्य, गालव, शैषिरि, आटवी, पर्णी, वीरणी, पराशर—ये सभी वाजिन या वाजसनेय कहे जाते हैं ।

**जैमिनिराचार्यस्य शिष्यपरम्परा**—

पुत्रमध्यापयामास समन्तुमथ जैमिनिः ।
सुमन्तुश्चापि सुत्वानं पुत्रमध्यायपयत्प्रभुः ।
सुकर्माणं सुतं सुत्वा पुत्रमध्यापयत्प्रभुः ।।
स सहस्रमधीत्याशु सुकर्माप्यथ संहिताः ।
प्रोवाचाथ सहस्रस्य सुकर्मा सूर्यवर्चसः ।।

× × ×

तस्य शिष्यो भवेद्धीमान्पौष्यंजिर्द्विजसत्तमाः ।
हिरण्यनाभः कौशल्यो द्विजो योऽभून्नराधिपः ।।
अध्यापयत्तु पौष्यंजिः सहस्रन्तु संहिताः ।
तेनोदीच्याः सामान्याः शिष्याः पौष्यञ्जिनः शुभाः ।
शतानि पंच कौशल्यः संहितानां वीर्यवान् ।
शिष्या हिरण्यनाभस्य स्मृतास्ते प्राच्यसामगाः ।
लौगाक्षिः कुथुमिश्चैव कुषीती लाङ्गलिस्तथा ।
पौष्यंजिशिष्याश्चत्वारस्तेषां भेदान्निबोधत ।
राणायणनीयः स हि तण्डिपुत्रस्तस्मादन्यो मूलचारी सुविद्वान् ।
साकेतिपुत्रः सहसात्यपुत्र एतान् भेदान् वित्त लोकाक्षिणस्तु ।
त्रयस्तु कुथुमेः पुत्रा औरसो··· ············
भागवित्तिश्च तेजस्वी त्रिविधाः कौथुमाः स्मृताः ।।
··· ·· · ···शृङ्गिपुत्रश्च द्वावेतौ चरितव्रतौ ।
राणायनिः सौमित्रिः सामवेदविशारदौ ।।

**अर्थ**—आचार्य जैमिनि ने अपने पुत्र सुमन्तु को सामवेद पढ़ाया । सुमन्तु ने अपने पुत्र सुत्वा को वेद पढ़ाया । सुत्वा ने अपने पुत्र सुकर्मा को अथर्ववेद पढ़ाया ।

सुकर्मा ने अपने एक सहस्र शिष्यों (प्रशिष्यों) को जो सूर्य के समान तेजस्वी थे अथर्ववेद पढ़ाया।

उसका शिष्य विद्वान् पौष्यंजि हुआ। पौष्यंजि ने राजा हिरण्यनाभ कौसल्य को सहस्रसाम शाखायें पढ़ाईं। पौष्यंजि के उत्तम उदीच्य सामग शिष्य थे। शक्तिशाली विद्वान् हिरण्यनाभ कौसल्य के प्राच्यसामग ५०० शिष्य थे। उनमें चार प्रमुख हुए—लौगाक्षि, कुथुमि, कुषीती और लांगलि। राणायन से राणायन साम शाखा चली, वह तण्डि का पुत्र था, मूलचारी आचार्य अन्य था। साकेतिपुत्र, सहसात्यपुत्र, लोकाक्षि ये सामगों के भेद थे। कुथुम के तीन औरस पुत्र थे—भागवित्ति ····(पाठलुप्त)····तीन कौथुम कहे गये हैं।

राणायनि और सौमित्रि—ये शृंगिपुत्र सामवेदविशारद और ब्रह्मचारी थे।

प्रोवाच संहितास्तिस्रः शृङ्गिपुत्रो महातपाः।
चैलः प्राचीनयोगश्च सुरालश्च द्विजोत्तमाः॥
प्रोवाच संहिताः षट् तु पाराशर्यस्तु कौथुमः।
आसुरायणवैशाख्यौ वेदवृद्धपरायणौ॥
प्राचीन योगपुत्रश्च बुद्धिमान् पतंजलिः।
कौथुमस्य तु भेदास्ते पाराशर्यस्य षट् स्मृताः।
लाङ्गलिः शालिहोत्रश्च षट् षट् प्रोवाच संहिताः॥
भालुकिः कामायनिश्च जैमिनिर्लोमगायनिः।
कण्डश्च कहोलश्चैव षडेते लाङ्गलाः स्मृताः।
ततो हिरण्यनाभस्य कृतः शिष्यो नृपात्मजः।
सोऽकरोच्च चतुर्विंशत्संहिता द्विपदां वरः।
राडश्च महावीर्यश्च पंचमो वाहनस्तथा।
तालकः पाण्डकश्चैव कलिको राजिकस्तथा।
गौतमश्चाजबस्तश्च सोम··········
पृष्ठघ्नः परिकृष्टश्च उलूखलक एव च।
यवीयसश्च वैशालो अंगुलीयश्च कौशिकः॥
सालमंजरिसत्यश्च कापीयः कानिकश्च यः।
पराशरस्तु धर्मात्मा इति क्रान्तास्तु सामगाः॥
सामगानान्तु सर्वेषां द्वौ श्रेष्ठौ तु प्रकीर्तितौ।
पौष्यंजिश्च कृतिश्चैव संहितानां विकल्पकौ॥

**अर्थ**—तपस्वी शृङ्गिपुत्र ने तीन संहितायें कहीं—चैल, प्राचीनयोग और सुराल पाराशर्य कौथुम ने छः संहितायें कीं—आसुरायण, वैशाख्य, प्राचीनयोग, बुद्धिमान् पतंजलि। ये कौथुम के भेद हैं। पाराशर्य की छः संहितायें (शिष्य)

थीं लांगलि, शीलहोत्र ने छः छः संहितायें कहीं—भालुकि, कामायनि, जैमिनि, लोमगायनि, कण्ड और कहोल—ये छः लांगल के शिष्य थे।

कृत का शिष्य राजा हिरण्यनाभ कौसल्य था। उसने (उसके चौबीस शिष्यों ने) २४ साम संहितायें बनाईं—राड, महावीर्य, पंचम, वाहन, तालक, पाण्डक, कालिक, राजिक, गौतम, अजबस्त, सोम, पृषघ्न, पारिकृष्ट, उलूखलक, यवीयस, वैशाल, अंगुलीय, कौशिक, सालमंजरि, सत्य, कापीय, कनिक और धर्मात्मा पराशर। ये सामग आचार्य कहे गये।

सामगों में दो श्रेष्ठतम कहे गये हैं—पौष्यंजि और कृति—ये संहिताओं के विकल्पक थे।

**सुमन्तुशिष्यपरम्परा—**

अथर्वाणं द्विधा कृत्वा सुमन्तुरददद् द्विजाः।
कबन्धाय पुनः कृत्स्नं स च विद्याद्यथाक्रमम्।
कबन्धास्तु द्विधा कृत्वा पथ्यायैकं पुनर्ददौ।
द्वितीयं वेदस्पर्शाय स चतुर्धाकरोत् पुनः॥
मोदो ब्रह्मबलश्चैव पिप्पलादस्तथैव च।
शाक्यायनिश्च धर्मज्ञश्चतुर्थस्तपनः स्मृतः॥
वेदस्पर्शस्य चत्वारः शिष्यास्त्वेते दृढव्रताः॥
पुनस्त्रिविधं विद्धि पथ्यानां भेदमुत्तमम्॥
जाजलिः कुमुदादिश्च तृतीयः शौनकः स्मृतः॥
शौनकस्तु द्विधा कृत्वा ददावेकन्तु बभ्रवे॥
द्वितीयां संहितां धीमान्सैन्धवायनसंज्ञिते॥
सैन्धवो मुंजकेशाय भिन्ना सा च द्विधा पुनः।
नक्षत्रकल्पो वैतानस्तृतीयः संहिताविधिः।
चतुर्थोऽङ्गिरसकल्पः शान्तिकल्पश्च पंचमः॥
श्रेष्ठास्त्वथर्वणे ह्येते संहितानां विकल्पकाः।

**अर्थ**—सुमन्तु ने अपने शिष्यों को अथर्ववेद पढ़ाया। कबन्ध को सम्पूर्ण अथर्ववेद पढ़ाया। कबन्ध ने दो शाखा करके एक शाखा 'पथ्य' नाम के शिष्य को दी। द्वितीय शिष्य वेदस्पर्श को दी। वेदस्पर्श ने चार शाखायें (चार शिष्यों द्वारा) कीं—मोद, ब्रह्मबल, पिप्पलाद और शाक्यायनि—यह चतुर्थ शिष्य धर्मज्ञ और तपस्वी था। वेदस्पर्श के चार ये दृढ़वती शिष्य थे।

पथ्यों के पुनः तीन भेद हुए—जाजलि, कुमुद और तृतीय शौनक। शौनक ने अथर्ववेद को द्विविध करके एक बभ्रु को दी। द्वितीय संहिता विद्वान् सैन्धवायनि ने बनाई। सैन्धव ने मुञ्जकेश को दी, उसने पुनः अपने दो शिष्यों को पढ़ाई।

नक्षत्रकल्प, वैतानकल्प, संहिताविधि तृतीय, चतुर्थ आंगिरसकल्प और पंचम शान्तिकल्प ।

अथर्ववेद के ये संहिताविकल्पक श्रेष्ठ आचार्य थे ।

**रोमहर्षणशिष्यपरम्परा:—**

षट्शः कृत्वा मयाप्युक्तं पुराणमृषिसत्तमाः ।
आत्रेयः सुमतिर्धीमान् काश्यपो ह्यकृतव्रणः ।
भारद्वाजोऽग्निवर्चाश्च वसिष्ठो मित्रयुश्च यः ।।
सावर्णिः सौमदत्तिस्तु सुशर्मा शांशपायनः ।
एते शिष्या मम ब्रह्मन् पुराणेषु दृढव्रताः ।
त्रिभिस्तिस्रः संहिताः पुनरेव हि ।
काश्यपः संहिताकर्त्ता सावर्णिः शांशपायनः ।
सावर्णिका च चतुर्थी स्यात्सा चैषा पूर्वसंहिता ।
सर्वास्ता हि चतुष्पादाः सर्वाश्चैकार्थवाचिकाः ।।
पाठान्तरे पृथग्भूताः वेदशाखा यथा तथा ।
चतुःसहस्रिकाः सर्वा शांशपयनिकामृते ।
लोमहर्षणिका मूलास्ततः काश्यपिकाः पराः ।।
सावर्णिकास्तृतीयास्ता यजुर्वाक्यार्थमण्डिताः ।
शांशपायनिकाश्चान्या नोदनार्थविभूषिता ।।

**अर्थ**—हे ऋषिसत्तमो ! मैंने भी पुराण छः प्रकार से छः शिष्यों को पढ़ाया—सुमति आत्रेय विद्वान्, अकृतव्रण काश्यप, अग्निवर्चा भारद्वाज, मित्रयु वासिष्ठ, सावर्णि, सोमदत्ति और सुशर्मा शांशपायन । ये मेरे पांच शिष्य पुराणों में दृढ़व्रत (विशेषज्ञ) थे ।

पुनः तीन पुराण संहितायें प्रख्यात हुई—काश्यप पुराण संहिता, सावर्णि पुराण संहिता और शांशपायनपुराण संहिता । चतुर्थी सावर्णिपुराणसंहिता थी, वह इन तीनों से पूर्व संहिता (कृति) थी ।

सभी पुराणसंहिता चतुष्पादी और एकार्थवाचिका थी । केवल वेदशाखा के समान पाठान्तर में भेद था । सभी में चार सहस्र श्लोक हैं, केवल शांशपायनिका पुराण संहिता को छोड़कर । इनमें लोमहर्षण (रोमहर्षण) की मूल संहितायें थीं । उसके पश्चात् काश्यपिकापुराण संहितायें थीं । इसके पश्चात् सावर्णिपुराण का स्थान था, जो यजुर्वाक्यों से मण्डित थीं ।

शांशपायनिका तथा अन्य पुराण संहितायें नोदनार्थों (धर्माज्ञा) वाक्यों से विभूषित हैं ।

# पुराणेष्वैतिह्यसन्दर्भाः

## द्वितीयभागस्य—उत्तरखण्डम्

# हरिवंशपुराणे वंशानुचरितम्

## १. स्वायम्भुवमनुवंशानुचरितम्

**वैशम्पायन उवाच—**

स सृष्टासु प्रजास्वेवमापवो वै प्रजापतिः ।
लेभे वै पुरुषः पत्नीं शतरूपामयोनिजाम् ॥१॥

**अर्थ**—वैशम्पायन जी ने कहा—जनमेजय ! इस प्रकार (अयोनिज-मानसिक) प्रजाओं की रचना हो जाने पर वह आपव प्रजापति (ब्रह्मा) ही (अपनी देह के दो भाग करके एक भाग से मनु नामक) पुरुष बन गये और उन्होंने देह के दूसरे भाग से बनी हुई अयोनिजा शतरूपा को पत्नी रूप में स्वीकार किया।

आपवस्य महिम्ना तु दिवमावृत्य तिष्ठतः
धर्मेणैव महाराज शतरूपा व्यजायत ॥२॥

**अर्थ**—महाराज ! अपनी महिमा से द्युलोक को व्याप्त करके स्थित हुए मनु के धर्म से ही उनकी पत्नी शतरूपा की उत्पत्ति हुई।

सा तु वर्षायुतं तप्त्वा तपः परमदुश्चरम् ।
भर्तारं दीप्ततपसं पुरुषं प्रत्यपद्यत ॥३॥

**अर्थ**—वह शतरूपा दस हजार वर्षों तक परम दुष्कर तप करके (सन्तान की कामना से) तप से चमकते हुए अपने स्वामी वैराज पुरुष के पास आयीं।

स वै स्वायम्भुवस्तात पुरुषो मनुरुच्यते ।
तस्यैकसप्ततियुगं मन्वन्तरमिहोच्यते ॥४॥

**अर्थ**--तात ! वे पुरुष ही स्वायम्भुव मनु कहे जाते हैं। उन (के अधिकार) का (सत्ययुग, त्रेता, द्वापर और कलियुगरूप) इकहत्तर चतुर्युगों का समय इस संसार में मन्वन्तर कहलाता है (यह मन्वन्तर संध्या और संध्यांश के कारण इकहत्तर चतुर्युगों से भी कुछ अधिक समय का होता है।)

वैराजात् पुरुषाद्द वीरं शतरूपा व्यजायत ।
प्रियव्रतोत्तानपादौ वीरात् काम्या व्यजायत ।।५।।

**अर्थ**—वैराज पुरुष मनु से उनकी पत्नी शतरूपा ने वीर नामक पुत्र को जन्म दिया और वीर से उनकी पत्नी काम्या ने प्रियव्रत तथा उत्तानपाद को उत्पन्न किया ।

काम्या नाम महाबाहो कर्दमस्य प्रजापतेः ।
काम्यापुत्रास्तु चत्वारः सम्राट् कुक्षिर्विराट् प्रभुः ।
प्रियव्रतं समासाद्य पतिं सा सुषुवे सुतान् ।।६।।

**अर्थ** महाबाहो ! कर्दम प्रजापति की एक काम्या नामवाली पुत्री थी, उस काम्या के सम्राट्, कुक्षि, विराट् और प्रभु नामक चार पुत्र उत्पन्न हुए । उस काम्या ने प्रियव्रत को पति रूप में पाकर इन पुत्रों को उत्पन्न किया था ।

उत्तानपादं जग्राह पुत्रमत्रिः प्रजापतिः ।
उत्तानपादाच्चतुरः सूनृताजनयत् सुतान् ।।७।।

**अर्थ**—प्रजापति अत्रि ने उत्तानपाद को पुत्ररूप में ग्रहण कर लिया । उत्तानपाद से उनकी पत्नी सूनृता ने चार पुत्रों को उत्पन्न किया ।

धर्मस्य कन्या सुश्रोणी सूनृता नाम विश्रुता ।
उत्पन्ना वाजिमेधेन ध्रुवस्य जननी शुभा ।।८।।

**अर्थ**—धर्म की एक सूनृता नाम से प्रसिद्ध सुन्दर कटिवाली पुत्री थी, वह धर्म के यहां अश्वमेध यज्ञ से प्रकट हुई थी, यही कल्याणकारिणी सूनृता ध्रुव की माता थी ।

ध्रुवं च कीर्तिमन्तं च शिवं शान्तमयस्पतिम् ।
उत्तानपादोऽजनयत् सूनृतायां प्रजापतिः ।।९।।

**अर्थ**—प्रजापति उत्तानपाद ने सूनृता नामवाली पत्नी में ध्रुव, कीर्तिमान्, शान्तस्वरूप शिव और अयस्पति नामक पुत्र को उत्पन्न किया था ।

ध्रुवो वर्षसहस्राणि त्रीणि दिव्यानि भारत ।
तपस्तेपे महाराज प्रार्थयन् सुमहद् यशः ।।१०।।

**अर्थ**-भरतवंशी महाराज ! ध्रुव ने जिनका नाम महायशा है, उन भगवान् नारायण को पाने की इच्छा से तीन हजार दिव्या वर्षों तक तप किया था ।

तस्मै ब्रह्मा ददौ प्रीतः स्थानमप्रतिमं भुवि ।
अचलं चैव पुरतः सप्तर्षीणां प्रजापतिः ।।११।।

अर्थ—प्रजापालक भगवान् ब्रह्मा (विष्णु) ने ध्रुव पर प्रसन्न होकर उनको सप्तर्षियों के सम्मुख एक अलौकिक, अचल स्थान प्रदान किया।

तस्यातिमात्रामृद्धिं च महिमानं निरीक्ष्य च।
देवासुराणामाचार्यः श्लोकमप्युशना जगौ ॥१२॥

अर्थ—ध्रुव की बड़ी भारी समृद्धि और महिमा को देखकर देवता और असुरों के आचार्य शुक्राचार्य ने इस श्लोक का गान किया।

अहोऽस्य तपसो वीर्यमहो श्रुतमहो बलम्।
यदेनं पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥१३॥

दक्ष—इन ध्रुव के तपोबल को देखकर आश्चर्य होता है, इनका शास्त्रज्ञान भी विस्मय विमुग्ध कर देता है और इनकी शक्ति भी अद्भुत है, तभी तो ये सप्तर्षि भी इनको अपने आगे स्थापित करके स्थित हैं।

तस्माच्छिलष्टिं च भव्यं च ध्रुवाच्छम्भुर्व्यजायत।
श्लिष्टेराधत्त सुच्छाया पञ्च पुत्रानकल्मषान् ॥१४॥
रिपुं रिपुञ्जयं पुण्यं वृकलं वृकतेजसम्।
रिपोराधत्त बृहती चाक्षुषं सर्वतेजसम् ॥१५॥

अर्थ—उन ध्रुव से शम्भु नामवाली स्त्री ने श्लिष्टि और भव्य नामक पुत्रों को उत्पन्न किया। श्लिष्टि से सुच्छाया (नाम की पत्नी रिपु, रिपुञ्जय, पुण्य, वृकल और वृकतेजा पांच निष्पाप पुत्रों को उत्पन्न किया। रिपु से उनकी बृहती नाम की पत्नी सब देवताओं के तेज से परिपूर्ण चाक्षुष नामक पुत्र को उत्पन्न किया।

अजीजनत् पुष्करिण्यां वीरण्यां चाक्षुषो मनुम्।
प्रजापतेरात्मजायामरण्यस्य महात्मनः ॥१६॥
मनोरजायन्त दश नड्वलायां महौजसः।
कन्यायामभवञ्छ्रेष्ठा वैराजस्य प्रजापतेः ॥१७॥

अर्थ—चाक्षुष ने वीरण की पुत्री पुष्करिणी के गर्भ से मनु नामक पुत्र को उत्पन्न किया। वैराज प्रजापति के वंश में उत्पन्न हुए इन परम तेजस्वी मनु से महात्मा अरण्य की पुत्री नड्वला से दस श्रेष्ठ पुत्र उत्पन्न हुए।

ऊरुः पुरुः शतद्युम्नस्तपस्वी सत्यवान् कविः।
अग्निष्टुदतिरात्रश्च सुद्युम्नश्चेति ते नव ॥१८॥
अभिमन्युश्च दशमो नड्वलायाः सुताः स्मृताः।
ऊरोरजनयत् पुत्रान् षडाग्नेयी महाप्रभान्।
अङ्गं सुमनसं ख्यातिं क्रतुमङ्गिरसं गयम् ॥१९॥

**अर्थ**—ऊरु, पुरु, शतद्युम्न, तपस्वी, सत्यवान्, अग्निष्टुत्, अतिरात्र और सुद्युम्न—ये नौ और दसवां अभिमन्यु ये नड्वला के पुत्र कहे जाते हैं। ऊरु से अग्नि की कन्या ने अंग, सुमना, ख्याति, क्रतु, अंगिरा और गय उत्तम कान्ति वाले छः पुत्रों को उत्पन्न किया था।

अङ्गात् सुनीथापत्यं वै वेनमेकमजायत ।
अपचारात् तु वेनस्य प्रकोपः सुमहानभूत् ॥२०॥

**अर्थ**—अंग से (मृत्यु की पुत्री) सुनीथा ने वेन नामक एक पुत्र को उत्पन्न किया था। वेन अत्याचारी था (देवता, धर्म आदि से द्रोह रखता था), अत एव ऋषियों को उसपर बड़ा क्रोध आया।

प्रजार्थमृषयो यस्य ममन्थुर्दक्षिणं करम् ।
वेनस्य पाणौ मथिते बभूव मुनिभिः पृथुः ॥२१॥

**अर्थ**—(ऋषियों के कोप से नष्ट हुए) वेन के दाहिने हाथ को मुनियों ने सन्तान उत्पन्न करने के लिए मथा, तब मुनियों के मथे हुए वेन के दाहिने हाथ से पृथु की उत्पत्ति हुई।

तं दृष्ट्वा ऋषयः प्राहुरेष वै मुदितः प्रजाः ।
करिष्यति महातेजा यशश्च प्राप्स्यते महत् ॥२२॥

**अर्थ**— ऋषियों ने उसको देखकर कहा—'यह पृथु प्रजाओं को प्रसन्न करेगा और इस महातेजस्वी को उत्तम यश की प्राप्ति होगी'।

स धन्वी कवची खड्गी तेजसा निर्दहन्निव ।
पृथुर्वैन्यस्तदा चेमां ररक्ष क्षत्रपूर्वजः ॥२३॥

**अर्थ** तब वे क्षत्रिय जाति में प्रथम उत्पन्न हुए वेन के पुत्र पृथु धनुष, कवच और तलवार धारण कर अपने तेज से (डाकू, अधर्मी आदि दुष्ट पुरुषों को) भस्म सा करते हुए इस पृथ्वी की रक्षा करने लगे।

राजसूयाभिषिक्तानामाद्यः स वसुधाधिपः ।
तस्माच्चैव समुत्पन्नौ निपुणौ सूतमागधौ ॥२४॥

**अर्थ**—पृथु राजसूय यज्ञ में अभिषिक्त होनेवाले राजाओं में प्रथम भूपति हैं। (उन्हीं के यज्ञ में अग्नि से राजाओं की स्तुति करने में) चतुर सूत तथा (राजाओं की वंशावली पढ़ने में) प्रवीण मागध प्रकट हुए थे।

तेनेयं गौर्महाराज दुग्धा सस्यानि भारत ।
प्रजानां वृत्तिकामेन देवैः सर्षिगणैः सह ॥२५॥

**अर्थ**—भरतवंशी महाराज! प्रजाओं को आजीविका देने की इच्छा वाले पृथु ने देवता और ऋषियों की मण्डलियों को साथ में ले गौ-रूपिणी पृथ्वी से अन्न (आदि सकल वस्तुओं) को दुहा था।

पितृभिर्दानवैश्चैव गन्धर्वैः साप्सरोगणैः ।
सर्पैः पुण्यजनैश्चैव वीरुद्भिः पर्वतैस्तथा ॥२६॥
तेषु तेषु च पात्रेषु दुह्यमाना वसुन्धरा ।
प्रादाद् यथेप्सितं क्षीरं तेन प्राणानधारयन् ॥२७॥

**अर्थ**—(पृथु के समय) पितर, दानव, गन्धर्व, अप्सरा, सर्प, वृक्ष और पर्वतों ने अपने-अपने पात्रों में दुहा था। पृथ्वी ने उनको इच्छानुसार दूध दिया था और उस दूध से उन सबने अपने प्राणों को धारण किया था।

पृथुपुत्रौ तु धर्मज्ञौ जज्ञातेऽन्तर्द्धिपालितौ ।
शिखण्डिनी हविर्धानमन्तर्धानाद् व्यजायत ॥२८॥

**अर्थ**—पृथु के अन्तर्धान और पालित—ये दो धर्मज्ञ पुत्र हुए और अन्तर्धान से शिखण्डिनी ने हविर्धान नामक पुत्र को उत्पन्न किया।

हविर्धानात् षडाग्नेयी धिषणाजनयत् सुतान् ।
प्राचीनबर्हिषं शुक्लं गयं कृष्णं व्रजाजिनौ ॥२९॥

**अर्थ**—हविर्धान से अग्नि की पुत्री धिषणा ने प्राचीनबर्हि, शुक्ल, गय, कृष्ण, व्रज और अजिन नामवाले छः पुत्रों को उत्पन्न किया।

प्राचीनबर्हिर्भगवान् महानासीत् प्रजापतिः ।
हविर्धानान्महाराज येन संवर्द्धिताः प्रजाः ॥३०॥

**अर्थ**—महाराज ! भगवान् प्राचीनबर्हि, जिन्होंने प्रजाओं का पालन एवं संवर्धन किया था, अपने पिता हविर्धान से बढ़कर प्रजापालक हुए।

प्राचीनाग्राः कुशास्तस्य पृथिव्यां जनमेजय ।
प्राचीनबर्हिर्भगवान् पृथिवीतलचारिणः ॥३१॥

**अर्थ**—जनमेजय ! उनके यज्ञ करते समय बिछे हुए प्राचीनाग्र कुश समस्त भूमण्डल पर फैलकर उनके महत्त्व को प्रकट कर रहे थे, अतएव उनका नाम भगवान् प्राचीनबर्हि है।

समुद्रतनयायां तु कृतदारोऽभवत् प्रभुः ।
महतस्तपसः पारे सवर्णायां महीपतिः ॥३२॥

**अर्थ**—महीपति प्रभु प्राचीनबर्हि ने बड़ा भारी तप करने के पश्चात् समुद्र की पुत्री सवर्णा के साथ विवाह किया।

सवर्णाऽऽधत्त सामुद्री दश प्राचीनबर्हिषः ।
सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः ॥३३॥

**अर्थ**—प्राचीनबर्हि से समुद्र की पुत्री सवर्णा ने दस पुत्र उत्पन्न किये, उन दसों का 'प्रचेता' यह एक ही नाम था। वे सब धनुर्वेद के पारगामी थे।

अपृथग्धर्मचरणास्तेऽतप्यन्त महत्तपः ।
दशवर्षसहस्राणि समुद्रसलिलेशयाः ॥३४॥

**अर्थ**—वे सब प्रचेतागण एक साथ समान धर्म-कर्म का आचरण करते थे और एक से शीलवाले थे, उन्होंने समुद्र के जल में प्रवेश करके दस हजार वर्षों तक बड़ी भारी तपस्या की ।

तपश्चरत्सु पृथिवीं प्रचेतस्सु महीरुहाः ।
अरक्ष्यमाणामावव्रुर्बभूवाथ प्रजाक्षयः ॥३५॥

**अर्थ**—जब प्रचेतागण तप कर रहे थे, तब अरक्षित पड़ी हुई पृथ्वी को वृक्षों ने चारों ओर से ढक दिया, इससे प्रजाओं का नाश होने लगा ।

नाशकन्मारुतो वातुं वृतं खमभवद् द्रुमैः ।
दशवर्षसहस्राणि न शेकुश्चेष्टितुं प्रजाः ॥३६॥

**अर्थ**—दस हजार वर्षों में वृक्षों ने आकाश तक को घेर लिया, तब वायु का चलना बन्द हो गया और प्रजाओं का चेष्टा करना (हाथ पैर हिलाना) भी बन्द होने लगा ।

तदुपश्रुत्य तपसा युक्ताः सर्वे प्रचेतसः ।
मुखेभ्यो वायुमग्निं च तेऽसृजञ्जातमन्यवः ॥३७॥

**अर्थ**—अपनी तपस्या (ज्ञानदृष्टि) से इन सब बातों को जानकर सब प्रचेता इसका उपाय करने के लिए उद्यत हो गये और उन्होंने क्रोध में भरकर अपने मुखों से वायु और अग्नि को प्रकट किया ।

उन्मूलानथ तान् कृत्वा वृक्षान् वायुरशोषयत् ।
तानग्निरदहद्घोरं एवमासीद् द्रुमक्षयः ॥३८॥

**अर्थ**—वायु ने वृक्षों को जड़ से उखाड़कर उनको सुखा दिया, तब अग्नि प्रचण्ड होकर उन वृक्षों को जलाने लगी, इस प्रकार वृक्षों का नाश होने लगा ।

द्रुमक्षयमथो बुद्ध्वा किंचिच्छिष्टेषु शाखिषु ।
उपगम्याब्रवीदेतान् राजा सोमः प्रजापतीन् ॥३९॥

**अर्थ**—इस प्रकार जलते-जलते जब कुछ ही वृक्ष बाकी बचे, तब वृक्षों के संहार की बात को जानकर इन वृक्षों के राजा सोम प्रजापति प्रजेताओं के पास जाकर बोले—

कोपं यच्छत राजानः सर्वे प्राचीनबर्हिषः ।
वृक्षशून्या कृता पृथ्वी शाम्येतामग्निमारुतौ ॥४०॥

**अर्थ**—'प्राचीनबर्हि के पुत्र प्रचेताओ ! तुमने तो पृथ्वी को वृक्षों से शून्य

ही कर डाला । राजाओ ! अब अपने क्रोध को रोको तथा इन अग्नि और पवन को शान्त करो ।

रत्नभूता च कन्येयं वृक्षाणां वरवर्णिनी ।
भविष्यं जानता तत्त्वं धृता गर्भेण वै मया ।।४१।।

अर्थ—यह वृक्षों की रत्नस्वरूपा सुन्दरी कन्या है । मैंने भविष्य के तत्त्व को जानकर इसे अपने गर्भ में स्थापित कर लिया था ।

मारिषा नाम कन्येयं वृक्षाणामिति निर्मिता ।
भार्या वोऽस्तु महाभागाः सोमवंशविवर्द्धिनी ।।४२।।

अर्थ—यह मारिषा नामवाली कन्या वृक्षों के वीर्य अर्थात् सारांश से रची गयी है । महाभाग ! इस सोमवंश की वृद्धि करनेवाली वृक्षों की कन्या को तुम भार्यारूप में ग्रहण करो ।

युष्माकं तेजसोऽर्द्धेन मम चार्द्धेन तेजसः ।
अस्यामुत्पत्स्यते पुत्रो दक्षो नाम प्रजापतिः ।।४३।।

अर्थ—तुम्हारे और मेरे दोनों के तेज के आधे-आधे भाग द्वारा इस कन्या के गर्भ से एक पुत्र उत्पन्न होगा, जिसका नाम होगा—दक्ष प्रजापति ।

य इमां दग्धभूयिष्ठां युष्मत्तेजोमयेन वै ।
अग्निनाग्निसमो भूयः प्रजाः संवर्धयिष्यति ।।४४।।

अर्थ—तुम्हारे तपरूपी अग्नि से अग्नि के समान ही प्रतापी वह दक्ष अधिकांश जली हुई इस पृथ्वी पर फिर प्रजाओं की वृद्धि करेगा ।

ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः ।
संहृत्य कोपं वृक्षेभ्यः पत्नीं धर्मेण मारिषाम् ।।४५।।

अर्थ—चन्द्रमा के इस प्रकार कहने पर उन प्रचेताओं ने वृक्षों की ओर से अपने क्रोध को समेट लिया और मारिषा को विवाहरूपी धर्म के द्वारा पत्नीरूप में ग्रहण कर लिया ।

मारिषायां ततस्ते वै मनसा गर्भमादधुः ।
दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः ।
दक्षो जज्ञे महातेजाः सोमस्यांशेन भारत ।४६।।

अर्थ—तदनन्तर उन प्रचेताओं ने अपने मन से मारिषा में गर्भ स्थापित किया । भरतवंशी राजन् ! इस प्रकार चन्द्रमा अंश से दस प्रचेताओं के द्वारा मारिषा के गर्भ से महातेजस्वी दक्ष प्रजापति उत्पन्न हुए ।

पुत्रानुत्पादयामास सोमवंशविवर्धनान् ।
अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः ।
स दृष्ट्वा मनसा दक्षः पश्चादप्यसृजत् स्त्रियः ।।४७।।

अर्थ—तब उन दक्ष प्रजापति ने चन्द्रमा के वंश को बढ़ानेवाले पुरुष उत्पन्न किये और स्थावर, जंगम, दो पैर वाले, चार पैर वाले रचने योग्य प्राणियों की सृष्टि के लिए मन में विचारकर स्त्रियों की भी रचना की।

ददौ स दश धर्माय कश्यपाय त्रयोदश।
शिष्टा सोमाय राज्ञेऽथ नक्षत्राख्या ददौ प्रभुः ॥४८॥

अर्थ—प्रभु दक्ष ने उनमें से दस कन्यायें धर्म को, तेरह कन्यायें कश्यप को और शेष बची हुई नक्षत्र सम्बन्धी नामवाली सत्ताईस कन्यायें राजा चन्द्रमा को दे दीं।

तासु देवाः खगा नागा गावो दितिजदानवाः।
गन्धर्वाप्सरसश्चैव जज्ञिरेऽन्याश्च जातयः ॥४९॥

अर्थ—उन कन्याओं से देवता, पक्षी, सर्प, गौएं, दैत्य-दानव-गन्धर्व, अप्सराएं तथा अन्य जातियों के प्राणी उत्पन्न हुए।

ततः प्रभृति राजेन्द्र प्रजा मैथुनसम्भवाः।
संकल्पाद् दर्शनात् स्पर्शात् पूर्वेषां सृष्टिरुच्यते ॥५०॥

अर्थ—राजेन्द्र ! तभी से प्रजाएं मैथुन द्वारा उत्पन्न होने लगीं। इससे पहले प्राणियों की उत्पत्ति संकल्प, दर्शन और स्पर्श से होती थी—ऐसा कहा जाता है।

**जनमेजय उवाच—**

देवानां दानवानां च गन्धर्वोरगरक्षसाम्।
सम्भवः कथितः पूर्वं दक्षस्य च महात्मनः ॥५१॥

जनमेजय ने कहा—मुने ! आपने पहले भी देवता, दानव, गन्धर्व, सर्प और राक्षस तथा महात्मा दक्ष की उत्पत्ति का वर्णन किया है।

अंगुष्ठाद् ब्रह्मणो जातो दक्षः प्रोक्तस्त्वयानघ।
वामांगुष्ठात् तथा चैव तस्य पत्नी व्यजायत ॥५२॥

अर्थ—निष्पाप महर्षे ! वहां आपने कहा है कि ब्रह्मा जी के (दाहिने) अंगूठे से दक्ष प्रजापति उत्पन्न हुए और ब्रह्माजी के बायें अंगूठे से दक्ष की पत्नी उत्पन्न हुई।

कथं प्राचेतसत्वं स पुनर्लेभे महातपाः।
एतन्मे संशयं विप्र सम्यगाख्यातुमर्हसि।
दौहित्रश्चैव सोमस्य कथं श्वशुरतां गतः ॥५३॥

अर्थ—वे महातपस्वी दक्ष फिर प्रचेताओं के पुत्र कैसे हुए ? चन्द्रमा के नाती दक्ष फिर उनके श्वसुर कैसे बन गये ? विप्रवर ! मेरे इन संदेहों को भली प्रकार व्याख्या करके आप दूर कर दीजिये।

**वैशम्पायन उवाच—**

उत्पत्तिश्च निरोधश्च नित्यौ भूतेषु पार्थिव ।
ऋषयोऽत्र न मुह्यन्ति विद्वांसश्चैव ये जनाः ।।५४।।

**अर्थ**—वैशम्पायनजी ने कहा—पृथ्वीनाथ ! जन्म और मृत्यु—ये समस्त प्राणियों के लिए नित्य (स्वाभाविक) हैं। इस विषय में ऋषियों को कभी मोह नहीं होता । जो विद्वान् पुरुष हैं, वे भी इस विषय में मोहित नहीं होते ।

युगे युगे भवन्त्येते सर्वे दक्षादयो नृप ।
पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति ।।५५।।

**अर्थ**—नरेश्वर ! ये दक्ष आदि सब लोग प्रत्येक युग में उत्पन्न होते और मरते रहते हैं, अतः विद्वान् पुरुष इस विषय में मोह को नहीं प्राप्त होते हैं ।

ज्यैस्ठ्यं कानिष्ठ्यमप्येषां पूर्वंनासीज्जनाधिप ।
तप एव गरीयोऽभूत् प्रभावश्चैव कारणम् ।।५६।।

**अर्थ**—राजन् ! पहले इनमें ज्येष्ठता और कनिष्ठता का अर्थात् पहले-पीछे उत्पन्न होने का कोई विचार नहीं था, तप ही इनकी दृष्टि में गरिष्ठ था और प्रभाव ही इनमें सम्बन्ध होने का कारण होता था ।

इमां विसृष्टिं दक्षस्य यो विद्यात् सचराचराम् ।
प्रजावानापदुत्तीर्णः स्वर्गलोके महीयते ।।५७।।

**अर्थ**—जो मनुष्य चर तथा अचर प्राणियों सहित इस दक्ष प्रजापति की सृष्टि के तत्त्व को जानता है, वह सन्तानवान् होता है और आपत्तियों के पार हो स्वर्ग में प्रतिष्ठापूर्वक रहता है ।

द्वितीयोऽध्यायः समाप्तः ।।२।।

## २. प्राचेतसदक्षचरितम्, कश्यपसन्ततिश्च

**जनमेजय उवाच—**

देवानां दानवानां च गन्धर्वोरगरक्षसाम् ।
उत्पत्तिं विस्तरेणेमां वैशम्पायन कीर्तय ।।१।।

**अर्थ**—जनमेजय ने कहा—वैशम्पायनजी ! आप इस देवता, दानव, गन्धर्व, सर्प और राक्षसों की उत्पत्ति को विस्तारपूर्वक कहिये ।

**वैशम्पायन उवाच—**

प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयम्भुवा ।
यथा ससर्ज भूतानि तथा श्रृणु महीपते ।।२।।

**अर्थ**—वैशम्पायन जी बोले—राजन् ! पहले स्वयम्भू ब्रह्मा जी ने दक्ष को आज्ञा दी कि 'तुम प्रजाओं की सृष्टि करो' उस समय दक्ष ने (जरायुज आदि) प्राणियों की सृष्टि जिस प्रकार की थी, उसे सुनो।

मानसान्येव भूतानि पूर्वमेवासृजत् प्रभुः।
ऋषीन् देवान् सगन्धर्वानसुरानथ राक्षसान्।
यक्षभूतपिशाचांश्च वयःपशुसरीसृपान् ॥३॥

**अर्थ**—प्रभु दक्ष ने पहले ऋषि, देवता, गन्धर्व, असुर, राक्षस, यक्ष, भूत, पिशाच पशु, पक्षी और सर्पों की मानसी सृष्टि रची अर्थात् इनको अपने संकल्प-मात्र से ही उत्पन्न कर दिया।

यदास्य तास्तु मानस्यो न व्यवर्द्धन्त वै प्रजाः।
अपध्याता भगवता महादेवेन धीमता ॥४॥
ततः संचिन्त्य तु पुनः प्रजाहेतोः प्रजापतिः।
स मैथुनेन धर्मेण सिसृक्षुर्विविधाः प्रजाः ॥५॥
असिक्नीमावहत् पत्नीं वीरणस्य प्रजापतेः।
सुतां सुतपसायुक्तां महतीं लोकधारिणीम् ॥६॥

**अर्थ**—परन्तु (पूर्वकल्प के वैर को स्मरण कर) बुद्धिमान् भगवान् महादेव ने जब यह विचार किया कि दक्ष की मानसी प्रजा न बढ़े और तदनुसार जब उनकी मन से उत्पन्न की हुई प्रजाएं अधिक उन्नति न कर सकीं, तब दक्ष प्रजापति विचार में पड़ गये और फिर उन्होंने प्रजा की वृद्धि करने के लिए मैथुन धर्म से अनेक प्रकार की प्रजाओं को रचने का विचार किया। इस विचार के अनुसार वे परम तप करने के कारण संसार को धारण करने में समर्थ वीरण प्रजापति की महामहिम पुत्री असिक्नी को पत्नीरूप में विवाह कर लाये।

अथ पुत्रसहस्राणि वीरण्या पञ्च वीर्यवान्।
असिक्न्यां जनयामास दक्ष एव प्रजापतिः ॥७॥

**अर्थ**—इसके बाद वीर्यवान् दक्ष प्रजापति ने वीरण की पुत्री असिक्नी में पांच हजार पुत्रों को उत्पन्न किया।

तांस्तु दृष्ट्वा महाभागान् संविवर्धयिषून् प्रजाः।
देवर्षि प्रियसंवादो नारदः प्राब्रवीदिदम्।
नाशाय वचनं तेषां शापायैवात्मनस्तथा ॥८॥

**अर्थ**—परन्तु उन महाभाग्यवान् दक्ष पुत्रों को प्रजा की वृद्धि करने के लिए उत्सुक देख प्रियवादी देवर्षि नारदजी ने उनको (ज्ञान का अधिकारी समझकर आत्मज्ञान का) उपदेश दिया। नारदजी के उस वचन से दक्षपुत्र नष्ट हो गये

(अथवा उनकी संसार में आसक्ति नष्ट हो गयी), परन्तु नारदजी का यह ज्ञानोपदेश देना स्वयं शाप पाने में ही एक कारण बन गया।

यं कश्यपः सुतवरं परमेष्ठी व्यजीजनत्।
दक्षस्य वै दुहितरि दक्षशापभयान्मुनिः ॥९॥

**अर्थ**—ब्रह्माजी ने जिन श्रेष्ठ पुत्र नारद को उत्पन्न किया था, उनको ही कश्यप मुनि ने दक्ष के शाप के भय से (दक्ष की पत्नी की छोटी बहिन अतएव) उनकी (पुत्री के समान) कन्या में उत्पन्न किया था।

पूर्वं स हि समुत्पन्नो नारदः परमेष्ठिना।
असिक्न्यामथ वीरण्यां भूयो देवर्षिसत्तमः।
तं भूयो जनयामास पितेव मुनिपुङ्गवम् ॥१०॥

**अर्थ**—नारदजी पहले ब्रह्माजी से उत्पन्न हुए थे, फिर वे ही देवर्षि सत्तम नारद वीरण की पुत्री असिक्नी (की छोटी बहिन) में उत्पन्न हुए थे। उन मुनिपुंगव नारदजी को कश्यप ने ब्रह्माजी के समान ही फिर प्रकट किया था।

तेन दक्षस्य पुत्रा वै हर्यश्वा इति विश्रुताः।
निर्मथ्य नाशिताः सर्वे विधिना च न संशयः ॥११॥

**अर्थ**—(इस घटना को स्पष्ट करते हैं—) दक्ष के हर्यश्व नाम से प्रसिद्ध (जो पांच हजार) पुत्र थे, नारदजी ने उनको शास्त्रोक्त रीति से देहाभिमान से मुक्त कर इस संसार से नष्ट कर दिया था (अर्थात् वे सब नारदजी से चेतावनी पाकर संसार को त्याग परमात्मा की खोज करने के लिए वन में चले गये), इसमें कुछ संदेह नहीं है।

तस्योद्यतस्तदा दक्षो नाशायामितविक्रमः।
महर्षीन् पुरतः कृत्वा याचितः परमेष्ठिना ॥१२॥

**अर्थ**—तब अनुपम पराक्रमी दक्ष प्रजापति नारदजी को नष्ट करने के लिए उद्यत हो गये। उस समय ब्रह्माजी ने मरीचि आदि महर्षियों के साथ जाकर दक्ष से ऐसा न करने के लिए प्रार्थना की।

ततोऽभिसंधिं चक्रुस्ते दक्षस्तु परमेष्ठिना।
कन्यायां नारदो मह्यं तव पुत्रो भवेदिति ॥१३॥

**अर्थ** तब महर्षियों ने दक्ष और ब्रह्माजी में सन्धि करा दी। दक्ष ने कहा कि 'आपका पुत्र नारद मेरी पुत्री (अर्थात् छोटी साली) का पुत्र बनकर उत्पन्न हो'।

ततो दक्षस्तु तां प्रादात् कन्यां वै परमेष्ठिने ।
स तस्यां नारदो जज्ञे दक्षशापभयादृषिः ॥१४॥

अर्थ—तब दक्ष ने प्रजापति कश्यप को (तेरह कन्याएं अर्पण करते समय) उस कन्या का दान कर दिया था। इस प्रकार दक्ष के शाप के भय से नारद ऋषि उस कन्या से फिर उत्पन्न हुए थे।

**जनमेजय उवाच—**

कथं विनाशिताः पुत्रा नारदेन महर्षिणा ।
प्रजापतेर्द्विजश्रेष्ठ श्रोतुमिच्छामि तत्त्वतः ॥१५॥

अर्थ—जनमेजय ने पूछा—द्विजश्रेष्ठ ! महर्षि नारद ने प्रजापति दक्ष के पुत्रों को किस प्रकार नष्ट किया था ? इसको मैं स्पष्ट रूप से सुनना चाहता हूं।

**वैशम्पायन उवाच—**

दक्षस्य पुत्रा हर्यश्वा विवर्धयिषवः प्रजाः ।
समागता महावीर्या नारदस्तानुवाच ह ॥१६॥

अर्थ—वैशम्पायनजी ने कहा—राजन् ! दक्ष के हर्यश्व नामक पुत्र महावीर्यवान् थे, जब वे प्रजाओं की वृद्धि का विचार करने के लिए उद्यत हुए, तब नारदजी ने उनसे कहा—

बालिशा बत यूयं वै नास्या जानीथ वै भुवः ।
प्रमाणं स्रष्टुकामाः स्थ प्रजाः प्राचेतसात्मजाः ।
अन्तरूर्ध्वमधश्चैव कथं स्रक्ष्यथ वै प्रजाः ॥१७॥

अर्थ—'प्राचेतस (दक्ष) के पुत्रो ! खेद के साथ कहना पड़ता है कि तुम बड़े नादान हो। तुम्हें प्रजा की सृष्टि करने की इच्छा हुई है; किन्तु तुम इतना भी नहीं जानते कि जहां सृष्टि करनी है, उस पृथ्वी की लम्बाई-चौड़ाई कितनी है ? यह ऊपर-नीचे और भीतर से कैसी है ? ऐसी दशा में तुम लोग प्रजाओं की सृष्टि कैसे करोगे ?'

ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतोदिशम् ।
प्रमाणं द्रष्टुकामास्ते गताः प्राचेतसात्मजाः ॥१८॥

अर्थ नारदजी की इस बात को सुनकर वे प्राचेतस दक्ष के पुत्र (इस पृथ्वी का) प्रमाण अर्थात् माप देखने के लिए सब दिशाओं की ओर चल दिये।

वायोरनशनं प्राप्य गतास्ते वै पराभवम् ।
अद्यापि न निवर्तन्ते समुद्रेभ्य इवापगाः ॥१९॥

अर्थ—प्राणवायु के लिए आहार न पाकर वे सबके सब पराभव (विनाश)

को प्राप्त हो गये। जैसे नदियां समुद्र में मिल जाने पर फिर वहां से पीछे नहीं लौटती हैं, उसी प्रकार वे जाकर अब तक नहीं लौटे।

हर्यश्वेष्वथ नष्टेषु दक्षः प्राचेतसः पुनः।
वैरण्यामेव पुत्राणां सहस्रमसृजत् प्रभुः ॥२०॥

अर्थ—प्रचेताओं के पुत्र प्रभु दक्ष ने हर्यश्वों के नष्ट हो जाने पर वीरण की पुत्री में ही फिर सहस्र पुत्रों को उत्पन्न किया।

विवर्धयिषवस्ते तु शबलाश्वा प्रजास्तदा।
पूर्वोक्तं वचनं तात नारदेनैव नोदिताः ॥२१॥

अर्थ—तात ! वे दक्ष के पुत्र शबलाश्व जब प्रजा की वृद्धि के लिए इच्छुक हुए, तब नारदजी ने पूर्वोक्त वचन कहकर उनको भी पृथ्वी का प्रमाण जानने के लिए प्रे॑ित किया।

अन्योन्यमूचुस्ते सर्वे सम्यगाह महामुनिः।
भ्रातॄणां पदवीं ज्ञातुं गन्तव्यं नात्र संशयः ॥२२॥

अर्थ---तब वे सब आपस में कहने लगे—'महामुनि नारजी ठीक कहते हैं, अपने भाइयों के मार्ग को जानने के लिए निःसंदेह हमें भी अवश्य प्रयत्न करना चाहिये।

ज्ञात्वा प्रमाणं पृथ्व्याश्च सुख स्रक्ष्यामहे प्रजाः।
एकाग्राः स्वस्थमनसा यथावदनुपूर्वशः ॥२३॥

अर्थ—'हम पृथ्वी के प्रमाण को जानकर एकाग्र और स्वस्थचित्त सुखपूर्वक प्रजाओं की क्रमानुसार सृष्टि करेंगे'।

तेऽपि तेनैव मार्गेण प्रयाताः सर्वतोदिशम्।
अद्यापि न निवर्तन्ते समुद्रेभ्य इवापगाः ॥२४॥

अर्थ—ऐसा निश्चय करके वे भी उसी मार्ग से चारों दिशाओं की ओर चल दिये और समुद्रों से उनमें मिली हुई नदियों के समान अभी तक नहीं लौटे।

नष्टेषु शबलाश्वेषु दक्षः क्रुद्धोऽवदद् वचः।
नारदं नाशमेहीति गर्भवासं वसेति च ॥२५॥

अर्थ—शबलाश्वों के भी नष्ट हो जाने पर दक्ष प्रजापति ने क्रोध में भरकर, नारदजी से यह बात कही कि 'तुम्हारी देह नष्ट हो जाए और तुम फिर गर्भ में निवास करो'।

तदाप्रभृति वै भ्राता भ्रातुरन्वेषणं नृप।
प्रयातो नश्यति क्षिप्रं तन्न कार्यं विपश्चिता ॥२६॥

सुधन्वनः सुतश्चासीत् त्रिधन्वा रिपुमर्दनः।
राज्ञस्त्रिधन्वनस्त्वासीद् विद्वांस्त्रय्यारुणः सुतः ॥११॥

**अर्थ**—सुधन्वा के त्रिधन्वा नामक पुत्र हुआ, जो शत्रुओं का मर्दन करनेवाला था। राजा त्रिधन्वा के त्रय्यारुण नामक विद्वान् पुत्र हुआ।

तस्य सत्यव्रतो नाम कुमारोऽभून्महाबलः।
पाणिग्रहणमन्त्राणां विघ्नं चक्रे सुदुर्मतिः ॥१२॥

**अर्थ**—त्रय्यारुण के सत्यव्रत नामवाला महाबली कुमार हुआ। उसकी बुद्धि बड़ी खोटी थी। वह (परस्त्रीहरण द्वारा) विवाह के मन्त्रों में विघ्न डालने लगा।

येन भार्या हृता पूर्वं कृतोद्वाहा परस्य वै।
बाल्यात् कामाच्च मोहाच्च संहर्षाच्चापलेन च ॥१३॥

**अर्थ**—उसने बालकपन, काम, मोह, हर्ष और चपलता के कारण किसी दूसरे (नागरिक) की विवाहिता स्त्री को छीन लिया था।

जहार कन्यां कामात् स कस्यचित् पुरवासिनः।
अधर्मशङ्कुना तेन राजा त्रय्यारुणोऽत्यजत् ॥१४॥
अपध्वंसेति बहुशो वदन् क्रोधसमन्वितः।
पितरं सोऽब्रवीत् त्यक्तः क्व गच्छामीति वै मुहुः ॥१५॥

**अर्थ**—इसी प्रकार उसने काम के वश में होकर एक पुरवासी की कन्या को हर लिया था। इस पापरूपी कील से विद्ध होने के कारण राजा त्रय्यारुण ने क्रोध में उसे बार-बार कहा—'ओ नीच! भाग जा यहां से!' पिता के त्याग देने पर उसने बार-बार उनसे पूछा—'मैं कहां जाऊं?'

पिता त्वेनमथोवाच श्वपाकैः सह वर्तय।
नाहं पुत्रेण पुत्रार्थी त्वयाद्य कुलपांसन ॥१६॥

**अर्थ** – तब उसके पिता ने कहा—'ओ कुलकलंक! जा तू श्वपाकों के साथ रह, मैं तुझ जैसे पुत्र से पुत्रवान् बनना नहीं चाहता।'

इत्युक्तः स निराक्रामन्नगराद् वचनात् पितुः।
न च तं वारयामास वसिष्ठो भगवानृषिः ॥१७॥

**अर्थ**—पिता के इस प्रकार कहने पर वह उनके कथनानुसार नगर से बाहर निकल गया। उस समय भगवान् वशिष्ठ ऋषि ने उसके पिता को इस प्रकार कहने से नहीं रोका।

स तु सत्यव्रतस्तात श्वपाकावसथान्तिके।
पित्रा त्यक्तोऽवसद् धीरः पिता तस्य वनं ययौ ॥१८॥

**अर्थ**—तात ! धीर सत्यव्रत पिता के त्याग देने पर चाण्डालों की बस्ती में रहने लगा और उसके पिता त्रय्यारुण (विरक्त होकर) वन को चले गये ।

ततस्तस्मिंस्तु विषये नावर्षत् पाकशासनः ।
समा द्वादश राजेन्द्र तेनाधर्मेण वै तदा ॥१९॥

**अर्थ**—राजेन्द्र ! उस समय उस देश में (उस कन्या-हरणरूप) अधर्म के कारण इन्द्र ने बारह वर्षों तक वर्षा नहीं की ।

दारांस्तु तस्य विषये विश्वामित्रो महातपाः ।
संन्यस्य सागरानूपे चचार विपुलं तपः ॥२०॥

**अर्थ**—उस समय महातपस्वी विश्वामित्र भी सत्यव्रत के उस देश में अपनी स्त्री को न्यास (धरोहर) के रूप में रखकर समुद्र के तट पर भयंकर तप कर रहे थे ।

तस्य पत्नी गले बद्ध्वा मध्यमं पुत्रमौरसम् ।
शेषस्य भरणार्थाय व्यक्रीणाद् गोशतेन वै ॥२१॥

**अर्थ**—विश्वामित्र की स्त्री अपने शेष कुटुम्ब के पालन के लिए अपने मध्यम पुत्र के गले में रस्सी बांधकर उसको सौ गौओं के मूल्य पर बेचने के लिए लेकर घूमने लगी ।

तं तु बद्धं गले दृष्ट्वा विक्रीयन्तं नृपात्मजः ।
महर्षिपुत्रं धर्मात्मा मोक्षयामास भारत ॥२२॥

**अर्थ**—भारत ! धर्मात्मा राजकुमार (सत्यव्रत) ने उस महर्षि-पुत्र को गले में बंधा तथा बिकता देखकर छुड़ा लिया ।

सत्यव्रतो महाबाहुर्भरणं तस्य चाकरोत् ।
विश्वामित्रस्य तुष्ट्यर्थमनुकम्पार्थमेव च ॥२३॥

**अर्थ**—फिर महाबाहु सत्यव्रत ने विश्वामित्र को सन्तुष्ट करने और उनकी कृपा प्राप्त करने के लिए उस पुत्र का भरण-पोषण किया ।

सोऽभवद् गालवो नाम गलबन्धान्महातपाः ।
महर्षिः कौशिकस्तात तेन वीरेण मोक्षितः ॥२४॥

**अर्थ**—वह महातपस्वी गले में बन्धन पड़ने के कारण गालव नाम से प्रसिद्ध हुआ । तात ! (इस प्रकार) उस वीर ने कुशिकवंशी महर्षि (गालव) को (इस आपत्ति से) मुक्त किया था ।

इति हरिवंशे गालवोत्पत्तौ द्वादशोऽध्यायः ॥१२॥

# ८. त्रिशंकुचरितम्, हरिश्चन्द्रवंशानुचरितम्

**वैशम्पायन उवाच—**

सत्यव्रतस्तु भक्त्या च कृपया च प्रतिज्ञया।
विश्वामित्रकलत्रं तद् बभार विनये स्थितः ॥१॥

**अर्थ**— **वैशम्पायन** जी कहते हैं— राजन् ! विश्वामित्र जी के प्रति श्रद्धा-भक्ति, उनके असहाय कुटुम्ब के प्रति दयाभाव तथा अपनी की हुई प्रतिज्ञा से प्रेरित हो सत्यव्रत विनयपूर्वक विश्वामित्र जी की स्त्री का पालन करने लगा।

हत्वा मृगान् वराहांश्च महिषांश्च वनेचरान्।
विश्वामित्राश्रमाभ्याशे मांसं वृक्षे बबन्ध सः ॥२॥

**अर्थ**— वह ढूंढ़ने से मिलनेवाले कंद-विशेष, वराही कंद तथा महिष कंद आदि जंगली कंद-मूलों को काटकर उनका गूदा विश्वामित्र के आश्रम के पास के वृक्षों में बांध देता था।

उपांशुव्रतमास्थाय दीक्षां द्वादशवार्षिकीम्।
पितुर्नियोगादवसत् तस्मिन् वनगते नृपे ॥३॥

**अर्थ**—पिता (राजा) के वन चले जाने पर बारह वर्षों के लिए वह चुपचाप (किसी को विदित न हो इस प्रकार) व्रत करने लगा।

अयोध्यां चैव राष्ट्रं च तथैवान्तःपुरं मुनिः।
याज्योपाध्यायसम्बन्धाद् वशिष्ठः पर्यरक्षत ॥४॥

**अर्थ**—इधर पुरोहिताई और यजमानी के सम्बन्ध के कारण मुनि वशिष्ठ अयोध्या की, राज्य की और रनिवास की रक्षा करने लगे।

सत्यव्रतस्तु बाल्याच्च भाविनोऽर्थस्य वा बलात्।
वशिष्ठेऽभ्यधिकं मन्युं धारयामास वै तदा ॥५॥

**अर्थ**—इधर सत्यव्रत अपनी मूर्खता या होनहार के कारण वशिष्ठ जी के ऊपर अधिक कुपित रहने लगा।

पित्रा तु तं तदा राष्ट्रात् त्यज्यमानं स्वमात्मजम्।
न वारयामाश मुनिर्वसिष्ठः कारणेन ह ॥६॥

**अर्थ**—परन्तु मुनि वशिष्ठ ने तो उसके पिता को, उनके द्वारा अपने पुत्र के राज्य से निकाले जाते समय विशेष कारणवश ही नहीं रोका था।

पाणिग्रहणमन्त्राणां निष्ठा स्यात् सप्तमे पदे।
न च सत्यव्रतस्तस्य तमुपांशुमबुध्यत ॥७॥

**अर्थ**—पाणिग्रहण अर्थात् विवाह के मन्त्र सप्तपदी के पूर्ण होने पर पूर्ण हुए माने जाते हैं। (इसके पहले स्त्री में कन्यात्व ही रहता है; अतः वशिष्ठ जी सत्यव्रत से बारह वर्षों तक कन्या-हरण का प्रायश्चित्त कराना चाहते थे)। परंतु वशिष्ठ जी के इस गूढ़ आशय को सत्यव्रत समझ न सका।

जानन् धर्मं वशिष्ठस्तु न मां त्रातीति भारत।
सत्यव्रतस्तदा रोषं वशिष्ठे मनसाकरोत् ॥८॥

**अर्थ**—'वशिष्ठ जी धर्म को जानते हैं, तब भी मेरी रक्षा नहीं करते हैं।' भारत! यह विचार कर सत्यव्रत अपने मन में उन पर कुपित रहने लगा।

गुणबुद्ध्या तु भगवान् वशिष्ठः कृतवांस्तथा।
न च सत्यव्रतस्तस्य तमुपांशुमबुध्यत ॥९॥

**अर्थ**—भगवान् वशिष्ठ जी ने तो गुणबुद्धि से ऐसा किया था, परन्तु सत्यव्रत उनके इस गुप्त अभिप्राय को समझ न सका।

तस्मिन्नपरितोषो यः पितुरासीन्महात्मनः।
तेन द्वादश वर्षाणि नावर्षत पाकशासनः ॥१०

**अर्थ**—उसके महात्मा पिता को सत्यव्रत के ऊपर जो असन्तोष उत्पन्न हो गया, इस कारण इन्द्र ने उसके राज्य में बारह वर्षों तक वर्षा नहीं की।

तेन त्विदानीं वहता दीक्षां तां दुर्वहां भुवि।
कुलस्य निष्कृतिस्तात कृता सा वै भवेदिति ॥११॥
न तं वशिष्ठो भगवान् पित्रा त्यक्तं न्यवारयत्।
अभिषेक्ष्याम्यहं पुत्रमस्येत्येवं मतिर्मुनेः ॥१२॥

**अर्थ**—तात! 'यदि (सत्यव्रत) भूतल पर कठिनता से पूर्ण होनेवाली इस दीक्षा को पूर्ण कर लेगा तो इसके कुल का उद्धार हो जायेगा'। यह विचार कर भगवान् वशिष्ठ ने उसके पिता द्वारा त्यागे गये सत्यव्रत को नहीं रोका था, उनका विचार था कि '(प्रायश्चित्त के अनन्तर) इसके पुत्र को ही मैं राज्य पर अभिषिक्त कर दूंगा।

स तु द्वादशवर्षाणि दीक्षां तामुद्वहद् बली।
उपांशुव्रतमास्थाय महत् सत्यव्रतो नृप ॥१३॥

**अर्थ**—राजन्! बलवान् सत्यव्रत ने भी चुपचाप दीक्षा लेकर बारह वर्ष तक इस महाव्रत को धारण किया।

अविद्यमाने मांसे तु वशिष्ठस्य महात्मनः।
सर्वकामदुघां दोग्ध्रीं ददर्श स नृपात्मजः ॥१४॥

**अर्थ**—एक समय कंदमूल के गूदे के न रहने पर उस राजकुमार की दृष्टि सब कामनाओं को पूर्ण करनेवाली महात्मा वषिष्ठ की दुधारु गौ के ऊपर पड़ी।

तां वै क्रोधाच्च मोहाच्च श्रमाच्चैव क्षुधार्दितः।
दशधर्मान् गतो राजा जघान जनमेजय ॥१५॥

**अर्थ**—जनमेजय ! राजकुमार सत्यव्रत ने उस गौ को क्रोध, मोह और काम के कारण तथा भूख से पीड़ा पाने के कारण दश अनिष्ट धर्मों (अवस्थाओं) को प्राप्त होने की दशा में मार डाला।

तच्च मांसं स्वयं चैव विश्वामित्रस्य चात्मजान्।
भोजयामास तच्छ्रुत्वा वशिष्ठोऽप्यस्य चुक्रुधे।
क्रुद्धस्तु भगवान् वाक्यमिदमाह नृपात्मजम् ॥१६॥

**अर्थ**—उस मांस को उसने विश्वामित्र के पुत्रों को खिलाया और अपने आप भी खाया। यह सुनकर वशिष्ठ जी भी क्रोध में भर गये और क्रोध में भरे हुए वशिष्ठ जी ने राजा के पुत्र से यह बात कही।

**वशिष्ठ उवाच**—

पातयेयमहं क्रूर तव शङ्कुमसंशयम्।
यदि ते द्वाविमौ शङ्कू न स्यातां वै कृतौ पुनः ॥१७॥

**अर्थ—वशिष्ठजी ने कहा**—क्रूर ! यदि तुझमें फिर किए हुए ये दो शङ्कु (पाप) न होते तो मैं तेरे प्रथम शङ्कु (पाप) को अवश्य नष्ट कर देता।

पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च
अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः।

**अर्थ**—पिता को सन्तुष्ट न रखने, गुरु की दूध देनेवाली गौ की हत्या कर डालने और अप्रोक्षित मांस खाने से तुम्हारे द्वारा तीन प्रकार के पाप बन गये।

**वैशम्पायन उवाच**—

एवं त्रीण्यस्य शङ्कूनि तानि दृष्ट्वा महातपाः।
त्रिशङ्कुरिति होवाच त्रिशङ्कुरिति स स्मृतः ॥१९॥

**अर्थ वैशम्पायनजी बोले**—इस प्रकार उसके तीन शङ्कुओं को देखकर महातपस्वी वशिष्ठ जी ने जो उसे त्रिशङ्कु कहा, इसके कारण वह त्रिशङ्कु ही कहलाने लगा।

विस्वामित्रस्तु दाराणामागतो भरणे कृते।
स तु तस्मै चरं प्रादान्मुनिः प्रीतस्त्रिशङ्कवे ॥२॥

अर्थ—जब विश्वामित्र जी घर लौटे, तब अपनी स्त्री आदि का भरण-पोषण करने के कारण प्रसन्न होकर त्रिशङ्कु को वर देने लगे।

छन्द्यमानो वरेणाथ वरं वव्रे नृपात्मजः।
सशरीरो व्रजे स्वर्गमित्येवं याचितो मुनिः ॥२१॥

अर्थ—जब विश्वामित्र जी ने राजकुमार से इच्छानुसार वर मांगने के लिए कहा तब उसने मुनि से वर मांगा कि 'मैं सदेह स्वर्ग में जाऊं।'

अनावृष्टिभये तस्मिन् गते द्वादशवार्षिके।
राज्येऽभिषिच्य पित्र्ये तु याजयामास तं मुनिः।

अर्थ—(विश्वामित्र के प्रसादमात्र से) बारह वर्षों की अनावृष्टि का भय दूर हो जाने पर विश्वामित्र (मुनि अपने तप से उसके पापों को भस्म करके) उसका पिता के राज्य पर अभिषेक कर उसका यज्ञ कराने लगे।

मिषतां देवतानां च वशिष्ठस्य च कौशिकः।
सशरीरं तदा तं तु दिवमारोपयत् प्रभुः ॥२३॥

अर्थ—तदनन्तर तप की शक्ति से सम्पन्न कौशिक गोत्री विश्वामित्र ने वशिष्ठ और देवताओं के देखते-देखते ही त्रिशङ्कु को सशरीर स्वर्ग में भेज दिया।

तस्य सत्यरथा नाम भार्या कैकयवंशजा।
कुमारं जनयामास हरिश्चन्द्रमकल्मषम् ॥२४॥

अर्थ—त्रिशङ्कु के कैकयवंश में उत्पन्न हुई एक सत्यरथा नाम की भार्या थी। उसमें उसने हरिश्चन्द्र नामवाले निष्पाप पुत्र को उत्पन्न किया।

स वै राजा हरिश्चन्द्रस्त्रैशङ्कव इति स्मृतः।
आहर्ता राजसूयस्य स सम्राडिति विश्रुतः ॥२५॥

अर्थ—वे राजा हरिश्चन्द्र त्रैशङ्कव नाम से प्रसिद्ध थे, उन्होंने राजसूय यज्ञ किया था, अतएव वे सम्राट् कहलाते थे।

हरिश्चन्द्रस्य पुत्रोऽभूद्रोहितो नाम वीर्यवान्।
येनेदं रोहितपुरं कारितं राज्यसिद्धये ॥२६॥

अर्थ—हरिश्चन्द्र के रोहित नामवाला वीर्यवान् पुत्र उत्पन्न हुआ, जिसने अपने राज्य-कार्य की सिद्धि के लिए रोहितपुर बसाया था।

कृत्वा राज्यं स राजर्षिः पालयित्वा त्वथ प्रजाः।
संसारासारतां ज्ञात्वा द्विजेभ्यस्तत्पुरं ददौ ॥२७॥

अर्थ—उस राजर्षि ने राज्य तथा प्रजा का पालन करने के अनन्तर संसार की असारता को जानकर अपना नगर ब्राह्मणों को दे दिया था।

हरितो रोहितस्याथ चञ्चुर्हारीत उच्यते ।
विजयश्च सुदेवश्च चञ्चुपुत्रौ बभूवतुः ॥२८॥

**अर्थ**—रोहित का पुत्र हरित और हरित का पुत्र चञ्चु हुआ—यह प्रसिद्ध है। चञ्चु के विजय और सुदेव नामवाले दो पुत्र हुए।

जेता क्षत्रस्य सर्वस्य विजयस्तेन संस्मृतः ।
रुरुकस्तनयस्तस्य राजधर्मार्थकोविदः ॥२९॥

**अर्थ**—उस (विजय) ने सम्पूर्ण क्षत्रियों को जीत लिया था, इसलिए वह विजय कहलाता था। उसके राज-कार्य, धर्म-कार्य और आर्थिक विषयों में चतुर रुरुक नामवाला पुत्र हुआ।

रुरुकस्य वृकः पुत्रो वृकाद् बाहुस्तु जज्ञिवान् ।
शकैर्यवनकाम्बोजैः पारदैः पह्लवैः सह ॥३०॥
हैहयास्तालजङ्घाश्च निरस्यन्ति स्म तं नृपम् ।
नात्यर्थं धार्मिकस्तात स हि धर्मयुगेऽभवत् ॥३१॥

**अर्थ**—रुरुक का पुत्र वृक हुआ और वृक के बाहु नामवाला पुत्र उत्पन्न हुआ। वह राजा उस (राज) धर्म के युग में अतिधार्मिक नहीं था, इसलिए हैहय और तालजङ्घ वंश के राजाओं ने शक, यवन, काम्बोज, पारद और पह्लव (आदि) राजाओं का साथ देकर बाहुक को उसके राज्य से भ्रष्ट कर दिया।

सगरस्तु सुतो बाहोर्जज्ञे सह गरेण च ।
और्वस्याश्रममागम्य भार्गवेणाभिरक्षितः ॥३२॥

**अर्थ**—बाहुक का जो पुत्र उत्पन्न हुआ वह गर अर्थात् विष के साथ ही उत्पन्न हुआ था। इससे वह सगर कहलाने लगा। (उसकी माता के) और्व के आश्रम में आने पर भृगुवंशी और्व ने उसकी रक्षा की थी।

आग्नेयमस्त्रं लब्ध्वा च भार्गवात् सगरो नृपः ।
जिगाय पृथिवीं हत्वा तालजङ्घान् सहैहयान् ॥३३॥

**अर्थ**—सगर ने भृगुवंशी और्व से आग्नेय अस्त्र को सीखकर तालजंघ और हैहय राजाओं को मारकर पृथिवी को जीत लिया।

शकानां पह्लवानां च धर्मं निरसदच्युतः ।
क्षत्रियाणां कुरुश्रेष्ठ पारदानां स धर्मवित् ॥३४॥

**अर्थ**—कुरुश्रेष्ठ ! धर्म को जाननेवाले पूर्णशक्ति-सम्पन्न सगर ने शक, पह्लव और पारद क्षत्रियों को धर्म-भ्रष्ट कर दिया था।

इति हरिवंशे त्रिशङ्कुचरितकथनं नाम त्रयोदशोऽध्यायः ॥१३॥

—०—०—

# ९. सगरचरितम्, सागराश्च

**जनमेजय उवाच—**

कथं स सगरो जातो गरेणैव सहाच्युतः।
किमर्थं च शकादीनां क्षत्रियाणां महौजसाम् ॥१॥
धर्मं कुलोचितं क्रुद्धो राजा निरसदच्युतः।
एतन्मे सर्वमाचक्ष्व विस्तरेण तपोधन ॥२॥

**अर्थ**—**जनमेजय ने कहा**—तपोधन! वे राजा सगर विष के साथ क्यों उत्पन्न हुए थे? विष के साथ रहते हुए भी मरे क्यों नहीं? और मर्यादा से च्युत न होनेवाले उन नरेश ने क्रोध में भरकर महाबली शक आदि क्षत्रियों के कुलोचित धर्म को क्यों नष्ट कर दिया था? इसका आप मुझसे विस्तापूर्वक वर्णन कोजिए।

**वैशम्पायन उवाच—**

बाहोर्व्यसनिनस्तात हृतं राज्यमभूत् किल।
हैहयैस्तालजंघैश्च शकैः सार्द्धं विशाम्पते ॥३॥

**अर्थ—वैशम्पायन जी बोले**—राजन्! राजा बाहु शिकार और जुए आदि व्यसनों में ही पड़ा रहता था। तात! (इस अवसर से लाभ उठाकर) बाहु के राज्य को हैहय, तालजङ्घ तथा शकों ने छीन लिया।

यवनाः पारदाश्चैव काम्बोजाः पह्लवाः खसाः।
एते ह्यपि गणाः पञ्च हैहयार्थे पराक्रमन् ॥४॥

**अर्थ**—यवन, पारद, काम्बोज, खस और पह्लव—इन पांच गणों ने भी हैहय राजाओं के लिए पराक्रम किया था।

हृतराज्यस्तदा राजा स वै बाहुर्वनं ययौ।
पत्न्या चानुगतो दुःखी वने प्राणानवासृजत् ॥५॥

**अर्थ**—राज्य के छिन जाने पर राजा बाहु वन को चला गया और उसकी पत्नी भी उसके पीछे-पीछे गयी। इसके बाद उस राजा ने दुःखी होकर वन में ही अपने प्राणों को त्याग दिया।

पत्नी तु यादवी तस्य सगर्भा पृष्ठतोऽन्वगात्।
सपत्न्या च गरस्तस्यै दत्तः पूर्वमभूत् किल ॥६॥

**अर्थ**—उसकी पत्नी यदुवंश की कन्या थी। वह गर्भवती थी, तब भी बाहु के पीछे-पीछे वन में गयी थी। उसकी सौत ने उसे पहले ही विष दे

दिया था।

सा तु भर्तुश्चितां कृत्वा वने तामध्यरोहत।
और्वस्तां भार्गवस्तात कारुण्यात् समवारयत् ॥७॥

अर्थ— तात! जब वह स्वामी की चिता बनाकर उस पर चढ़ने लगी, उसी समय वन में विराजमान भृगुवंशी और्व ऋषि ने दया के कारण उसे रोका।

तस्याश्रमे च तं गर्भं गरेणैव सहाच्युतम्।
व्यजायत महाबाहुं सगरं नाम पार्थिवम् ॥८॥

अर्थ—तब उसने उनके आश्रम में ही विष (गर) सहित गर्भ को, जो आगे चलकर सगर नामक महाबाहु राजा के रूप में प्रसिद्ध हुआ, उत्पन्न किया। राजा सगर कभी धर्म से च्युत नहीं हुए थे।

और्वस्तु जातकर्मादि तस्य कृत्वा महात्मनः।
अध्याप्य वेदशास्त्राणि ततोऽस्त्रं प्रत्यपादयत् ॥९॥

अर्थ—और्व ने महामना सगर के जातकर्म आदि संस्कार कराकर उन्हें वेद और शास्त्र पढ़ाये, फिर अस्त्रविद्या सिखायी।

आग्नेयं तु महाघोरममरैरपि दुःसहम्।
स तेनास्त्रबलेनाजौ बलेन च समन्वितः ॥१०॥
हैहयान्निजघानाशु क्रुद्धो रुद्रः पशूनिव।
आजहार च लोकेषु कीर्तिं कीर्तिमतां वरः ॥११॥

अर्थ—उन्होंने सगर को देवताओं के लिए भी असह्य महाघोर आग्नेय अस्त्र दिया था। जब वे अस्त्र-बल और शारीरिक बल से सम्पन्न हो गये, तब क्रोध में भरकर रुद्र जैसे शीघ्रता से पशुओं का संहार करते हैं, उसी प्रकार उन्होंने हैहयों का संहार कर डाला। इस प्रकार कीर्तिमानों में श्रेष्ठ उन वीर पुरुष ने संसार में (अद्‌भुत) कीर्ति पायी थी।

ततः शकान् सयवनान् काम्बोजान् पारदांस्तथा।
पह्लवांश्चैव निःशेषान् कर्तुं व्यवसितस्तदा ॥१२॥

अर्थ—इसके अनन्तर उन्होंने शक, यवन, काम्बोज, पारद और पह्लावों को भी निःशेष (सर्वथा नष्ट) करने का निश्चय किया।

ते वध्यमाना वीरेण सगरेण महात्मना।
वसिष्ठं शरणं गत्वा प्रणिपेतुर्मनीषिणम् ॥१३॥

अर्थ—जब वीर और महात्मा सगर उनका सर्वनाश करने लगे, तब वे

(शक, यवनादि) बुद्धिमान् वशिष्ठ जी की शरण में गये और उनके पैरों में गिर पड़े।

वसिष्ठस्त्वथ तान् दृष्ट्वा समयेन महाद्युतिः।
सगरं वारयामास तेषां दत्त्वाभयं तदा ॥१४॥

अर्थ—परम यशस्वी वशिष्ठ जी ने कुछ विशेष शर्तों पर उनको अभयदान दिया और सगर को (उन्हें मारने से) रोका।

सगरः स्वां प्रतिज्ञां च गुरोर्वाक्यं निशम्य च।
धर्मं जघान तेषां वै वेषान्यत्वं चकार ह ॥१५॥

अर्थ—सगर ने अपनी प्रतिज्ञा और गुरु के वाक्य की ओर ध्यान देकर (उनके प्राण नहीं लिए) उनके धर्म को नष्ट कर दिया, और उनका वेष बदल दिया।

अर्द्धं शकानां शिरसो मुण्डं कृत्वा व्यसर्जयत्।
यवनानां शिरः सर्वं काम्बोजानां तथैव च ॥१६॥

अर्थ—उन्होंने शकों के आधे शिर को मूंडकर छोड़ दिया, यवनों के सारे शिर को मूंड दिया, और पह्लवों के भी शिर को मुंडवा दिया।

पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः।
निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना ॥१७॥

अर्थ—उन महात्मा नरेश ने पारदों के शिर को मुक्तकेश (खुले हुए केशों-वाला) कर दिया और पह्लवों को श्मश्रुधारी (केवल दाढ़ीवाला) बना दिया और सबको स्वाध्याय तथा वषट्कार से रहित कर दिया।

शका यवनकाम्बोजाः पारदाश्च विशाम्पते।
कोलिसर्पाः समहिषा दार्वाश्चोला सकेरलाः ॥१८॥
सर्वे ते क्षत्रियास्तात धर्मस्तेषां निराकृतः।
वसिष्ठवचनाद् राजन् सगरेण महात्मना ॥१९॥

अर्थ—तात! जनेश्वर! शक, यवन, काम्बोज, पारद, कोलिसर्प, महिष, दर्द, चोल और केरल—वे सब क्षत्रिय ही थे। वसिष्ठ जी के वचन से महात्मा सगर ने (इन सबका संहार न करके केवल) इनके धर्म को ही नष्ट कर दिया था।

खसांस्तुषारांश्चोलांश्च मद्रान् किष्किन्धकांस्तथा।
कौन्तलांश्च तथा वङ्गान् साल्वान् कौङ्कणकांस्तथा ॥२०॥
स धर्मविजयी राजा विजित्येमां वसुन्धराम्।
अश्वं वै प्रेरयामास वाजिमेधाय दीक्षितः ॥२१॥

**अर्थ**—उन धर्म-विजयी राजा ने अश्वमेध की दीक्षा लेकर खस, तुषार, चोल, मद्र, किष्किन्धक, कौन्तल, वङ्ग, साल्व तथा कोङ्कण देश के राजाओं को जीता। इस प्रकार पृथ्वी का विजय करते हुए उन्होंने अश्वमेध यज्ञ के लिए अपना घोड़ा छोड़ा।

तस्य चारयतः सोऽश्वः समुद्रे पूर्वदक्षिणे।
वेलासमीपेऽपहृतो भूमिं चैव प्रवेशितः ॥२२॥

**अर्थ**—जब उनका घोड़ा घुमाया जारहा था, उस समय पूर्व-दक्षिण में समुद्र के किनारे किसी ने उस घोड़े को चुरा लिया और उसे भूमि में छिपा दिया।

स तं देशं तदा पुत्रैः खानयामास पार्थिवः।
आसेदुस्ते ततस्तत्र खन्यमाने महार्णवे ॥२३॥
तमादिपुरुषं देवं हरिं कृष्णं प्रजापतिम्।
विष्णुं कपिलरूपेण स्वपन्तं पुरुषोत्तमम् ॥२४॥

**अर्थ**--उस समय राजा (सगर) ने अपने पुत्रों से उस स्थान को खुदवाया। समुद्र के खोदने पर उनके पुत्रों ने आदिपुरुष, हरि (अविद्या कोहरने वाले), कृष्ण (सच्चिदानन्द-स्वरूप) प्रजापति पुरुषोत्तम, (कपिलरूपी विष्णु को वहां सोते हुए समाधि में स्थित) देखा।

तस्य चक्षुःसमुत्थेन तेजसा प्रतिबुध्यतः।
दग्धास्ते वै महाराज चत्वारस्त्ववशेषिताः ॥२५॥
बर्हकेतुः सुकेतुश्च तथा धर्मरथो नृपः।
शूरः पञ्चजनश्चैव तस्य वंशकरो नृपः ॥२६॥

**अर्थ**—उनके योगनिद्रा को त्यागने पर उनके नेत्र में से निकलते हुए तेज से वे सब (राजकुमार) भस्म हो गये। महाराज! केवल बर्हकेतु, सुकेतु, राजा धर्मरथ और वंश को चाहनेवाला शूर पञ्चजन—ये चार राजकुमार ही जीवित बच सके थे।

प्रादाच्च तस्मै भगवान् हरिर्नारायणो वरान्।
अक्षयं वंशमिक्ष्वाकोः कीर्तिं चाप्यनिवर्तनीम् ॥१७॥
पुत्रं समुद्रं च विभुः स्वर्गवासं तथाक्षयम्।
पुत्राणां चाक्षयाँल्लोकांस्तस्य ये चक्षुषा हताः ॥१७॥

**अर्थ**—उन्हें (कपिलरूपी) विभु हरिनारायण भगवान् ने यह वरदान दिया था कि इक्ष्वाकु का वंश अक्षय रहेगा और राजा सगर की कीर्ति कभी नष्ट

नहीं होगी। समुद्र उनका पुत्र कहा जायेगा (अर्थात् भविष्य में यह सागर नाम से प्रसिद्ध होगा) और उन्हें अक्षय स्वर्गवास मिलेगा। कपिल जी ने अपने नेत्र के तेज से भस्म हुए सगर पुत्रों को भी अक्षय लोकों की प्राप्ति होने का वर दिया।

समुद्रश्चार्घ्यमादाय ववन्दे तं महीपतिम्।
सागरत्वं च लेभे स कर्मणा तेन तस्य वै ।।२६।।

**अर्थ**—(उस समय) समुद्र ने अर्घ्य लेकर उन राजा (सगर) को प्रणाम किया और सगर के इस कर्म के कारण समुद्र का सागर नाम पड़ गया।

तं चाश्वमेधिकं सोऽश्वं समुद्रादुपलब्धवान्।
आजहाराश्वमेधानां शतं स सुमहायशाः।
पुत्राणां च सहस्राणि षष्टिस्तस्येति नः श्रुतम् ।।३०।।

**अर्थ**—उन्होंने अश्वमेध यज्ञ के घोड़े को भी समुद्र से प्राप्त किया। इस तरह उन महायशस्वी राजा ने सौ अश्वमेध यज्ञ किए थे—ऐसा सुना जाता है। इन महाराज के पुत्रों की संख्या साठ हजार थी।

इति हरिवंशे सगरोत्पत्तिर्नाम चतुर्दशोऽध्यायः ।।१४।।

---

# १०. पैजवनाः सागराश्च (ऐक्ष्वाकाः)

**जनमेजय उवाच**—

सगरस्यात्मजा वीराः कथं जाता महात्मनः।
विक्रान्ताः षष्टिसाहस्रा विधिना केन वा द्विज ।।१।।

**अर्थ—जनमेजय ने कहा**—द्विज! महात्मा सगर के साठ हजार वीर और पराक्रमी पुत्र किस प्रकार उत्पन्न हुए थे?

**वैशम्पायन उवाच**—

द्वे भार्ये सगरस्यास्तां तपसा दग्धकिल्विषे।
ज्येष्ठा विदर्भदुहिता केशिनी नाम विश्रुता ।।२।।

**अर्थ वैशम्पायन जी ने उत्तर दिया**—सगर की दो रानियां थीं। तप से उनके पाप नष्ट हो गये थे। उनमें बड़ी रानी विदर्भ नरेश की पुत्री थीं और केशिनी नाम से प्रसिद्ध थीं।

कनीयसी तु या तस्य पत्नी परमधर्मिणी ।
अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ॥३॥

**अर्थ**—उन राजा की जो छोटी पत्नी थी, वह बड़ी ही धर्मात्मा थी । वह अरिष्टनेमि (कश्यप) की पुत्री थी । उसके समान पृथिवी पर कोई भी दूसरी रूपवती स्त्री नहीं थी ।

और्वस्ताभ्यां वरं प्रादात् तं निबोध जनाधिप ।
षष्टिं पुत्रसहस्राणि गृह्णात्वेका तपस्विनी ॥४॥
एकं वंशधरं त्वेका यथेष्टं वरयत्विति ।

**अर्थ**—जनाधिप ! और्व ने उन दोनों को जो वर दिया था, उसे सुनो ! (और्व ने कहा था) दोनों में से कोई एक तपस्विनी रानी तो साठ हजार पुत्र मांग ले और एक वंश चलानेवाले एक ही पुत्र को मांगे । अब जिसे जो वर अच्छा लगता हो वह उस वर को मांग ले ।

तत्रैका जगृहे पुत्राँल्लुब्धा शूरान् बहूंस्तथा ॥५॥
एकं वंशधरं त्वेका तथेत्याह च तां मुनिः ।
केशिन्यसूत सगरादसमञ्जसमात्मजम् ॥६॥

**अर्थ**—उनमें से एक पुत्रलोभिनी स्त्री ने तो बहुत से शूरवीर पुत्रों को मांग लिया तथा एक ने एक ही वंशधर पुत्र को मांगा । तब मुनि ने तथास्तु—ऐसा ही होगा, कहकर वरदान दे दिया । केशिनी के सगर से असमञ्जस नामक पुत्र उत्पन्न हुआ ।

राजा पञ्चजनो नाम बभूव सुमहाबलः ।
इतरा सुषुवे तुम्बीं बीजपूर्णामिति श्रुतिः ॥७॥

**अर्थ**—वह पञ्चजन नाम से प्रसिद्ध महाबलवान् राजा था । दूसरी ने बीजों से भरी हुई एक तूंबी उत्पन्न की, वह बात प्रसिद्ध है ।

तत्र षष्टिसहस्राणि गर्भास्ते तिलसम्मिताः ।
सम्बभूवुर्यथाकालं ववृधुश्च यथाक्रमम् ॥८॥

**अर्थ**—उस तूंबी में तिल के समान साठ हजार गर्भ थे, जो समय आने पर उत्पन्न हुए और क्रमशः बढ़ने लगे ।

घृतपूर्णेषु कुम्भेषु तान् गर्भान् निदधे पिता ।
धात्रीश्चैकैकशः प्रादात् तावतीरेव पोषणे ॥९॥

**अर्थ**—पिता ने उन गर्भों को घृत से भरे हुए घड़ों में डाल दिया और उनका पोषण करने के लिए एक-एक घड़े पर एक-एक करके उतनी ही धाइयों को नियुक्त कर दिया ।

ततो दशसु मासेषु समुत्तस्थुर्यथासुखम् ।
कुमारास्ते यथाकालं सगरप्रीतिवर्धना: ॥१०॥

अर्थ—दस महीने बीतने पर सगर की प्रीति को बढ़ानेवाले बहुत से बच्चे सुखपूर्वक समयानुसार उत्पन्न होने लगे।

षष्टिः पुत्रसहस्राणि तस्यैवमभवन् नृप ।
गर्भादलाबुमध्याद् वै जातानि पृथिवीपते ॥११॥

अर्थ—राजन् ! इस प्रकार सगर के साठ हजार पुत्र उत्पन्न हुए थे और पृथिवीपते ! वे तूंबी के बीजों की तरह तूंबी (लौकी) के मध्य में रखे हुए गर्भों से उत्पन्न हुए थे।

तेषां नारायणं तेजः प्रविष्टानां महात्मनाम् ।
एकः पञ्चजनो नाम पुत्रो राजा बभूव ह ॥१२॥

अर्थ—भगवान् नारायण (कपिलदेव) के तेज में प्रविष्ट हुए राजकुमारों में से एक पञ्चजन (असमंजस) नामक राजपुत्र ही राजा हो पाया।

सुतः पञ्चजनस्यासीदंशुमान् नाम वीर्यवान् ।
दिलीपस्तनयस्तस्य खट्वाङ्ग इति विश्रुतः ॥१३॥

अर्थ—पञ्चजन[1] (असमंजस) का पुत्र वीर्यवान् अंशुमान् हुआ। उसका पुत्र दिलीप हुआ, जो खट्वाङ्ग नाम से भी प्रसिद्ध है।

येन स्वर्गादिहागत्य मुहूर्तं प्राप्य जीवितम् ।
त्रयोऽनुसंधिता लोका बुद्धया सत्येन चानघ ॥१४॥

अर्थ—अनघ ! उसने मुहूर्त भर का (४८ मिनट का) जीवन पाकर स्वर्ग से इस मृत्युलोक में आकर सूक्ष्म बुद्धि से तथा सत्य (ब्रह्मभाव) के द्वारा तीनों लोकों को तत्त्वतः जान लिया था।

दिलीपस्य तु दायदो महाराजो भगीरथः ।
यः स गङ्गां सरिच्छ्रेष्ठामवातारयत प्रभुः ॥१५॥

अर्थ—दिलीप के पुत्र महाराज भगीरथ हुए। उन प्रभु ने नदियों में श्रेष्ठ गङ्गाजी को (स्वर्ग से भूमि पर) उतारा था।

कीर्तिमान् स महाभागः शक्रतुल्यपराक्रमः ।
समुद्रमानयच्चैनां दुहितृत्वेन कल्पयत् ।
तस्माद् भागीरथी गङ्गा कथ्यते वंशचिन्तकैः ॥१६॥

---

१. शुद्ध पाठ—पिजवनः=(पैंजवनः)

अर्थ—इन्द्र के तुल्य पराक्रमी उन यशस्वी महापुरुष ने गङ्गाजी को समुद्र तक पहुंचा दिया और उन्होंने गङ्गाजी को अपनी पुत्री बनाया; इसीलिए वंश का कीर्तन करनेवाले विद्वान् गङ्गाजी को भागीरथी (भगीरथ की पुत्री) कहते हैं।

भगीरथसुतो राजा श्रुत इत्यभिविश्रुतः।
नाभागस्तु श्रुतस्यासीत् पुत्रः परमधार्मिकः ॥१७॥

अर्थ—भगीरथ का पुत्र श्रुत नाम से प्रसिद्ध है। श्रुत का नाभाग नामक परमधार्मिक पुत्र उत्पन्न हुआ।

अम्बरीषस्तु नाभागिः सिन्धुद्वीपपिताभवत्।
अयुताजित् तु दायादः सिन्धुद्वीपस्य वीर्यवान् ॥१८॥

अर्थ—नाभाग का पुत्र अम्बरीष हुआ। वह सिन्धुद्वीप का पिता था। सिन्धुद्वीप के अयुताजित् नामक वीर्यवान् पुत्र हुआ।

अयुताजित्सुतस्त्वासीदृतुपर्णो महायशाः।
दिव्याक्षहृदयज्ञो वै राजा नलसखो बली ॥१९॥

अर्थ—अयुताजित् के ऋतपर्ण नामवाला महायशस्वी पुत्र उत्पन्न हुआ। वह दिव्य अक्ष (द्यूत) विद्या का रहस्य-वेत्ता राजा नल का सखा तथा बड़ा बली था।

ऋतुपर्णसुतस्त्वासीदार्तुपर्णिर्महीपतिः।
सुदासस्तस्य तनयो राजा त्विन्द्रसखोऽभवत् ॥२०॥

अर्थ—ऋतुपर्ण का पुत्र राजा आर्तुपर्णि हुआ, जो राजा कल्माषपाद और मित्रसह नाम से भी प्रसिद्ध था।

कल्माषपादस्य सुतः सर्वकर्मेति विश्रुतः।
अनरण्यस्तु पुत्रोऽभूद् विश्रुतः सर्वकर्मणः ॥२२॥

अर्थ—कल्माषपाद के सर्वकर्मा नाम से प्रसिद्ध पुत्र उत्पन्न हुआ और सर्वकर्मा का पुत्र अनरण्य नाम से विख्यात हुआ।

अनरण्यसुतो निघ्नो निघ्नपुत्रौ बभूवतुः।
अनमित्रो रघुश्चैव पार्थिवर्षभ सत्तमौ ॥२३॥

अर्थ—नृपश्रेष्ठ! अनरण्य का पुत्र निघ्न हुआ, निघ्न के अनमित्र और रघु नामक दो श्रेष्ठ पुत्र उत्पन्न हुए।

अनमित्रस्य धर्मात्मा विद्वान् दुलिदुहोऽभवत्।
दिलीपस्तनयस्तस्य रामप्रपितामहः ॥२४॥

अर्थ—अनमित्र के दुलिदुह नामवाला धर्मात्मा और विद्वान् पुत्र उत्पन्न हुआ। दुलिदुह के पुत्र दिलीप हुए, जो श्री रामचन्द्र जी के वृद्ध पितामह थे।

दीर्घबाहुर्दिलीपस्य रघुर्नाम्नाभवत् सुतः।
अयोध्यायां महाराजो रघुश्चासीन्महाबलः ॥२५॥

अर्थ—दिलीप के रघु नामक महाबाहु पुत्र उत्पन्न हुए। ये रघु अयोध्या में महाबली सम्राट् हुए।

अजस्तु रघुतो जज्ञे अजाद् दशरथोऽभवत्।
रामो दशरथाज्जज्ञे धर्मात्मा सुमहायशाः ॥२६॥

अर्थ—रघु से अज उत्पन्न हुए। अज से दशरथ हुए तथा दशरथ से धर्मात्मा एवं महायशस्वी श्रीरामचन्द्र प्रकट हुए।

रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः।
अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः ॥२७॥

अर्थ—श्रीराम के कुश नाम से प्रसिद्ध पुत्र उत्पन्न हुआ। कुश के अतिथि नामक पुत्र हुआ और अतिथि के पुत्र का नाम निषध था।

निषधस्य नलः पुत्रो नभः पुत्रो नलस्य तु।
नभस्य पुण्डरीकस्तु क्षेमधन्वा ततः स्मृतः ॥२८॥

अर्थ—निषध का पुत्र नल, नल का पुत्र नभ, नभ का पुत्र पुण्डरीक और पुण्डरीक का पुत्र क्षेमधन्वा हुआ।

क्षेमधन्वसुतस्त्वासीद् देवानीकः प्रतापवान्।
आसीदहीनगुर्नाम देवानीकसुतः प्रभुः ॥२९॥

अर्थ—क्षेमधन्वा का पुत्र प्रतापी देवानीक हुआ, देवानीक के अहीनगु नामक प्रभावशाली पुत्र उत्पन्न हुआ।

अहीनगोस्तु दायादः सुधन्वा नाम पार्थिवः।
सुधन्वनः सुतश्चैव ततो जज्ञेऽनलो नृपः ॥३०॥

अर्थ—अहीनगु का पुत्र राजा सुधन्वा हुआ और सुधन्वा का पुत्र अनल नामक राजा हुआ।

उक्थो नाम स धर्मात्मानलपुत्रो बभूव ह।
वज्रनाभः सुतस्तस्य उक्थस्य च महात्मनः ॥३१॥

अर्थ—अनल के उक्थ नामक धर्मात्मा पुत्र उत्पन्न हुआ और उन महात्मा उक्थ के पुत्र का नाम वज्रनाभ हुआ।

शङ्खस्तस्य सुतो विद्वान् व्युषिताश्व इति श्रुतः।
पुष्पस्तस्य सुतो विद्वानर्थसिद्धिस्तु तत्सुतः ॥३२॥

**अर्थ**—वज्रनाभ के शंख नामक विद्वान् पुत्र उत्पन्न हुआ, जो व्युषिताश्व के नाम से भी प्रसिद्ध है। शंख का पुत्र पुष्प और पुष्प का पुत्र विद्वान् अर्थ-सिद्धि था।

सुदर्शनः सुतस्तस्य अग्निवर्णः सुदर्शनात्।
अग्निवर्णस्य शीघ्रस्तु शीघ्रस्य तु मरुः सुतः ॥३३॥

**अर्थ**—अर्थसिद्धि का पुत्र सुदर्शन, सुदर्शन से अग्निवर्ण, अग्निवर्ण का पुत्र शीघ्र और शीघ्र से मरु नामक पुत्र हुआ।

मरुस्तु योगमास्थाय कलापद्वीपमास्थितः।
तस्यासीद् विश्रुतवतः पुत्रो राजा बृहद्बलः ॥३४॥

**अर्थ**—मरु योग का आश्रय लेकर कलापद्वीप में रहने लगे। परम प्रसिद्ध मरु के पुत्र राजा बृहद्बल हुए।

नलौ द्वावेव विख्यातौ पुराणे भरतर्षभ।
वीरसेनात्मजश्चैव यश्चेक्ष्वाकुकुलोद्वहः ॥३५॥

**अर्थ**—भरतर्षभ! पुराण में नल नाम से दो ही राजा प्रसिद्ध हैं—एक वीरसेन-पुत्र नल और दूसरा इक्ष्वाकु कुलोत्पन्न (निषध पुत्र) नल।

इक्ष्वाकुवंशप्रभवाः प्राधान्येनेह कीर्तिताः।
एते विवस्वतो वंशे राजानो भूरितेजसः ॥३६॥

**अर्थ**—विवस्वान् (सूर्य) के वंश में ये परम तेजस्वी राजा उत्पन्न हुए हैं। यहां इक्ष्वाकु वंश में उत्पन्न हुए मुख्य-मुख्य राजाओं का वर्णन किया गया है।

पठन् सम्यगिमां सृष्टिमादित्यस्य विवस्वतः।
श्राद्धदेवस्य देवस्य प्रजानां पुष्टिदस्य च ॥३७॥
प्रजावानेति सायुज्यमादित्यस्य विवस्वतः।
विपाप्मा विरजाश्चैव आयुष्मांश्च भवत्युत ॥३८॥

**अर्थ**—जो मनुष्य अदितिनन्दन भगवान् सूर्य की तथा प्रजाओं के पोषक देवता श्राद्धदेव की इस सृष्टि-परम्परा का भलीभांति पाठ करता है, वह संतानवान् होता और निष्पाप, रजोगुण रहित एवं दीर्घायु हो अन्त में भगवान् सूर्य का सायुज्य प्राप्त कर लेता है।

इति हरिवंशे आदित्यस्य वंशानुकीर्तनं नाम पञ्चदशोऽध्यायः ॥१५॥

# ११. सोमचरितम्—बुधोत्पत्तिश्च

**वैशम्पायन उवाच—**

पिता सोमस्य वै राजन् जज्ञेऽत्रिर्भगवानृषिः ।
ब्रह्मणो मानसात् पूर्वं प्रजासर्गं विधित्सतः ॥१॥

**अर्थ**—वैशम्पायन जी कहते हैं—राजन् ! प्राचीनकाल में ब्रह्मा जी ने प्रजा की सृष्टि करने का विचार किया। उस समय उनके मानसिक संकल्प से सोम (चन्द्रमा) के पिता भगवान् अत्रि ऋषि उत्पन्न हुए।

तत्रात्रिः सर्वभूतानां तस्थौ स्वतनयैर्युतः ।
कर्मणा मनसा वाचा शुभान्येव चचार सः ॥२॥

**अर्थ**—अत्रि ऋषि भी प्रजा की सृष्टि में ही संलग्न हुए। वे तथा उनके पुत्र मन, वाणी और कर्म से सब प्राणियों का कल्याण करनेवाले कार्य ही करते थे।

अहिंस्रः सर्वभूतेषु धर्मात्मा संशितव्रतः ।
काष्ठकुडचशिलाभूत ऊर्ध्वबाहुर्महाद्युतिः ॥३॥

अनुत्तरं नाम तपो येन तप्तं महत् पुरा ।
त्रीणि वर्षसहस्राणि दिव्यानीति हि नः श्रुतम् ॥४॥

**अर्थ**—हमने सुना है कि प्राचीनकाल में प्रशंसनीय व्रत का पालन करने वाले, महातेजस्वी, धर्मात्मा अत्रि ऋषि ने तीन हजार दिव्य वर्षों तक अपनी भुजाएं ऊपर उठाकर काष्ठ, दीवार और पत्थर के समान निश्चल रहकर किसी प्राणी को तनिक भी कष्ठ पहुंचाये बिना ही अनुत्तर नामक महान् तप किया था।

तत्रोर्ध्वरेतसस्तस्य स्थितस्यानिमिषस्य ह ।
सोमत्वं तनुरापेदे महासत्त्वस्य भारत ॥५॥

**अर्थ**—भारत ! अत्रि ऋषि महान् सत्त्वगुण से सम्पन्न थे। वे एकटक देखते हुए ऊर्ध्वरेता (ब्रह्मचारी) रहकर सोम की भावना से खड़े-खड़े तपस्या करते थे, अतः उनका शरीर सोमरूप में परिणत हो गया।

ऊर्ध्वमाचक्रमे तस्य सोमत्वं भावितात्मनः ।
नेत्राभ्यां वारि सुस्राव दशधा द्योतयद् दिशः ॥६॥

**अर्थ**—शुद्ध अन्तःकरणवाले मुनि के नेत्रों से वह सोमरूप तेज, जलरूप

में वह निकला और दसों दिशाओं को प्रकाशित करता हुआ आकाश में चढ़ने लगा।

तं गर्भं विधिना हृष्टा दश देव्यो दधुस्तदा।
समेत्य धारयामासुर्न च ताः समशक्नुवन् ॥७॥

**अर्थ**—तब प्रसन्नता में भरी हुई दस दिशारूपी देवियों ने सम्मिलित हो उस तेज को अपने गर्भ में विधिपूर्वक धारण किया, परन्तु वे उस तेज को धारण करने में समर्थ न हो सकीं।

स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः।
पपात भासयँल्लोकाञ्छीतांशु सर्वभावनः ॥८॥

**अर्थ**—तब (औषध आदि के द्वारा) सब लोकों को पुष्ट करनेवाला शीतल किरणों से सुशोभित वह प्रकाशमान गर्भ लोकों को प्रकाशित करता हुआ दिग्देवियों के उदर से सहसा गिर पड़ा।

यदा न धारणे शक्तास्तस्य गर्भस्य ता दिशः।
ततस्ताभिः सहैवाशु निपपात वसुन्धराम् ॥९॥

**अर्थ**—जब दिशाएं उस गर्भ के तेज को न रोक सकीं, तो वह गर्भ उनके साथ ही पृथ्वी पर गिर पड़ा।

पतितं सोममालोक्य ब्रह्मा लोकपितामहः।
रथमारोपयामास लोकानां हितकाम्यया ॥१०॥

**अर्थ**—सोम को गिरा हुआ देख लोक-पितामह ब्रह्माजी ने संसार का हित करने की भावना से उसे रथ पर रख लिया।

स हि वेदमयस्तात धर्मात्मा सत्यसंग्रहः।
युक्तो वाजिसहस्रेण सितेनेति हि नः श्रुतम् ॥११॥

**अर्थ**—तात! हमने सुना है कि वह रथ वेदमय, धर्म-स्वरूप तथा सत्य से नियन्त्रित था। उसमें एक हजार श्वेत घोड़े जुते हुए थे।

तस्मिन् निपतिते देवाः पुत्रेऽत्रेः परमात्मनि।
तुष्टुवुर्ब्रह्मणः पुत्रा मानसाः सप्त ये श्रुताः ॥१२॥

**अर्थ**—अत्रिपुत्र भगवान् सोम के गिरने पर ब्रह्मा जी के सुप्रसिद्ध सात मानस पुत्र उनकी स्तुति करने लगे।

तथैवाङ्गिरसस्तत्र भृगुरेवात्मजैः सह।
ऋग्भिर्यजुर्भिर्बहुलैरथर्वाङ्गिरसैरपि ॥१३॥

अर्थ—अङ्गिरा-गोत्री भृगु ऋषि और उनके पुत्र ऋग्वेद, यजुर्वेद (सामवेद) और अथर्ववेद की अनेक श्रुतियों से सोम की स्तुति करने लगे।

तस्य संस्तूयमानस्य तेजः सोमस्य भास्वतः।
आप्यायमानं लोकांस्त्रीन् भासयामास सर्वशः ॥१४॥

अर्थ—('अंशु' रंशुष्टे देव सोमाप्यायताम्' इत्यादि मन्त्रों के द्वारा) स्तुति करने पर पुष्ट हुआ प्रकाशमान सोम का तेज तीनों लोकों को सर्वथा प्रकाशित करने लगा।

स तेन रथमुख्येन सागरान्तां वसुन्धराम्।
त्रिःसप्तकृत्वोऽतियशाश्चकाराभिप्रदक्षिणम् ॥१५॥

अर्थ—तब उन परम यशस्वी (ब्रह्माजी) ने उस (सोमवान्) श्रेष्ठ रथ में बैठकर समुद्र तक की पृथ्वी की इक्कीस बार प्रदक्षिणा की।

तस्य यच्च्यावितं तेजः पृथिवीमन्वपद्यत।
ओषध्यस्ताः समुद्भूतास्तेजसा प्रज्वलन्त्युत ॥१६॥

अर्थ—उस समय (रथ के वेग से छलक कर) सोम का जो तेज पृथ्वी पर टपकने लगा, उस तेज से प्रकाशपूर्ण ओषधियां उत्पन्न हुईं।

ताभिर्धार्यास्त्रयो लोकाः प्रजाश्चैव चतुर्विधाः।
पोष्टा हि भगवान् सोमो जगतो जगतीपते ॥१७॥

अर्थ—उन ओषधियों से भूलोक, भुवर्लोक और स्वर्गलोक—इन तीनों लोकों का और जरायुज, अण्डज, स्वेदज, और उद्भिज्ज—इन चार प्रकार की प्रजाओं का पालन होता रहता है। राजन्! इस प्रकार भगवान् सोम सम्पूर्ण-जगत् का पोषण करते हैं।

स लब्धतेजा भगवान् संस्तवैस्तैश्च कर्मभिः।
तपस्तेपे महाभाग पद्मानां दशतीर्दश ॥१८॥

अर्थ—महाभाग! उन स्मृतिरूप कर्मों से तेजस्वी होकर भगवान् सोम ने एक हजार पद्म वर्षों तक तप किया।

हिरण्यवर्णा या देव्यो धारयन्त्यात्मना जगत्।
निधिस्तासामभूद्देवः प्रख्यातः स्वेन कर्मणा ॥१९॥

अर्थ—चांदी के समान शुक्ल वर्णवाली जो जल की अधिष्ठात्री देवियां अपने स्वरूपभूत जल से जगत् का पालन करती हैं, चन्द्रदेव उनकी निधि हुए। वे अपने कर्मों से विख्यात हैं।

ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः।
बीजौषधीनां विप्राणामपां च जनमेजय ॥२०॥

**अर्थ**—जनमेजय ! तदनन्तर ब्रह्मवेत्ताओं में श्रेष्ठ ब्रह्माजी ने चन्द्रमा को बीज, ओषधि, ब्राह्मण और जल का राजा बना दिया।

सोऽभिषिक्तो महाराज राजराज्येन राजराट्।
लोकांस्त्रीन् भासयामास स्वभासा भास्वतां वरः ॥२१॥

**अर्थ**—महाराज ! जब प्रकाशवानों में श्रेष्ठ चन्द्रमा का इन चारों के राज्य पर सम्राट् के रूप में अभिषेक हो गया, तब (सम्राट्) चन्द्रमा अपनी कान्ति से तीनों लोकों को प्रकाशित करने लगे।

सप्तविंशतिमिन्दोस्तु दाक्षायण्यो महाव्रताः।
ददौ प्राचेतसो दक्षो नक्षत्राणीति या विदुः ॥२२॥

**अर्थ**—उस समय प्रचेताओं के पुत्र दक्ष ने अपनी महाव्रत-धारिणी सत्ताईस कन्याएं चन्द्रमा को ब्याह दीं, जिन्हें विद्वान् पुरुष सत्ताईस नक्षत्रों के रूप में जानते हैं।

स तत् प्राप्य महद्राज्यं सोमः सोमवतां वरः।
समाजह्रे राजसूयं सहस्रशतदक्षिणम् ॥२३॥

**अर्थ**—इस बड़े भारी राज्य को पाकर पितृ देवताओं में श्रेष्ठ सोम ने राजसूय यज्ञ का अनुष्ठान किया, जिसमें उन्होंने एक लाख गौएं दक्षिणा में दी थीं।

होतास्य भगवानत्रिरध्वर्युर्भगवान् भृगुः।
हिरण्यगर्भश्चोद्गाता ब्रह्मा ब्रह्मत्वमेयिवान् ॥२४॥

**अर्थ**—सोम के (उस यज्ञ में) भगवान् अत्रि होता बने। भगवान् भृगु अध्वर्यु, हिरण्यगर्भ उद्गाता तथा वशिष्ठ जी ब्रह्मा बने।

सदस्यस्तत्र भगवान् हरिर्नारायणः स्वयम्।
सनत्कुमारप्रमुखैराद्यैर्ब्रह्मर्षिभिर्वृतः ॥२५॥

**अर्थ**—उस यज्ञ में सनत्कुमार आदि प्राचीन ब्रह्मर्षियों ने स्वयं भगवान् नारायण हरि को ही सदस्य बनाया था।

दक्षिणामददात् सोमस्त्रींल्लोकानिति नः श्रुतम्।
तेभ्यो ब्रह्मर्षिमुख्येभ्यः सदस्येभ्यश्च भारत ॥२६॥

**अर्थ**—भारत ! हमने सुना है कि उन ब्रह्मर्षियों में श्रेष्ठ सदस्यों को सोम ने तीनों लोक दक्षिणा में दे दिए थे।

तं सिनिश्च कुहूश्चैव द्युतिः पुष्टिः प्रभा वसुः।
कीर्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे ॥२७॥

अर्थ उस समय सिनीवाली, कुहू, द्युति, पुष्टि, प्रभा, वसु, कीर्ति, धृति और लक्ष्मी (शोभा)—ये नौ देवियां नित्य-प्रति चन्द्रमा की सेवा में लगी रहती थीं।

प्राप्यावभृथमव्यग्रः सर्वदेवर्षिपूजितः।
विरराजाधिराजेन्द्रो दशधा भासयन् दिशः ।।२८।।

अर्थ – इस प्रकार सभी ऋषि और देवताओं से सत्कार पाकर द्विजराज चन्द्रमा ने अवभृथ स्नान किया, फिर वे दसों दिशाओं को प्रकाशित करने लगे।

तस्य तत् प्राप्य दुष्प्राप्यमैश्वर्यं मुनिसत्कृतम्।
विबभ्राम मतिस्तात विनयादनयाऽऽहता ।।२९।।

अर्थ – तात! मुनियों द्वारा सम्मानित उस दुर्लभ ऐश्वर्य को पाकर चन्द्रमा की बुद्धि विनय से भ्रष्ट हो गयी और उसे अनीति ने धर दबाया।

बृहस्पतेः स वै भार्यां तारां नाम यशस्विनीम्।
जहार तरसा सर्वानवमत्याङ्गिरःसुतान् ।।३०।।

अर्थ—तब उन्होंने अङ्गिरा के सब पुत्रों का तिरस्कार करके बृहस्पति की यशस्विनी भार्या तारा का बलपूर्वक अपहरण कर लिया।

स याच्यमानो देवैश्च तथा देवर्षिभिः सह।
नैव व्यसर्जयत् तारां तस्मा अङ्गिरसे तदा।
स संरब्धस्ततस्तस्मिन् देवाचार्यो बृहस्पतिः ।।३१।।

अर्थ—देवताओं तथा देवर्षियों के याचना करने पर भी उन्होंने बृहस्पति की स्त्री उनको नहीं लौटायी। तब तो देवताओं के आचार्य बृहस्पति जी उनके ऊपर अत्यन्त कुपित हो उठे।

उशना तस्य जग्राह पार्ष्णिमाङ्गिरसस्तदा।
स हि शिष्यो महातेजाः पितुः पूर्वो बृहस्पतेः ।।३२।।

अर्थ—उस समय शुक्राचार्य ने चन्द्रमा का पक्ष लिया और इन्द्र ने बृहस्पति का; क्योंकि महातेजस्वी रुद्र बृहस्पति के पिता अंगिरा के शिष्य थे।

तेन स्नेहेन भगवान् रुद्रस्तस्य बृहस्पते।
पार्ष्णिग्राहोऽभवद् देवः प्रगृह्याजगवं धनुः ।।३३।।

अर्थ—उसी गुरुभाई के स्नेह से भगवान् शिव अपना आजगव नामक धनुष लेकर बृहस्पति जी के पार्ष्णिग्राह (सहायक) बने थे।

तेन ब्रह्मशिरो नाम परमास्त्रं महात्मना।
उद्दिश्य दैत्यानुत्सृष्टं येनैषां नाशितं यशः ।।३४।।

**अर्थ**—महात्मा रुद्र ने दैत्यों को लक्ष्य करके ब्रह्मशिर नामक श्रेष्ठ अस्त्र छोड़ा, जिसने उन (दैत्यों) के सारे यश पर ही पानी फेर दिया।

तत्र तद् युद्धमभवत् प्रख्यातं तारकामयम्।
देवानां दानवानां च लोकक्षयकरं महत् ॥३५॥

**अर्थ**—वहां तारा के लिए देवताओं और दानवों में बड़ा भारी युद्ध हुआ, जो तारकामय महासंग्राम के नाम से प्रसिद्ध है। इसमें संसार का बड़ा भारी संहार हुआ।

तत्र शिष्टास्तु ये देवास्तुषिताश्चैव भारत।
ब्रह्माणं शरणं जग्मुरादिदेवं सनातनम् ॥३६॥

**अर्थ**—भारत! इस युद्ध में मरने से बचे हुए देवता और तुषितगण आदि-देव सनातन ब्रह्मा जी की शरण में गये।

ततो निवार्योशनसं रुद्रं ज्येष्ठं च शङ्करम्।
ददावङ्गिरसे तारां स्वयमेव पितामहः ॥३७॥

**अर्थ**—तब ब्रह्मा जी ने शुक्राचार्य तथा रुद्रों में श्रेष्ठ शङ्कर को भी समझा-बुझाकर युद्ध करने से रोका; फिर उन्होंने स्वयं ही तारा को लाकर बृहस्पति जी को दिया।

तामन्तःप्रसवां दृष्ट्वा तारां प्राह बृहस्पतिः।
मदीयायां न ते योनौ गर्भो धार्यः कथंचन ॥३८॥

**अर्थ**—उस समय तारा को गर्भवती देख बृहस्पति जी ने कहा—तुझे मेरे क्षेत्र में किसी तरह पराया गर्भ नहीं धारण करना चाहिए।

अयोनावुत्सृजत् तं सा कुमारं दस्युहन्तमम्।
इषीकास्तम्बमासाद्य ज्वलन्तमिव पावकम् ॥३९॥

**अर्थ**—तब तारा ने अयोग्य स्थान सींकों के झुरमुट में जाकर प्रज्वलित अग्नि के समान तेजस्वी उस भारी दस्युहन्ताकुमार को उत्पन्न किया।

जातमात्रः स भगवान् देवानामक्षिपद् वपुः।
ततः संशयमापन्ना इमामकथयन् सुराः ॥४०॥

**अर्थ**—उस ऐश्वर्यवान् कुमार ने उत्पन्न होते ही अपने शरीर की कान्ति से देवताओं का तेज फीका कर दिया। तब तो देवता सन्देह में पड़कर तारा से कहने लगे।

सत्यं ब्रूहि सुतः कस्य सोमस्याथ बृहस्पतेः।
पृच्छ्यमाना यदा देवैर्नाह सा साध्वसाधु वा ॥४१॥

तदा तां शप्तुमारब्धः कुमारो दस्युहन्तमः ।
तं निवार्य ततो ब्रह्मा तारां पप्रच्छ संशयम् ।।४२।।

अर्थ—'अरी ! सच बता, यह पुत्र चन्द्रमा का है अथवा बृहस्पति का ? परन्तु देवताओं के पूछने पर भी जब उसने भला-बुरा कुछ उत्तर न दिया, तब वह दस्युहन्ताकुमार उसे शाप देने के लिए तैयार होगया। उस समय ब्रह्मा जी ने उसे रोक कर तारा से इस सन्देह को पूछा—

यदत्र तथ्यं तद् ब्रूहि तारे कस्य सुतस्त्वयम् ।
सा प्राञ्जलिरुवाचेदं ब्रह्माणं वरदं प्रभुम् ।।४३।।

अर्थ—'तारे ! यह किसका पुत्र है इस बात को तू ठीक-ठीक बता।' तब उसने दोनों हाथ जोड़कर वर देनेवाले प्रभु ब्रह्मा जी से कहा—

सोमस्येति महात्मानं कुमारं दस्युहन्तमम् ।
ततस्तं मूर्ध्न्युपाघ्राय सोमो धाता प्रजापतिः ।।४४।।
बुध इत्यकरोन्नाम तस्य पुत्रस्य धीमतः ।
प्रतिकूलं च गगने समभ्युत्तिष्ठते बुधः ।।४५।।

अर्थ—'प्रभो ! यह सोम का ही पुत्र है।' तब उस गर्भ को धारण करानेवाले प्रजापति चन्द्रमा ने उस महामना दस्युहन्ताकुमार का मस्तक सूंघकर उस बुद्धिमान् पुत्र का नाम 'बुध' रखा। यह बुध जब आकाश में उदय होता है, तब प्रतिकूल चेष्टा (उत्पात) किया करता है।

उत्पादयामास ततः पुत्रं वै राजपुत्रिका ।
तस्यापत्यं महाराजो बभूवैलः पुरूरवाः ।।४६।।

अर्थ—तदनन्तर वैराज मनु की पुत्री इला ने बुध से एक पुत्र उत्पन्न किया। उनके वे पुत्र महाराज पुरूरवा हुए।

उर्वश्यां जज्ञिरे यस्य पुत्राः सप्त महात्मनः ।
प्रसह्य धर्षितस्तत्र सोमो वै राजयक्ष्मणा ।।४७।।

अर्थ—महात्मा पुरूरवा के उर्वशी के गर्भ से सात पुत्र उत्पन्न हुए। इधर सोम को हठात् राजयक्ष्मा ने धर दबाया।

ततो यक्ष्माभिभूतस्तु सोमः प्रक्षीणमण्डलः ।
जगाम शरणार्थाय पितरं सोऽत्रिमेव तु ।।४८।।

अर्थ—यक्ष्मा से ग्रस्त होने पर चन्द्रमा का मण्डल क्षीण होने लगा, तब वे अपने पिता अत्रि की शरण में पहुंचे।

तस्य तत्तापशमनं चकारात्रिर्महातपाः ।
स राजयक्ष्मणा मुक्तः श्रिया जज्वाल सर्वतः ॥४६॥

**अर्थ**—महातपस्वी अत्रि ने उनके ताप को दूर कर दिया । वे (चन्द्रमा) राजयक्ष्मा रोग से मुक्त होकर सब ओर से प्रकाशित हो उठे ।

एवं सोमस्य वै जन्म कीर्तितं कीर्तिवर्धनम् । ।
वंशमस्य महाराज कीर्त्यमानं च मे शृणु ॥५०॥

**अर्थ**—महाराज ! इस प्रकार मैंने तुमसे चन्द्रमा के जन्म का वर्णन किया, जो कीर्ति को बढ़ानेवाला है । अब मेरे द्वारा चन्द्रमा के वंश का वर्णन सुनो ।

धन्यमारोग्यमायुष्यं पुण्यं संकल्पसाधनम् ।
सोमस्य जन्म श्रुत्वैव पापेभ्यो विप्रमुच्यते ॥५१॥

**अर्थ**—मनुष्य चन्द्रमा के जन्म को सुनते ही सब पापों से मुक्त हो जाता है । यह चन्द्रमा के जन्म की कथा धन, आयु, आरोग्य और पुण्य देनेवाली है । इसे सुनने से मनुष्य के सारे संकल्प—मनोरथ सिद्ध हो जाते हैं ।

इति हरिवंशे सोमोत्पत्तिकथने पञ्चविंशोऽध्यायः ॥२५॥

---

## १२. ऐलचरितम्

**वैशम्पायन उवाच**—

बुधस्य तु महाराज विद्वान् पुत्रः पुरूरवाः ।
तेजस्वी दानशीलश्च यज्वा विपुलदक्षिणः ॥१॥
ब्रह्मवादी पराक्रान्तः शत्रुभिर्युधि दुर्जयः ।
आहर्ता चाग्निहोत्रस्य यज्ञानां च महीपतिः ॥२॥

**अर्थ**—वैशम्पायन जी कहते हैं—महाराज ! बुध के विद्वान् पुत्र पुरूरवा हुए, जो तेजस्वी, दानशील, यज्ञकर्त्ता, बहुत-सी दक्षिणा देनेवाले ब्रह्मवादी, युद्ध में पराक्रम दिखानेवाले और शत्रुओं से दुर्जय थे । वे राजा अग्निहोत्र और यज्ञों के अनुष्ठान करनेवाले थे ।

सत्यवादी पुण्यमतिः काम्यः संवृतमैथुनः ।
अतीव त्रिषु लोकेषु यशसाप्रतिमस्तदा ॥३॥

अर्थ—राजा पुरूरवा सत्यभाषी और पवित्र विचारवाले थे। उनका रूप वड़ा सुन्दर था और वे गुप्तरूप से सहवास करनेवाले थे। वे अपने समय में तीनों लोकों में अनुपम यशस्वी थे।

तं ब्रह्मवादिनं क्षान्तं धर्मज्ञं सत्यवादिनम्।
उर्वशी वरयामास हित्वा मानं यशस्विनी ॥४॥

अर्थ—उन ब्रह्मवादी, क्षमापरायण, धर्मज्ञ तथा सत्यभाषी राजा को यशस्विनी उर्वशी अप्सरा ने गर्व का परित्याग करके पति रूप में वरण कर लिया था।

तया सहावसद् राजा वर्षाणि दश पञ्च च।
पञ्च षट् सप्त चाष्टौ च दस चाष्टौ च भारत ॥५॥
वने चैत्ररथे रम्ये तथा मन्दाकिनीतटे।
अलकायां विशालायां नन्दने च वनोत्तमे ॥६॥
उत्तरान् स कुरून् प्राप्य मनोरथफलद्रुमान्।
गन्धमादनपादेषु मेरुपृष्ठे तथोत्तरे ॥७॥

अर्थ—भारत! राजा पुरूरवा उस अप्सरा के साथ दस वर्ष तक रमणीय चैत्ररथ वन में, पांच वर्ष तक मन्दाकिनी के तट पर बसी हुई अलकापुरी में, पांच वर्ष तक बदरीनारायण के वनों में, छः वर्ष तक उत्तम उपवन नन्दन वन में, सात वर्ष तक मनोरथ-रूप फल को देनेवाले वृक्षों से परिपूर्ण उत्तर कुरु देशों में, आठ वर्ष तक गन्धमादन पर्वत के शिखरों पर, दस वर्ष तक मेरु पर्वत पर तथा आठ वर्ष तक उत्तराचल पर विहार करते रहे।

एतेषु वनमुख्येषु सुरैराचरितेषु च।
उर्वश्या सहितो राजा रेमे परमया मुदा ॥८॥

अर्थ—राजा पुरूरवा उर्वशी को साथ में लेकर देवताओं से सेवित इन मुख्य-मुख्य वनों में बड़े आनन्द के साथ विहार किया करते थे।

देशे पुण्यतमे चैव महर्षिभिरभिष्टुते।
राज्यं च कारयामास प्रयागे पृथिवीपतिः ॥९॥

अर्थ—पृथ्वीपति पुरूरवा (उर्वशी के साथ) महर्षियों से प्रशंसित परम-पवित्र देश प्रयाग में राज्य करते थे।

तस्य पुत्रा बभूवुस्ते सप्त देवसुतोपमाः।
दिवि जाता महात्मान आयुर्धीमानमावसुः ॥१०॥
विश्वायुश्चैव धर्मात्मा श्रुतायुश्च तथापरः।
दृढायुश्च वनायुश्च शतायुश्चोर्वशीसुताः ॥११॥

अर्थ—राजा के द्वारा उर्वशी के गर्भ से स्वर्ग में देव-पुत्रों के तुल्य आयु, बुद्धिमान् अमावसु, धर्मात्मा विश्वायु, श्रुतायु, दृढायु, वनायु, और शतायु नामक सात पुत्र उत्पन्न हुए, जो सभी महान् आत्मबल से सम्पन्न थे।

**जनमेजय उवाच—**

गान्धर्वी चोर्वशी देवी राजानं मानुषं कथम् ।
देवानुत्सृज्य सम्प्राप्ता तन्नो ब्रूहि बहुश्रुत ॥१२॥

**अर्थ—जनमेजय ने पूछा-** बहुश्रुत वैशम्पायन जी ! उर्वशी देवी तो अप्सरा थी, फिर देवताओं का परित्याग कर वह मनुष्य राजा के पास क्योंकर गयी ? यह मुझे बताइये।

**वैशम्पायन उवाच—**

ब्रह्मशापाभिभूता सा मानुषं समपद्यत ।
ऐलं तु सा वरारोहा समयात् समुपस्थिता ॥१३॥

**अर्थ—वैशम्पायन जी ने कहा**—राजन् ! ब्रह्मश्राप के कारण उर्वशी को मनुष्यलोक में आना पड़ा था। वह सुन्दर अंगोंवाली उर्वशी कुछ शर्तों के साथ इला-नन्दन पुरूरवा के पास रही थी।

आत्मनः शापमोक्षार्थं समयं सा चकार ह ।
अनग्नदर्शनं चैव सकामायां च मैथुनम् ॥१४॥
द्वौ मेषौ शयनाभ्याशे सदा बद्धौ च तिष्ठतः ।
घृतमात्रो तथाऽऽहारः कालमेकं तु पार्थिव ॥१५॥

**अर्थ—**भूपाल ! उसने अपने शाप से छूटने के लिये यह शर्त करा ली थी कि 'मैं आपको नंगा न देखूं, मेरे सकाम होने पर ही आप सहवास करें, मेरे पलंग के पास सदा दो मेंड़ बंधे रहेंगे और मैं दिन में एक बार थोड़ा-सा घृतमात्र भोजन करूंगी।

यद्येष समयो राजन् यावत्कालं च ते दृढः ।
तावत्कालं तु वत्स्यामि त्वत्तः समय एष नः ॥१६॥

**अर्थ**—राजन् ! जब तक इन प्रतिज्ञाओं का आप दृढ़ता के साथ पालन करते रहेंगे, तब तक मैं आपके पास रहूंगी—यह मैं आपसे प्रतिज्ञा कहती हूं।'

तस्यास्तं समयं सर्वं स राजा समपालयत् ।
एवं सा वसते तत्र पुरूरवसि भामिनी ॥१७॥

**अर्थ**—राजा उसकी सब शर्तों का पालन करने लगे। बस प्रकार वह श्रेष्ठ अप्सरा पुरूरवा के यहां रहने लगी।

वर्षाण्येकोनषष्टिस्तु तत्सक्ता शापमोहिता ।
उर्वश्यां मानुषस्थायां गन्धर्वाश्चिन्तयान्विताः ॥१८॥

**अर्थ**—शाप के कारण उर्वशी को जब राजा में आसक्त होकर रहते हुए उनसठ वर्ष बीत गये, तब गन्धर्वों को मनुष्यों के बीच बसनेवाली उर्वशी की चिन्ता हुई ।

**गन्धर्वा ऊचुः**—

चिन्तयध्वं महाभागा यथा सा तु वराङ्गना ।
समागच्छेत् पुनर्देवानुर्वशी स्वर्गभूषणम् ॥१९॥

**अर्थ**—**गन्धर्वों ने कहा**—महाभागो ! वराङ्गना उर्वशी देवताओं में फिर किस प्रकार आवे ? इसका उपाय सोचो; क्योंकि वह स्वर्ग का भूषण है ।

ततो विश्वावसुर्नाम तत्राह वदतां वरः ।
मया तु समयस्ताभ्यां क्रियमाणः श्रुतः पुरा ॥२०॥

**अर्थ**—तब वक्ताओं में श्रेष्ठ विश्वावसु नामक गन्धर्व ने कहा—'उन दोनों ने पहले जो प्रतिज्ञाएं की थीं, उन्हें मैंने सुना है ।

व्युत्क्रान्तसमयं सा वै राजानं त्यक्ष्यते यथा ।
तदहं वेद्म्यशेषेण यथा भेत्स्यत्यसौ नृपः ॥२१॥

**अर्थ**—राजा के प्रतिज्ञा भङ्ग करने पर वह उसे छोड़ देगी । उस राजा की प्रतिज्ञा जिस प्रकार टूटेगी, मैं उसे भी भलीभांति जानता हूं ।

ससहायो गमिष्यामि युष्माकं कार्यसिद्धये ।
एवमुक्त्वा गतस्तत्र प्रतिष्ठानं महायशाः ॥२२॥

**अर्थ**—'तुम्हारे काम को सिद्ध करने के लिए अपने सहायकों को साथ लेकर मैं वहां जाऊंगा ।' यों कहकर वह महायशस्वी गन्धर्व प्रतिष्ठानपुर (झूंसी-प्रयाग) में गये ।

निशायामथ चागम्य मेषमेकं जहार सः ।
मातृवद् वर्तते सा तु मेषयोश्चारुहासिनी ॥२३॥

**अर्थ**—वहां आकर उन्होंने रात में एक भेंड़ चुरा ली । मनोहर हासवाली वह उर्वशी उन भेंड़ों पर माता के समान स्नेह करती थी ।

गन्धर्वागमनं श्रुत्वा शापान्तं च यशस्विनी ।
राजानमब्रवीत् तत्र पुत्रो मेऽह्रियतेति सा ॥२४॥

**अर्थ**—यशस्विनी उर्वशी ने गन्धर्वों के आगमन को सुनकर बिचारा कि अब

मेरे शाप के अन्त होने का समय आ गया, तब उसने राजा से कहा—'राजन् ! मेरे एक बच्चे को चोर चुरा ले गये।'

एवमुक्तो विनिश्चित्य नग्नो नैवोदतिष्ठत।
नग्नं मां द्रक्ष्यते देवी समयो वितथो भवेत् ॥२५॥

अर्थ—यह कहने पर भी वह यह विचारकर नंगा नहीं उठा कि यदि यह देवी मुझे नंगा देख लेगी तो मेरी प्रतिज्ञा झूठी हो जायेगी।

ततो भूयस्तु गन्धर्वा द्वितीयं मेषमाददुः।
द्वितीये तु हृते मेषे ऐलं देव्यब्रवीदिदम् ॥२६॥

अर्थ—इतने ही में गन्धर्व पुनः दूसरे भेंड़ को भी उठा ले गये। दूसरे भेंड़ के चुराये जाने पर देवी उर्वशी ने पुरूरवा से यह कहा—

पुत्रो मेऽपहृतो राजन्ननाथाया इव प्रभो।
एवमुक्तस्तथोत्थाय नग्नो राजा प्रधावितः ॥२७॥
मेषयोः पदमन्विच्छन् गन्धर्वैर्विद्युदप्यथ।
उत्पादिता सुमहती ययौ तद्भवनं महत् ॥२८॥
प्रकाशितं वै सहसा ततो नग्नमवैक्षत।
नग्नं दृष्ट्वा तिरोभूता साप्सरा कामरूपिणी ॥२९॥

अर्थ—'सामर्थ्यशाली राजन् ! अनाथ स्त्री के समान मेरे पुत्रों को छीन लिया गया।' यों उर्वशी के कहने पर राजा नंगे ही उठकर भेड़ों के पैर के चिह्न का अनुसरण करते हुए दौड़े। इसी समय गन्धर्वों ने बड़ी भारी बिजली चमकायी। उस समय वह विशाल भवन एक साथ प्रकाशित होगया। तब तो उर्वशी ने राजा को नंगा देख लिया। वह कामरूपिणी अप्सरा राजा को नंगा देखते ही अन्तर्धान हो गयी।

उत्सृष्टावुरणौ दृष्ट्वा राजा गृह्यागतो गृहे।
अपश्यन्नुर्वशीं तत्र विललाप सुदुःखितः ॥३०॥

अर्थ—उधर राजा भी (गन्धर्वों, के छोड़े हुए भेड़ों को देख उन्हें साथ लेकर घर में घुसे, पर वहां उन्हें उर्वशी नहीं दिखायी दी। तब वे परम दुःखित हो विलाप करने लगे।

चचार पृथिवीं सर्वां मार्गमाण इतस्ततः।
अथापश्यत् स तां राजा कुरुक्षेत्रे महाबलः ॥३१॥
प्लक्षतीर्थे पुष्करिण्यां हैमवत्यां समाप्लुताम्।
क्रीडन्तीमप्सरोभिश्च पञ्चभिः सह शोभनाम् ॥३२॥

अर्थ—फिर वे उर्वशी को खोजते हुए पृथ्वी पर सर्वत्र घूमने लगे। कुछ समय के अनन्तर उन महाबली नरेश ने उस शोभामयी अप्सरा को कुरुक्षेत्र के प्लक्षतीर्थ की हैमवती नामवाली पुष्करिणी में स्नान कर अपनी पांच सखियों के साथ क्रीड़ा करते देखा।

तां क्रीडन्तीं ततो दृष्ट्वा विललाप सुदुःखितः।
सा चापि तत्र तं दृष्ट्वा राजानमविदूरतः ॥३३॥
उर्वशी ताः सखीः प्राह स एष पुरुषोत्तमः।
यस्मिन्नहमवात्सं वै दर्शयामास तं नृपम् ॥३४॥

अर्थ क्रीड़ा करती हुई उर्वशी को देखकर राजा दुःखित होकर विलाप करने लगे। इधर उर्वशी ने भी उस राजा को समीप ही देखकर अपनी सखियों से राजा को दिखाया और कहा—'ये वे ही पुरुषोत्तम हैं, जिनके पास मैं रही थी।'

समाविग्नास्तु ताः सर्वाः पुनरेव नराधिपः।
जाये ह तिष्ठ मनसा घोरे वचसि तिष्ठ ह ॥३५॥
एवमादीनि सूक्तानि परस्परमभाषत।
उर्वशी चाब्रवीदैलं सगर्भाहं त्वया प्रभो ॥३६॥

अर्थ—उस समय वे सभी अप्सराएं (उर्वशी के पुनर्गमन की आशङ्का से) घबरा गयीं। इधर राजा उससे फिर कहने लगे—'प्रिये! तू थोड़ा ठहर, ओ कठोर हृदयवाली! ठहर जा और अपने वचनों पर दृढ़ रह! इस प्रकार वैदिक-सूक्तों को वे दोनों एक-दूसरे के प्रति उत्तर-प्रत्युत्तर के रूप में कहने लगे। उस समय उर्वशी ने इला-पुत्र पुरूरवा से कहा—'प्रभो! मैं आपके द्वारा गर्भवती हूं।'

संवत्सरात् कुमारास्ते भविष्यन्ति नः संशयः।
निशामेकां च नृपते निवत्स्यसि मया सह ॥३७॥

'राजन्! निस्सन्देह एक-एक वर्ष पर मेरे गर्भ से आपके कुमार उत्पन्न होंगे तथा प्रतिवर्ष एक रात्रि आप मेरे साथ रह सकेंगे।'

हृष्टो जगाम राजाथ स्वपुरं तु महायशाः।
गते संवत्सरे भूय उर्वशी पुनरागमत् ॥३८॥

अर्थ—तब वे महायशस्वी राजा प्रसन्न हो गये और अपने नगर में आ गये। वर्ष समाप्त होने पर उर्वशी उनके पास फिर आयी।

उषितश्च तया सार्द्धमेकरात्रं महायशाः।
उर्वश्यथाब्रवीदैलं गन्धर्वा वरदास्तव ॥३९॥

**अर्थ**—महायशस्वी पुरूरवा उसके साथ एक रात्रि रहे। तदनन्तर उर्वशी ने पुरूरवा से कहा—'गन्धर्व आपको वर देना चाहते हैं।

तान् वृणीष्व महाराज ब्रूहि चैनांस्त्वमेव हि।
वृणीष्व समतां राजन् गन्धर्वाणां महात्मनाम् ॥४०॥

**अर्थ**—'महाराज ! अब आप वर मांग लीजिए। आप इनसे इन महात्मा गन्धर्वों की समता मांग लीजिये।'

तथेत्युक्त्वा वरं वव्रे गन्धर्वाश्च तथास्त्विति।
पूरयित्वाग्निना स्थालीं गन्धर्वाश्च तमब्रुवन् ॥४१॥

**अर्थ**—तब पुरूरवा ने 'बहुत अच्छा' कहकर गन्धर्वों से वर मांग लिया। तब गन्धर्वों ने 'बहुत अच्छा, 'ऐसा ही होगा,' कहकर एक थाली में अग्नि भरकर पुरूरवा से कहा—

अनेनेष्ट्वा च लोकान्नः प्राप्स्यसि त्वं नराधिप।
तानादाय कुमारांस्तु नगरायोपचक्रमे ॥४२॥

**अर्थ**—'राजन् ! इस अग्नि से यज्ञ करके तुम हमारे लोकों में आ जाओगे।' तब वे राजा (अग्नि और) अपने पुत्रों को लेकर नगर की ओर चले।

निक्षिप्याग्निमरण्ये तु सपुत्रस्तु गृहं ययौ।
स त्रेताग्निं तु नापश्यदश्वत्थं तत्र दृष्टवान् ॥४३॥

**अर्थ**—(मार्ग में) उन्होंने वन में अग्नि को रख दिया और अपने पुत्रों को लेकर घर में प्रवेश किया। फिर वन में जाने पर वहां उन्होंने अग्नि को नहीं देखा; किन्तु उसकी जगह एक पीपल के वृक्ष को खड़ा देखा।

शमीजातं तु तं दृष्ट्वा अश्वत्थं विस्मितस्तदा।
गन्धर्वेभ्यस्तदाशंसदग्निनाशं ततस्तु सः ॥४४॥

**अर्थ**—तब वे राजा (अग्नि को अपने गर्भ में छिपानेवाले) शमी (जंड) के वृक्ष में से उत्पन्न हुए पीपल को देखकर विस्मय में पड़ गये और उन्होंने गन्धर्वों से अग्नि के न दीखने का वृत्तान्त कहा।

श्रुत्वा तमर्थमखिलमरणीं तु समादिशन्।
अश्वत्थादरणीं कृत्वा मथित्वाग्निं यथाविधि ॥४५॥
मथित्वाग्निं त्रिधा कृत्वा अयजत् स नराधिपः।
इष्ट्वा यज्ञैर्बहुविधैर्गतस्तेषां सलोकताम् ॥४६॥

**अर्थ**—गन्धर्वों ने सब बात को सुनकर कहा, 'तुम पीपल की अरणी बना लो' तब उन्होंने पीपल की अरणी बनाकर शास्त्रीय विधि के अनुसार उन

अरणियों को मथकर अग्नि को उत्पन्न किया। फिर उस अग्नि के तीन विभाग किए। तदनन्तर उस अग्नि से उन्होंने यजन किया था! वे उस त्रेताग्नि से अनेक प्रकार के यज्ञ कर गन्धर्वों की समानता पाकर गन्धर्वों के लोक में पहुंच गये।

गन्धर्वेभ्यो वरं लब्ध्वा त्रेताग्निं समकारयत्।
एकोऽग्निः पूर्वमेवासीदैलस्त्रेतामकारयत् ॥४७॥

अर्थ—राजा पुरूरवा ने गन्धर्वों से वर पाकर त्रेताग्नि की रचना की थी। पहले अग्नि एक ही था, पुरूरवा ने उसको तीन बनाया था।

एवंप्रभावो राजासीदैलस्तु नरसत्तम।
देशे पुण्यतमे चैव महर्षिभिरभिष्टुते ॥४८॥
राज्यं स कारयामास प्रयागे पृथिवीपतिः।
उत्तरे जाह्नवीतीरे प्रतिष्ठाने महायशाः ॥४९॥

अर्थ—नरश्रेष्ठ! राजा पुरूरवा ऐसे प्रतापी थे। उन महायशस्वी पृथ्वीपति ने गङ्गा के उत्तर तट पर बसे हुए महर्षियों से प्रशंसित परम पवित्र प्रतिठान (झूंसी—प्रयाग) में राज्य किया था।

इति हरिवंशे ऐलोत्पत्तिर्नाम षड्विंशोऽध्यायः ॥२६॥

---

# १३. अमावसुवंशानुचरितम्–विश्वामित्रचरितम् च

**वैशम्पायन उवाच—**

ऐलपुत्रा बभूवुस्ते सर्वे देवसुतोपमाः।
दिवि जाता महात्मान आयुर्धीमानमावसुः ॥१॥
विश्वायुश्चैव धर्मात्मा श्रुतायुश्च तथापरः।
दृढायुश्च वनायुश्च शतायुश्चोर्वशीसुताः ॥२॥

अर्थ—वैशम्पायन जी कहते हैं—जनमेजय! पुरूरवा के सभी पुत्र देवकुमारों के तुल्य थे। (उनके नाम इस प्रकार हैं—) आयु, बुद्धिमान् अमावसु, धर्मात्मा विश्वायु, श्रुतायु, दृढायु, वनायु और शतायु।

अमावसोश्च दायादो भीमो राजाथ नग्नजित्।
श्रीमान् भीमस्य दायादो राजासीत् काञ्चानप्रभः।
विद्वांस्तु काञ्चनस्यापि सुहोत्रोऽभून्महाबलः ॥३॥

अर्थ—तात ! अपने पुत्र यदु से ऐसा कहकर कुपित हुए राजा ययाति ने उन्हें शाप दिया—'मूढ़ ! नराधम ! तेरी सन्तान सदा राज्य से वञ्चित रहेगी।'

स तुर्वसुं च द्रुह्युं चाप्यनुं च भारतर्षभ।
एवमेवाब्रवीद् राजा प्रत्याख्यातश्च तैरपि ॥३०॥

अर्थ—भरतश्रेष्ठ ! तदनन्तर राजा ययाति ने क्रमशः तुर्वसु, द्रुह्यु और अनु को भी बुलाकर उनसे ऐसी ही बात कही, परन्तु उन्होंने भी उनकी बात मानने से इन्कार कर दिया।

शशाप तानतिक्रुद्धो ययातिरपराजितः।
यथा ते कथितं पूर्वं मया राजर्षिसत्तमः ॥३१॥

अर्थ—तब किसी से भी पराजित न होनेवाले राजर्षिशिरोमणि ययाति ने अत्यन्त कुपित हो उनको भी वैसा ही शाप दिया जैसा यदु के प्रसङ्ग में पहले तुम्हें बताया गया है।

एवं शप्त्वा सुतान् सर्वांश्चतुरः पूरुपूर्वजान्।
तदेव वचनं राजा पूरुमप्याह भारत ॥३२॥

अर्थ—भारत ! इस प्रकार पूरु से पहले उत्पन्न हुए अपने चारों पुत्रों को शाप देकर राजा ययाति ने पूरु के सामने भी वही प्रस्ताव रक्खा।

तरुणस्तव रूपेण चरेयं पृथिवीमिमाम्।
जरां त्वयि समाधाय त्वं पूरो यदि मन्यसे ॥३३॥

अर्थ—'पूरो ! यदि तुम स्वीकार करो तो मैं अपने बुढ़ापे का भार तुम पर रखकर तुम्हारे रूप से तरुण होकर इस पृथ्वी पर विचरूं।'

स जरां प्रतिजग्राह पितुः पूरुः प्रतापवान्।
ययातिरपि रूपेण पूरोः पर्यचरन्महीम् ॥३४॥

अर्थ—यह सुनकर प्रतापी पूरु ने पिता का बुढ़ापा ले लिया और ययाति भी पूरु के रूप से तरुण हो इस पृथ्वी पर विचरने लगे।

स मार्गमाणः कामानामन्तं भरतसत्तम।
विश्वाच्या सहितो रेमे वने चैत्ररथे प्रभुः ॥३५॥

अर्थ—भरतश्रेष्ठ ! प्रभावशाली ययाति कामनाओं का अन्त ढूंढते हुए चैत्ररथ नामक वन में गये और वहां विश्वाची नामक अप्सरा के साथ रमण करने लगे।

यदावितृष्णः कामानां भोगेषु स नराधिपः।
तदा पूरोः सकाशाद् वै स्वां जरां प्रत्यपद्यत ॥३६॥

**अर्थ**—इतने पर भी जब उन्हें कामोपभोग से तृप्ति नहीं हुई, तब उन नरेश ने घर आकर पूरु से अपना बुढ़ापा ले लिया।

तत्र गाथा महाराज शृणु गीता ययातिना।
याभिः प्रत्याहरेत् कामान् सर्वतोऽङ्गानि कूर्मवत् ॥३७॥

**अर्थ**—महाराज! वहां ययाति ने जो गाथाएं गायीं (उद्‌गार प्रकट किये), उन्हें सुनो। उन पर ध्यान देने से मनुष्य सब भोगों की ओर से अपने मन को उसी प्रकार हटा सकता है जैसे कछुआ अपने अङ्गों से सब ओर से समेट लेता है।

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥३८॥

**अर्थ**—ययाति ने कहा—'भोगों की इच्छा उन्हें भोगने से कभी शान्त नहीं होती; अपितु घी से आग की भांति और भी बढ़ती ही जाती है।

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
नालमेकस्य तत् सर्वमिति पश्यन्न मुह्यति ॥३९॥

**अर्थ**—'इस पृथ्वी पर जितने भी धान, जौ, सुवर्ण, पशु तथा स्त्रियां हैं, वे सब एक पुरुष के लिए भी पर्याप्त नहीं हैं। ऐसा समझकर विद्वान् पुरुष मोह में नहीं पड़ता।

यदा भावं न कुरुते सर्वभूतेषु पापकम्।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥४०॥

**अर्थ**—'जब जीव मन, वाणी और क्रिया द्वारा किसी भी प्राणी के प्रति पापबुद्धि नहीं करता, तब वह ब्रह्मभाव को प्राप्त हो जाता है।

यदान्येभ्यो न बिभ्येत यदा चास्मान्न बिभ्यति।
यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥४१॥

**अर्थ**—'जब वह दूसरे प्राणियों से नहीं डरता, जब उससे भी दूसरे प्राणी नहीं डरते तथा जब वह इच्छा-द्वेष से परे हो जाता है, उस समय ब्रह्मभाव को प्राप्त होता है।

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥४२॥

**अर्थ**—'खोटी बुद्धिवाले पुरुषों द्वारा जिसका त्याग होना कठिन है, जो मनुष्य के बूढ़े होने पर भी स्वयं बूढ़ी नहीं होती तथा जो प्राण-नाशक रोग के समान है, उस तृष्णा का त्याग करनेवाले को ही सुख मिलता है।

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
जीविताशा धनाशा च जीर्यतोऽपि न जीर्यति ॥४३॥

अर्थ—'बूढ़े होनेवाले मनुष्य के बाल पक जाते हैं, उसके दांत भी टूटने लगते हैं, परन्तु धन और जीवन की आशा उस मनुष्य के जीर्ण होने पर भी जीर्ण (शिथिल) नहीं होती ।

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥४४॥

अर्थ—'संसार में जो कामजनित सुख है तथा जो दिव्य महान् सुख हैं, वे सब मिलकर तृष्णा-क्षय से होनेवाले सुख की सोलहवीं कला के बराबर भी नहीं हो सकते ।'

एवमुक्त्वा स राजर्षिः सदारः प्राविशद् वनम् ।
कालेन महता वापि चचार विपुलं तपः ॥४५॥

अर्थ—ऐसा कहकर राजर्षि ययाति स्त्री सहित वन में चले गये । वहां बहुत समय तक उन्होंने भारी तपस्या की ।

भृगुतुङ्गे तपस्तप्त्वा तपसोऽन्ते महातपाः ।
अनश्नन् देहमुत्सृज्य सदारः स्वर्गमाप्तवान् ॥४६॥

अर्थ—उन महातपस्वी नरेश ने भृगुतुङ्ग नामक शिखर पर तपस्या करके स्त्री सहित उपवास के द्वारा देह को त्याग दिया और स्वर्गलोक प्राप्त किया ।

तस्य वंशे महाराज पञ्च राजर्षिसत्तमाः ।
यैर्व्याप्ता पृथिवी सर्वा सूर्यस्येव गभस्तिभिः ॥४७॥

अर्थ—महाराज ! उनके वंश में यदु आदि पांच राजर्षिशिरोमणि हुए, जिनके वंशजों से यह सारी पृथ्वी उसी प्रकार व्याप्त है, जैसे सूर्य की किरणों से वह व्याप्त होती है ।

यदोस्तु श्रृणु राजर्षेर्वंशं राजर्षिसत्कृतम् ।
यत्र नारायणो जज्ञे हरिर्वृष्णिकुलोद्वहः ॥४८॥

अर्थ—राजर्षि यदु का वंश समस्त राजर्षियों द्वारा सम्मानित है । तुम उसका वर्णन सुनो । उसी वंश में वृष्णिकुलभूषण श्रीकृष्ण के रूप में श्रीनारायण हरि का अवतार (प्रादुर्भाव) हुआ था ।

धन्यः प्रजावानायुस्मान् कीर्तिमांश्च भवेन्नरः ।
ययातेश्चरितं पुण्यं पठञ्छृण्वन् नराधिप ॥४९॥

**अर्थ**—नरेश्वर ! जो मनुष्य ययाति के इस पुण्यमय चरित्र को पढ़ता और सुनता है, वह धनसम्पन्न, सन्तानवान्, दीर्घायु तथा यशस्वी होता है।

इति हरिवंशे ययातिचरिते त्रिंशोऽध्यायः ॥३०॥

---

# १७. पूरुवंशानुचरितम्—शिबिवंशश्च

**जनमेजय उवाच—**

पूरोर्वंशमहं ब्रह्मञ्छ्रोतुमिच्छामि तत्त्वतः।
द्रुह्योश्चानोर्यदोश्चैव तुर्वसोश्च पृथक् पृथक् ॥१॥

**अर्थ—जनमेजय ने कहा—**ब्रह्मन् ! मैं पूरु, द्रुह्यु, अनु, यदु और तुर्वसु के वंश का पृथक्-पृथक् यथार्थ वर्णन सुनना चाहता हूं।

वृष्णिवंशप्रसङ्गेन स्वं वंशं पूर्वमेव तु।
विस्तरेणानुपूर्व्या च तद् भवान् वक्तुमर्हति ॥२॥

**अर्थ**—वृष्णिवंश के प्रसंग से इन सबका वर्णन मुझे सुनना है; परन्तु सबसे पहले मैं अपने ही वंश (पूरु-कुल) का क्रमशः विस्तारपूर्वक वर्णन सुनना चाहता हूं। अतः आप पहले उसी का वर्णन करें।

**वैशम्पायन उवाच—**

शृणु पूरोर्महाराज वंशमुत्तमपौरुषम्।
विस्तरेणानुपूर्व्या च यत्र जातोऽसि पार्थिव ॥३॥

**अर्थ—वैशम्पायन जी बोले—**महाराज ! उत्तम पराक्रम से सम्पन्न पूरुवंश का, जिसमें तुम्हारा जन्म हुआ है, मैं क्रमानुसार विस्तारपूर्वक वर्णन करता हूं। पृथ्वीनाथ ! तुम इसे सुनो।

हन्त ते कीर्तयिष्यामि पूरोर्वंशमनुत्तमम्।
द्रुह्योश्चानोर्यदोश्चैव तुर्वसोश्च नराधिप ॥५॥

**अर्थ**—नरेश्वर ! में बड़े हर्ष के साथ तुमसे परम उत्तम पूरुवंश का वर्णन करूंगा। फिर द्रुह्यु, अनु यदु तथा तुर्वसु के वंश का कीर्तन किया जायेगा।

पूरोः पुत्रो महावीर्यो राजाऽऽसीज्जनमेजयः।
प्रचिन्वांस्तु सुतस्तस्य यः प्राचीमजयद् दिशम् ॥५॥

अर्थ—पूरु के महापराक्रमी पुत्र राजा जनमेजय हुए। उनके पुत्र का नाम प्रचिन्वान् था, जिन्होंने पूर्वदिशा को जीता था।

प्रचिन्वतः प्रवीरोऽभून्मनस्युस्तस्य चात्मजः।
राजा चाभयदो नाम मनस्योरभवत् सुतः ॥६॥

अर्थ—प्रचिन्वान् के पुत्र प्रवीर और प्रवीर के मनस्यु हुए, मनस्यु के पुत्र राजा अभयद थे।

तथैवाभयदस्यासीत् सुधन्वा तु महीपतिः।
सुधन्वनो बहुगवः शम्यातिस्तस्य चात्मजः ॥७॥

अर्थ—अभयद के पुत्र का नाम सुधन्वा था, जो इस पृथ्वी का अधिपति हुआ। सुधन्वा के बहुगव और बहुगव के पुत्र शम्याति हुए।

शम्यातेस्तु रहस्याती रौद्राश्वस्तस्य चात्मजः।
रौद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः ॥८॥

अर्थ—शम्याति के रहस्याति और रहस्याति के पुत्र रौद्राश्व हुए, रौद्राश्व के घृताची अप्सरा के गर्भ से दस पुत्र हुए।

ऋचेयुः प्रथमस्तेषां कृकणेयुस्तथैव च।
कक्षेयुः स्थण्डिलेयुश्च सन्नतेयुस्तथैव च ॥९॥
दशार्णेयुर्जलेयुश्च स्थलेयुश्च महायशाः।
धनेयुश्च वनेयुश्च पुत्रिकाश्च दश स्त्रियः ॥१०॥

अर्थ—उनके नाम इस प्रकार हैं—ऋचेयु अपने सभी भाइयों में ज्येष्ठ थे। उनके बाद कृकणेयु, कक्षेयु, स्थण्डिलेयु, सन्नतेयु, दशार्णेयु, जलेयु, महायशस्वी स्थलेयु, धनेयु और वनेयु थे। इनके सिवा रौद्राश्व के दस कन्याएं भी थीं, जो पुत्रिका-धर्म के अनुसार ब्याही जानेवाली थीं।

रुद्रा शूद्रा च भद्रा च मलदा मलहा तथा।
खलदा चैव राजेन्द्र नलदा सुरसापि च।
तथा गोचपला तु स्त्रीरत्नकूटा च ता दश ॥११॥

अर्थ—राजेन्द्र! उन कन्याओं के नाम इस प्रकार हैं—रुद्रा, शूद्रा, भद्रा, मलदा, मलहा, खलदा, नलदा, सुरसा, गोचपला तथा स्त्रीरत्नकूटा—वे कुल मिलाकर दस थीं।

ऋषिर्जातोऽत्रिवंशे तु तासां भर्ता प्रभाकरः।
रुद्रायां जनयामास सुतं सोमं यशस्विनम् ॥१२॥

**अर्थ**—अत्रिकुल में उत्पन्न महर्षि प्रभाकर उन सबके पति हुए। उन्होंने रुद्रा के गर्भ से यशस्वी सोम को पुत्ररूप में उत्पन्न किया।

स्वर्भानुना हते सूर्यं पतमाने दिवो महीम्।
तमोऽभिभूते लोके च प्रभा येन प्रवर्तिता ॥१३॥

**अर्थ**—राहु से आहत होकर जब सूर्य आकाश से पृथ्वी पर गिरने लगे और समस्त संसार में अन्धकार छा गया, उस समय प्रभाकर ने ही अपनी प्रभा फैलायी।

स्वस्ति तेऽस्त्विति चोक्तो वै पतमानो दिवाकरः।
वचनात् तस्य विप्रर्षेर्न पपात दिवो महीम् ॥१४॥

**अर्थ**—महर्षि ने गिरते हुए सूर्य को 'तुम्हारा कल्याण हो' यह कहकर आशीर्वाद दिया। उन ब्रह्मर्षि के इस वचन से सूर्यदेव पृथ्वी पर नहीं गिरे।

अत्रिश्रेष्ठानि गोत्राणि यश्चकार महातपाः।
यज्ञेष्वत्रेर्धनं चैव सुरैर्यस्य प्रवर्तितम् ॥१५॥

**अर्थ**—महातपस्वी प्रभाकर ने सब गोत्रों में अत्रिगोत्र की ही श्रेष्ठता स्थापित की। अत्रि के यज्ञों में उन्हीं के प्रभाव से देवताओं ने धन प्रस्तुत किया था।

स तासु जनयामास पुत्रिकासु सनामकान्।
दश पुत्रान् महात्मा स तपस्युग्रे रतान् सदा ॥१६॥

**अर्थ**—महात्मा प्रभाकर ने रौद्राश्व की पुत्रिका-धर्म के अनुसार प्राप्त हुई कन्याओं के गर्भ से एक-से ही नामवाले दस पुत्रों को जन्म दिया, जो सदा उग्र तपस्या में तत्पर रहनेवाले थे।

ते तु गोत्रकरा राजन्नृषयो वेदपारगाः।
स्वस्त्यात्रेया इति ख्याताः किं त्वत्रिधनवर्जिताः ॥१७॥

**अर्थ**—राजन्! वे सब-के-सब वेदों के पारङ्गत विद्वान् तथा गोत्र-प्रवर्तक ऋषि हुए। स्वस्त्यात्रेय नाम से नकी ख्याति हुई, परन्तु वे अत्रिगोत्री पिता के धन से वञ्चित रहे (क्योंकि पुत्रिका-धर्म के अनुसार वे अपने नाना के पुत्र थे)।

कक्षेयोस्तनयाश्चासंस्त्रयः एव महारथाः।
सभानरश्चाक्षुषश्च परमन्युस्तथैव च ॥१८॥

**अर्थ**—कक्षेय के सभानर, चाक्षुष और परमन्यु—ये तीन पुत्र उत्पन्न हुए। तीनों ही महारथी थे।

सभानरस्य पुत्रस्तु विद्वान् कालानलो नृपः।
कालानलस्य धर्मज्ञः सृञ्जयो नाम वै सुतः ॥१९॥

**अर्थ**—सभानर का पुत्र विद्वान् राजा कालानल हुआ। कालानल का धर्मज्ञ पुत्र सृञ्जय नाम से विख्यात हुआ।

सृञ्जयस्याभवत् पुत्रो वीरो राजा पुरञ्जयः।
जनमेजयो महाराज पुरञ्जयसुतोऽभवत् ॥२०॥

**अर्थ** सृञ्जय के पुत्र वीर राजा पुरञ्जय हुए। महाराज ! पुरञ्जय का पुत्र जनमेजय हुआ।

जनमेजयस्य राजर्षेर्महाशालोऽभवत् सुतः।
देवेषु स परिज्ञातः प्रतिष्ठितयशा भुवि ॥२१॥

**अर्थ**—राजर्षि जनमेजय के पुत्र महाशाल हुए, जो देवताओं में भी विख्यात थे और इस पृथ्वी पर भी उनका यश फैला हुआ था।

महामना नाम सुतो महाशालस्य धार्मिकः।
जज्ञे वीरः सुरगणैः पूजितः सुमहायशाः ॥२२॥

**अर्थ** महाशाल के धार्मिक पुत्र का नाम महामना था। वे एक वीर पुत्र के रूप में उत्पन्न हुए थे। महायशस्वी महामना का देवता भी सम्मान करते थे।

महामनास्तु पुत्रौ द्वौ जनयामास भारत।
उशीनरं च धर्मज्ञं तितिक्षुं च महाबलम् ॥२३॥

**अर्थ**—भरतनन्दन ! महामना ने दो पुत्रों को जन्म दिया—धर्मज्ञ उशीनर और महाबली तितिक्षु।

उशीनरस्य पत्न्यस्तु पञ्चराजर्षिवंशजाः।
नृगा कृमी नवा दर्वा पञ्चमी च दृषद्वती ॥२४॥

**अर्थ**—उशीनर की पांच पत्नियां थीं, जो राजर्षियों के कुल में उत्पन्न हुई थीं। उनके नाम इस प्रकार हैं—नृगा, कृमी, नवा, दर्वा और पांचवीं दृषद्वती।

उशीनरस्य पुत्रास्तु पञ्च तासु कुलोद्वहाः।
तपसा वै सुमहता जाता वृद्धस्य भारत ॥२५॥

**अर्थ**—उनके गर्भ से उशीनर के पांच पुत्र हुए, जो अपने वंश की मर्यादा को ऊंचे उठानेवाले थे। भारत ! वे अपने वृद्ध पिता के महान् तप से उत्पन्न हुए थे।

नृगायास्तु नृगः पुत्रः कृम्यां कृमिरजायत।
नवायास्तु नवः पुत्रो दर्वायाः सुव्रतोऽभवत् ॥२६॥

अर्थ—नृगा के पुत्र नृग थे, कृमी के गर्भ से कृमि का जन्म हुआ था, नवा के पुत्र नव तथा दर्वा के सुव्रत हुए।

दृषद्वत्यास्तु संजज्ञे शिबिरौशीनरो नृपः।
शिबेस्तु शिबयस्तात यौधेयास्तु नृगस्य ह ॥२७॥

अर्थ—तात ! दृषद्वती के गर्भ से उशीनरकुमार राजा शिबि का जन्म हुआ। शिबि को शिब्रि देश का राज्य मिला और नृग को यौधेय प्रदेश का।

नवस्य नवराष्ट्रं तु कृमेस्तु कृमिला पुरी।
सुव्रतस्य तथाम्बष्ठा शिबिपुत्रान्निबोध मे ॥२८॥

अर्थ— नव को नवराष्ट्र तथा कृमि को कृमिलापुरी का राज्य प्राप्त हुआ। सुव्रत के अधिकार में अम्बष्ठ देश आया। अब शिबि के पुत्रों का वर्णन सुनो।

शिबेश्च पुत्राश्चत्वारो वीरास्त्रैलोक्यविश्रुताः।
वृषदर्भः सुवीरश्च मद्रकः कैकयस्तथा ॥२९॥

अर्थ—शिबि के चार वीर पुत्र हुए—वृषदर्भ, सुवीर, मद्रक तथा कैकय। ये चारों राजकुमार तीनों लोकों में विख्यात थे।

तेषां जनपदाः स्फीताः केकया मद्रकास्तथा।
वृषदर्भाः सुवीराश्च तितिक्षोस्तु प्रजाः श्रृणु ॥३०॥

अर्थ—इनके समृद्धिशाली जनपद भी इन्हीं के नाम से प्रसिद्ध होकर वृषदर्भ, सुवीर, मद्रक तथा केकय कहलाये। अब तितक्षु की सन्तति का वर्णन सुनो।

तैतिक्षवोऽभवद् राजा पूर्वस्यां दिशि भारत।
पषद्रथो महाबाहुस्तस्य फेनः सुतोऽभवत् ॥३१॥

अर्थ—भारत ! तितिक्षु के पुत्र महाबाहु राजा उषद्रथ हुए, जो पूर्व दिशा के अधिपति थे। इनके पुत्र का नाम फेन था।

फेनात् तु सुतपा जज्ञे सुतः सुतपसो बलिः।
जातो मानुषयोनौ तु स राजा काञ्चनेषुधिः ॥३२॥

अर्थ— फेन से सुतपा का जन्म हुआ। सुतपा के पुत्र बलि थे। दानवराज बलि ही मनुष्ययोनि में जन्म लेकर राजा बलि के नाम से विख्यात हुए। वे सोने का तरकस रखते थे।

महायोगी स तु बलिर्बभूव नृपतिः पुरा।
पुत्रानुत्पादयामास पञ्च वंशकरान् भुवि ॥३३॥

अर्थ—पूर्वकाल में राजा बलि महान् योगी थे। उन्होंने इस भूतल पर वंश की वृद्धि करनेवाले पांच पुत्र उत्पन्न किये।

अङ्गः प्रथमतो जज्ञे वङ्गः सुह्मस्तथैव च ।
पुण्ड्रः कलिङ्गश्च तथा बालेयं क्षत्रमुच्यते ॥३४॥

**अर्थ**—उनमें सबसे पहले अङ्ग की उत्पत्ति हुई। तत्पश्चात् क्रमशः वङ्ग, सुह्म, पुड्र तथा कलिङ्ग उत्पन्न हुए। ये सब लोग बालेय क्षत्रिय कहलाये हैं।

बालेया ब्राह्मणाश्चैव तस्य वंशकरा भुवि ।
बलेस्तु ब्रह्मणा दत्ता वराः प्रीतेन भारत ॥३५॥
महायोगित्वमायुश्च कल्पस्य परिमाणतः ।
संग्रामे वाप्यजेयत्वं धर्मे चैव प्रधानता ॥३६॥
त्रैलोक्यदर्शनं चैव प्राधान्यं प्रसवे तथा ।
बले चाप्रतिमत्वं वै धर्मतत्त्वार्थदर्शनम् ॥३७॥
चतुरो नियतान् वर्णांस्त्वं च स्थापयिता भुवि ।
इत्युक्तो विभुना राजा बलिः शान्तिं परां ययौ ॥३८॥

**अर्थ**—बलि के कुल में बालेय ब्राह्मण भी हुए, जो इस भूतल पर उनके वंश की वृद्धि करनेवाले थे। भरतनन्दन ! ब्रह्मा जी ने बलि पर प्रसन्न होकर उन्हें निम्नाङ्कित वर दिये थे—'तुम महायोगी होओगे, तुम्हारी आयु एक कल्प की होगी, तुम युद्ध में अजेय होओगे, धर्म में तुम्हारी प्रधानता होगी, तुम तीनों लोकों की देखभाल करोगे (अथवा तुम तीनों लोकों की सभी बातें प्रत्यक्ष की भांति देखोगे) तुम्हारी संतति श्रेष्ठ समझी जायेगी, बल में तुम्हारी समानता करनेवाला कोई न होगा, तुम धर्मतत्त्व के ज्ञाता होओगे तथा भूतल पर चारों वर्णों को नियन्त्रण में रखकर उन्हें मर्यादा के भीतर स्थापित करोगे।' भगवान् ब्रह्मा जी के ऐसा कहने पर राजा बलि को बड़ी शान्ति मिली।

तस्य ते तनयाः सर्वे क्षेत्रजा मुनिपुङ्गवात् ।
सम्भूता दीर्घतपसो सुदेष्णायां महौजसः ॥३९॥

**अर्थ**—उनके वे सभी पुत्र क्षेत्रज थे। मुनिवर दीर्घतपा द्वारा रानी सुदेष्णा के गर्भ से प्रकट हुए थे। उनका बल महान् था।

बलिस्तानभिषिच्येह पञ्च पुत्रानकल्मषान् ।
कृतार्थः सोऽपि योगात्मा योगमाश्रित्य स प्रभुः ॥४०॥
अधृष्यः सर्वभूतानां कालापेक्षी चरन्नपि ।
कालेन महता राजन् स्वं च स्थानमुपागमत् ॥४१॥

**अर्थ**—राजा बलि ने उन पांचों निष्पाप पुत्रों को विभिन्न राज्यों पर अभिषिक्त करके अपने को कृतार्थ माना। उसका मन सदा योग में लगा रहता

था। वे योग का आश्रय ले समस्त प्राणियों के लिए अजेय हो गये थे। काल की प्रतीक्षा करते हुए सर्वत्र विचरते थे। राजन्! दीर्घकाल के पश्चात् उन्हें अपना स्थान (सुतललोक) उपलब्ध हुआ।

तेषां जनपदाः पञ्च अङ्गा वङ्गाः ससुह्मकाः।
कलिङ्गाः पुण्ड्रकाश्चैव प्रजास्त्वङ्गस्य मे शृणु ॥४२॥

**अर्थ**—उनके पांच पुत्रों के अधिकार में जो जनपद थे, उनके नाम इस प्रकार हैं—अङ्ग, वङ्ग, सुह्म, कलिङ्ग और पुण्ड्रक। अब तुम मुझसे अङ्ग की सन्तानों का वर्णन सुनो।

अङ्गपुत्रो महानासीद् राजेन्द्रो दधिवाहनः।
दधिवाहनपुत्रस्तु राजा दिवोरथोऽभवत् ॥४३॥

**अर्थ**—अङ्ग के पुत्र महान् राजाधिराज दधिवाहन थे और दधिवाहन के पुत्र राजा दिविरथ हुए।

पुत्रो दिविरथस्यासीच्छक्रतुल्यपराक्रमः।
विद्वान् धर्मरथो नाम तस्य चित्ररथः सुतः ॥४४॥

**अर्थ**—दिविरथ के पुत्र इन्द्रतुल्य पराक्रमी और विद्वान् थे। उनका नाम धर्मरथ था। धर्मरथ के पुत्र चित्ररथ हुए।

तेन चित्ररथेनाम तदा विष्णुपदे गिरौ।
यजता सह शक्रेण सोमः पीतो महात्मना ॥४५॥

**अर्थ**—राजा चित्ररथ जब विष्णुपद पर्वत पर यज्ञ करते थे, उस समय उन महामना नरेश ने इन्द्र के साथ बैठकर सोमपान किया था।

अथ चित्ररथस्यापि पुत्रो दशरथोऽभवत्।
लोमपाद इति ख्यातो यस्य शान्ता सुताभवत् ॥४६॥

**अर्थ**—चित्ररथ के पुत्र दशरथ हुए, जिनका दूसरा नाम लोमपाद था तथा शान्ता जिनकी पुत्री थी।

तस्य दाशरथिर्वीरश्चतुरङ्गो महायशाः।
ऋष्यशृङ्गप्रसादेन जज्ञे कुलविवर्धनः ॥४७॥

**अर्थ**—उन लोमपाद या दशरथ के पुत्र महायशस्वी वीर चतुरङ्ग हुए, जो ऋष्यशृङ्ग मुनि की कृपा से उत्पन्न हुए। चतुरङ्ग अपने कुल की वृद्धि करने वाले थे।

चतुरङ्गस्य पुत्रस्तु पृथुलाक्ष इति स्मृतः।
पृथुलाक्षसुतो राजा चम्पो नाम महायशाः। ४८॥

अर्थ—चतुरङ्ग के पुत्र पृथुलाक्ष कहे गये हैं। पृथुलाक्ष के महायशस्वी राजा चम्प हुए।

चम्पस्य तु पुरी चम्पा या मालिन्यभवत् पुरा।
पूर्णभद्रप्रसादेन हर्यङ्गोऽस्य सुतोऽभवत् ॥४६॥

अर्थ—चम्प की राजधानी चम्पा थी, जो पहले मालिनी नाम से प्रसिद्ध थी। चम्प के पुत्र हर्यङ्ग हुए, जो पूर्णभद्र नामक मुनि की कृपा से उत्पन्न हुए थे।

ततो वैभाण्डकिस्तस्य वारणं शक्रवारणम्।
अवतारयामास महीं मन्त्रैर्वाहनमुत्तमम् ॥५०॥

अर्थ—विभाण्डक पुत्र ऋष्यशृङ्ग ने हर्यङ्ग की सवारी के उत्तम वाहन गजराज ऐरावत को मन्त्रों द्वारा स्वर्ग पर उतारा था।

हर्यङ्गस्य तु दायादो राजा भद्ररथः स्मृतः।
पुत्रो भद्ररथस्यासीद् बृहत्कर्मा प्रजेश्वरः ॥५१॥

अर्थ—हर्यङ्ग के पुत्र राजा भद्ररथ कहे गये हैं। भद्ररथ के पुत्र राजा बृहत्कर्मा थे।

बृहद्दर्भः सुतस्तस्य तस्माज्जज्ञे बृहन्मनाः।
बृहन्मनास्तु राजेन्द्र जनयामास वै सुतम् ॥५२॥
नाम्ना जयद्रथं नाम यस्माद् दृढरथो नृपः।
आसीद् दृढरथस्यापि विश्वजिज्जनमेजय ॥५३॥

अर्थ—बृहत्कर्मा के पुत्र बृहद्दर्भ थे, उनसे बृहन्मना का जन्म हुआ। राजेन्द्र! बृहन्मना ने जयद्रथ नामक पुत्र को जन्म दिया, जिससे राजा दृढरथ की उत्पत्ति हुई। जनमेजय! दृढरथ के पुत्र विश्वजित् हुए।

दायादस्तस्य कर्णस्तु विकर्णस्तस्य चात्मजः।
तस्य पुत्रशतं त्वासीदङ्गानां कुलवर्धनम् ॥५४॥

अर्थ—विश्वजित् के पुत्र कर्ण तथा कर्ण के पुत्र विकर्ण हुए। विकर्ण के सौ पुत्र थे, जो अङ्गवंश की वृद्धि करनेवाले थे।

बृहद्दर्भसुतो यस्तु राजा नाम्ना बृहन्मनाः।
तस्य पत्नीद्वयं चासीच्चैद्यस्यैते सुते शुभे।
यशोदेवी च सत्या च ताभ्यां वंशस्तु भिद्यते ॥५५॥

अर्थ—बृहद्दर्भ का जो बृहन्मना नाम से प्रसिद्ध पुत्र था, उसकी दो पत्नियां थीं। ये दोनों ही चेदिराज की सुन्दरी कन्याएं थीं एक का नाम यशो-

देवी था और दूसरी का सत्या। उन दोनों के द्वारा उस वंश में भेद होगया अर्थात् दोनों की पृथक्-पृथक् वंश-परम्परा चली।

जयद्रथस्तु राजेन्द्र यशोदेव्यां व्यजायत।
ब्रह्मक्षत्रोत्तरः सत्यां विजयो नाम विश्रुतः ॥५६॥

**अर्थ**—राजेन्द्र! बृहन्मना का जो जयद्रथ नामक पुत्र था, वह यशोदेवी के गर्भ से उत्पन्न हुआ था तथा उनका दूसरा पुत्र, जो विजय नाम से विख्यात था, सत्या के पेट से पैदा हुआ था। वह शान्ति आदि गुणों में ब्राह्मणों से और शौर्य आदि गुणों में क्षत्रियों से भी उत्कृष्ट था।

विजयस्य धृतिः पुत्रस्तस्य पुत्रो धृतव्रतः।
धृतव्रतस्य पुत्रस्तु सत्यकर्मा महायशाः ॥५७॥

**अर्थ**—विजय का पुत्र धृति और धृति का पुत्र धृतव्रत था। धृतव्रत के पुत्र महायशस्वी सत्यकर्मा हुए।

सत्यकर्मसुतश्चापि सूतस्त्वधिरथस्तु वै।
यः कर्णं प्रतिजग्राह ततः कर्णस्तु सूतजः ॥५८॥

**अर्थ**—सत्यकर्मा का पुत्र अधिरथ नामक सूत हुआ, जिसने कर्ण को गोद लिया था। इसीलिए कर्ण को सूतपुत्र कहा जाता है।

एतत् ते कथितं सर्वं कर्णं प्रति महाबलम्।
कर्णस्य वृषसेनस्तु वृषस्तस्यात्मजः स्मृतः ॥५९॥

**अर्थ**—राजन्! यह सब मैंने तुम्हें महाबली कर्ण के विषय में बताया है। कर्ण का पुत्र वृषसेन हुआ और वृषसेन का पुत्र वृष कहा गया है।

एतेऽङ्गवंशजाः सर्वे राजानः कीर्तिता मया।
सत्यव्रता महात्मानः प्रजावन्तो महारथाः ॥६०॥

**अर्थ**—ये सब अङ्गवंशी राजा मेरे द्वारा बताए गए हैं, जो सत्यव्रती, महात्मा, पुत्रवान् तथा महारथी थे।

ऋचेयोस्तु महाराज रौद्राश्वतनयस्य ह।
शृणु वंशमनुप्रोक्तं यत्र जातोऽसि पार्थिव ॥६१॥

**अर्थ**—महाराज! पृथ्वीनाथ! अब मैं रौद्राश्वकुमार ऋचेयु के वंश का वर्णन करूंगा, जिसमें तुम्हारा जन्म हुआ है। तुम इसे सुनो।

इति हरिवंशे कुक्षेयुवंशानुकीर्तनं नाम एकत्रिंशोऽध्यायः ॥३१॥

---

# १८. पौरववंशानुचरितम्

**वैशम्पायन उवाच—**

अनाधृष्यस्तु राजर्षिऋचेयुश्चैकराट् स्मृतः।
ऋचेयोर्ज्वलना नाम भार्या वै तक्षकात्मजा ॥१॥

**अर्थ—वैशम्पायन जी कहते हैं**—जनमेजय ! राजर्षि ऋचेयु एकच्छत्र सम्राट् माने गये हैं। वे दूसरों के लिए अजेय थे। ऋचेयु की पत्नी का नाम ज्वलना था, जो तक्षक नाग की पुत्री थी।

तस्यां स देव्यां राजर्षिर्मतिनारो महीपतिः।
मतिनारसुताश्चासंस्त्रयः परमधार्मिकाः ॥२॥
तंसुराद्यः प्रतिरथः सुबाहुश्चैव धार्मिकः।
गौरी कन्या च विख्याता मान्धातृजननी शुभा ॥३॥

**अर्थ**—महारानी ज्वलना के गर्भ से पृथ्वीपति राजर्षि मतिनार का जन्म हुआ। मतिनार के तीन परम धर्मात्मा पुत्र हुए—प्रथम तंसु, दूसरे प्रतिरथ और तीसरे धर्मात्मा सुबाहु। मतिनार के एक कन्या भी हुई थी, जो गौरी नाम से विख्यात थी। शुभलक्षणा गौरी ही राजा मान्धाता की जननी हुई।

सर्वे वेदविदस्तत्र ब्रह्मण्याः सत्यवादिनः।
सर्वे कृतास्त्रा बलिनः सर्वे युद्धविशारदाः ॥४॥

**अर्थ**—मतिनार के सभी पुत्र वेदवेत्ता, ब्राह्मणभक्त, सत्यवादी, अस्त्रविद्या के विद्वान्, बलवान् तथा युद्धकुशल थे।

पुत्रः प्रतिरथस्यासीत् कण्वः समभवन्नृपः।
मेधातिथिः सुतस्तस्य यस्मात्काण्वायना द्विजाः ॥५॥

**अर्थ**—मतिनार के दूसरे पुत्र प्रतिरथ के बेटे का नाम कण्व था। कण्व राजा थे। कण्व के पुत्र मेधातिथि हुए, जिनसे काण्वायन ब्राह्मणों की परम्परा प्रचलित थी।

ईलिनी भूप यस्यासीत् कन्या वै जनमेजय।
ब्रह्मवादिन्यधि स्त्रीं च तंसुस्तामभ्यगच्छत ॥६॥

**अर्थ**—राजा जनमेजय ! जिनकी कन्या ईलिनी नाम से प्रसिद्ध हुई थी, वे ईलिन नामक नरेश ब्रह्मवादी ब्राह्मण-समुदाय में उत्कृष्ट माने जाते थे। उनकी उस ईलिनी नामक कन्या को तंसु ने पत्नीरूप में प्राप्त किया।

तंसोः सुरोधो राजर्षिर्धर्मनेत्रो महायशाः ।
ब्रह्मवादी पराक्रान्तस्तस्य भार्योपदानवी ॥७॥
उपदानवी सुताँल्लेभे चतुरस्त्वैलिकात्मजान् ।
दुष्यन्तमथ सुष्मन्तं प्रवीरमनघं तथा ॥८॥

**अर्थ**—तंसु के महायशस्वी राजर्षि सुरोध हुए, जो धर्म के प्रवर्तक होने से धर्मनेत्र कहलाये थे। वे ब्रह्मवादी और पराक्रमी थे। उनकी पत्नी उपदानवी थी। उपदानवी ने चार पुत्र प्राप्त किये, जो दुष्यन्त, सुष्मन्त, प्रवीर और अनघ के नाम से विख्यात थे। ये चारों ईलिनीकुमार सुरोध या धर्मनेत्र के पुत्र थे।

दुष्यन्तस्य तु दायादो भरतो नाम वीर्यवान् ।
स सर्वदमनो नाम नागायुतबलो महान् ॥९॥

**अर्थ**—दुष्यन्त के पुत्र का नाम भरत था। वे बड़े पराक्रमी थे। सबका दमन करने के कारण उनका दूसरा नाम सर्वदमन भी था। महान् वीर भरत में दस हजार हाथियों का बल था।

चक्रवर्ती सुतो जज्ञे दुष्यन्तस्य महात्मनः ।
शकुन्तलायां भरतो यस्य नाम्ना स्थ भारताः ॥१०॥

**अर्थ**—महात्मा दुष्यन्त के वीर्य और शकुन्तला के गर्भ से चक्रवती भरत पुत्ररूप में उत्पन्न हुए थे, जिनके नाम पर तुम लोग भारत कहलाते हो।

दुष्यन्तं प्रति राजानं वागुवाचाशरीरिणी ।
माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ॥११॥
भरस्व पुत्रं दुष्यन्त मावमंस्थाः शकुन्तलाम् ।
रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ॥१२॥
एवं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ।

**अर्थ**—(कहते हैं—दुष्यन्त ने तपोवन में जाकर शकुन्तला के साथ गान्धर्व-विवाह किया था और अपनी राजधानी को लौटकर उसके विषय में कुछ बताया नहीं था। जब शकुन्तला भरत को लेकर दुष्यन्त के यहां गयी, तब वे उसे पहचानने में भूल करने लगे। उस समय) आकाशवाणी ने राजा दुष्यन्त को सम्बोधित करके कहा—'दुष्यन्त ! माता तो केवल चमड़े की धौंकनी के समान है, पुत्र पर अधिकार तो पिता का ही है। पुत्र जिसके द्वारा जन्म ग्रहण करता है, उसी का स्वरूप होता है। तुम इस पुत्र का पालन-पोषण करो, शकुन्तला का अपमान मत करो। नरदेव ! अपने ही वीर्य से उत्पन्न हुआ पुत्र अपने

पिता को यमलोक से (निकालकर स्वर्गलोक को) ले जाता है। 'इस पुत्र के आधान करनेवाले तुम्हीं हो'—शकुन्तला ने यह बात ठीक ही कही है।'

भरतस्य विनष्टेषु तनयेषु महीपतेः ॥१३॥
मातॄणां तात कोपेन मया ते कथितं पुरा।

अर्थ—राजा भरत के कई पुत्र होकर मर गये। तात ! माताओं के क्रोध से ऐसा हुआ था। यह बात मैं तुम्हें पहले (आदि पर्व में) बता चुका हूं।

बृहस्पतेराङ्गिरसः पुत्रो राजन् महामुनिः।
संक्रामितो भरद्वाजो मरुद्भिः क्रतुभिर्विभुः ॥१४॥

अर्थ—राजन् ! भरत के यज्ञ में आये हुये देवताओं ने भरत के लिए अङ्गिरानन्दन बृहस्पति जी के पुत्र महामुनि भरद्वाज को ही पुत्र बनाकर दे दिया।

अत्रैवोदाहरन्तीमं भरद्वाजस्य धीमतः।
धर्मसंक्रमणं चापि मरुद्भिर्भरताय वै ॥१५॥
अयाजयद् भरद्वाजो मरुद्भिः क्रतुभिर्हि तम्।
पूर्वं तु वितथे तस्य कृते वै पुत्रजन्मनि ॥१६॥
ततोऽथ वितथो नाम भरद्वाजसुतोऽभवत्।

अर्थ—इसी प्रसंग में बुद्धिमान् भरद्वाज के धर्म-संक्रमण की यह बात कही जाती है। मरुद्गणों ने भरत को पुत्ररूप में जब भरद्वाज को ही अर्पित कर दिया, तब भरद्वाज ने भरत से देवताओं सहित यज्ञ का अनुष्ठान करवाया। इसके पहले भरत के पुत्र-जन्म का सारा प्रयास वितथ (व्यर्थ) हो चुका था। भरद्वाज के प्रयत्न से जो पुत्र उत्पन्न हुआ, उसका नाम वितथ हुआ।

ततोऽथ वितथे जाते भरतस्तु दिवं ययौ ॥१७॥
वितथं चाभिषिच्याथ भरद्वाजो वनं ययौ।

अर्थ—वितथ का जन्म हो जाने पर भरत स्वर्गवासी हो गये। तत्पश्चात् वितथ का राज्याभिषेक करके भरद्वाज जी भी वन में चले गये।

स राजा वितथः पुत्राञ्जनयामास पञ्च वै ॥१८॥
सुहोत्रं च सुहोतारं गयं गर्गं तथैव च।
कपिलं च महात्मानं सुहोत्रस्य सुतद्वयम् ॥१९॥
काशिकश्च महासत्त्वस्तथा गृत्समतिर्नृपः।
तथा गृत्समतेः पुत्रा ब्राह्मणाः क्षत्रिया विशः ॥२०॥
काशिकस्य तु काशेयः पुत्रो दीर्घतपास्तथा।

**अर्थ**—राजा वितथ ने पांच पुत्र उत्पन्न किये—सुहोत्र, सुहोता, गय, गर्ग तथा महात्मा कपिल। सुहोत्र के भी दो पुत्र हुये – महान् शक्तिशाली काशिक तथा राजा गृत्समति। गृत्समति के पुत्र ब्राह्मण, क्षत्रिय और वैश्य तीनों वर्णों के लोग हुए। काशिक के दो पुत्र थे—काशेय और दीर्घतपा।

आजमीढोऽपरो वंशः श्रूयतां पुरुषर्षभ ॥२१॥
सुहोत्रस्य बृहत् पुत्रो बृहतस्तनयास्त्रयः।
अजमीढो द्विमीढश्च पुरुमीढश्च वीर्यवान् ॥२२॥

**अर्थ**—पुरुषप्रवर! अब आजमीढ नामक दूसरे वंश का वर्णन सुनो—पूर्वोक्त राजा सुहोत्र के एक तीसरा पुत्र और था बृहत्। बृहत् के तीन पुत्र हुए—अजमीढ, द्विमीढ और पराक्रमी पुरुमीढ।

अजमीढस्य पत्न्यस्तु तिस्रो वै यशसान्विताः।
नीलिनी केशिनी चैव धूमिनी च वराङ्गना ॥२३॥

**अर्थ**—अजमीढ की तीन स्त्रियां थीं। तीनों ही बड़ी यशस्विनी थीं। उनके नाम थे—नीलिनी, केशिनी और स्त्रियों में श्रेष्ठ धूमिनी।

अजमीढस्य नीलिन्यां सुशान्तिरुदपद्यत।
पुरुजातिः सुशान्तेस्तु वाह्याश्वः पुरुजातितः ॥२४॥
वाह्याश्वतनयाः पञ्च बभूवुरमरोपमा ॥२५॥

**अर्थ**—अजमीढ के नीलिनी के गर्भ से सुशान्ति नामक पुत्र हुआ। सुशान्ति से पुरुजाति और पुरुजात्ति से वाह्याश्व का जन्म हुआ। वाह्याश्व के पांच देवोपम पुत्र हुए।

मुद्गलः सृञ्जयश्चैव राजा बृहदिषुः स्मृतः।
यवीनरश्च विक्रान्तः क्रुमिलाश्वश्च पञ्चमः ॥२६।

**अर्थ**—उनके नाम इस प्रकार हैं—मुद्गल, सृञ्जय, राजा बृहदिषु, पराक्रमी यवीनर तथा पांचवें क्रुमिलाश्व।

पञ्चैते रक्षणायालं देशानामिति विश्रुताः।
पञ्चानां विद्धि पञ्चालान् स्फीतैर्जनपदैर्वृतान् ॥२७॥

**अर्थ**—ये पांचों अपने अधिकार में आये हुये देशों की रक्षा के लिए अलं (समर्थ) थे, इसलिए समृद्धिशाली जनपदों से युक्त उन देशों को पञ्चाल समझो।

अलं संरक्षणे तेषां पञ्चाला इति विश्रुताः।
मुद्गलस्य तु दायादो मौद्गल्यः सुमहायशाः ॥२८॥

सर्वं एते महात्मानः क्षत्रोपेता द्विजातयः।
एते ह्यङ्गिरसः पक्षं संश्रिताः कण्वमौद्गलाः ॥२९॥

अर्थ—उन देशों की रक्षा के लिए अलं होने से ये पांचों वीर पञ्चाल नाम से विख्यात हुए। मुद्गल के पुत्र महायशस्वी मौद्गल्य थे। ये सब-के-सब महात्मा क्षात्रधर्म से युक्त ब्राह्मण थे। ये अङ्गिरा के पक्ष का आश्रय लेकर कण्वमौद्गल कहलाये।

मौद्गलस्य सुतो ज्येष्ठो ब्रह्मर्षिः सुमहायशाः।
इन्द्रसेनो यतो गर्भं वध्र्यश्वं प्रत्यपद्यत ॥३०॥

अर्थ—मौद्गल के ज्येष्ठ पुत्र महायशस्वी ब्रह्मर्षि इन्द्रसेन हुए, जिनसे वध्र्यश्व का जन्म हुआ।

वध्र्यश्वान्मिथुनं जज्ञे मेनकायामिति श्रुतिः।
दिवोदासश्च राजर्षिरहल्या च यशस्विनी ॥३१॥

अर्थ—वध्र्यश्व से मेनका के गर्भ से एक पुत्र और एक कन्या का जन्म हुआ, ऐसी प्रसिद्धि है। पुत्र का नाम दिवोदास था, जो राजर्षि एवं ब्रह्मर्षि थे। कन्या यशस्विनी अहल्या थी।

शरद्वतस्तु दायादमहल्या समसूयत।
शतानन्दमृषिश्रेष्ठं तस्यापि सुमहायशाः ॥३२॥
पुत्रः सत्यधृतिर्नाम धनुर्वेदस्य पारगः।

अर्थ—अहल्या महर्षि शरद्वान् (गौतम) की पत्नी थी। उसने गौतम के पुत्र मुनिश्रेष्ठ शतानन्द को जन्म दिया। शतानन्द के भी एक महायशस्वी पुत्र उत्पन्न हुआ, जिसका नाम सत्यधृति था। (ये सत्यधृति भी अपने पितामह के समान शरद्वान् कहलाते थे।) सत्यधृति धनुर्वेद के पारङ्गत विद्वान् थे।

तस्य सत्यधृते रेतो दृष्ट्वाप्सरसमग्रतः ॥३३॥
अवस्कन्नं शरस्तम्बे मिथुनं समपद्यत।
कृपया तच्च जग्राह शन्तनुर्मृगयां गतः ॥३४॥

अर्थ—एक दिन अपने सामने एक अप्सरा को उपस्थित देख सत्यधृति (शरद्वान्) का वीर्य स्खलित होकर सरकंडों के समूह पर गिर पड़ा। उससे एक बालक और बालिका जुड़वीं संतानें उत्पन्न हुईं। उस समय राजा शन्तनु शिकार खेलने के लिए वन में गये हुये थे। उन्होंने कृपापूर्वक उन दोनों बालकों को ले लिया।

कृपः स्मृतः स वै तस्माद् गौतमी च कृपी तथा ।
एते शारद्वताः प्रोक्ता एते गौतमाः स्मृताः ॥३५॥

**अर्थ**—कृपापूर्वक ग्रहण करने के कारण बालक का नाम कृप और उस गौतम–बालिका का नाम कृपी हुआ । ये शतानन्द, सत्यधृति और कृप शारद्वत कहे गये हैं तथा ये गौतम भी कहलाते हैं ।

अत ऊर्ध्वं प्रवक्ष्यामि दिवोदासस्य संततिम् ।
दिवोदासस्य दायादो ब्रह्मर्षिर्मित्रयुर्नृप ॥३६॥
मैत्रायणस्ततः सोमो मैत्रेयास्तु ततः स्मृताः ।
एते हि संश्रिताः पक्षं क्षत्रोपेतास्तु भार्गवाः ॥३७॥

**अर्थ**— नरेश्वर ! अब मैं दिवोदास की सन्तति का वर्णन करूंगा । दिवोदास के पुत्र ब्रह्मर्षि मित्रयु हुए । मित्रयु से मैत्रायण का जन्म हुआ । मैत्रायण से सोम हुए । सोम के वंशज मैत्रेय कहे गये हैं । ये भार्गव-पक्ष का आश्रय लेकर क्षत्रोपेत भार्गव कहलाये ।

आसीत् पञ्चजनः पुत्रः सृञ्जयस्य महात्मनः ।
सुतः पञ्चजनस्यापि सोमदत्तो महीपतिः ॥३८॥

**अर्थ**—महात्मा सृञ्जय के पञ्चजन नामक पुत्र हुआ और पञ्चजन के पुत्र पृथ्वीपति सोमदत्त हुए ।

सोमदत्तस्य दायादः सहदेवो महायशाः ।
सहदेवसुतश्चापि सोमको नाम पार्थिवः ॥३९॥

**अर्थ**—सोमदत्त के पुत्र महायशस्वी सहदेव थे और सहदेव के पुत्र राजा सोमक हुए ।

अजमीढात् पुनर्जातः क्षीणवंशे तु सोमकः ।
सोमकस्य सुतो जन्तुर्यस्य पुत्रशतं बभौ ॥४०॥

**अर्थ**—अजमीढवंशी सहदेव से सोम का जन्म उस अवस्था में हुआ जब कि उनकी वंश--परम्परा क्षीण हो चली थी । सोमक के पुत्र का नाम जन्तु था । जिसके स्थान पर सोमक के सौ पुत्र होगये ।

तेषां यवीयान् पृषतो द्रुपदस्य पिता प्रभुः ।
धृष्टद्युम्नस्तु द्रुपदाद् धृष्टकेतुश्च तत्सुतः ॥४१॥
अजमीढाः स्मृता ह्येते महात्मानस्तु सोमकाः ।
पुत्राणामजमीढस्य सोमकत्वं महात्मनः ॥४२॥

अर्थ—उनमें सबसे छोटे थे पृषत, जो राजा द्रुपद के प्रभावशाली पिता थे। द्रुपद से धृष्टद्युम्न और धृष्टद्युम्न से धृष्टकेतु का जन्म हुआ। ये महामनस्वी क्षत्रिय अजमीढ और सोमक कहे गये हैं। महामना अजमीढ के सन्तानों की ही सोमक संज्ञा हुई।

महिषी त्वजमीढस्य धूमिनी पुत्रगृद्धिनी।
तृतीया तव पूर्वेषां जननी पृथिवीपते ॥४३॥

अर्थ—राजा अजमीढ की जो धूमिनी नामवाली तीसरी रानी थीं, उनके मन में पुत्र की बड़ी लालसा थी। पृथ्वीनाथ! वे ही तुम्हारे पूर्वजों की जननी हुईं।

सा तु पुत्रार्थिनी देवी व्रतचर्यासमन्विता।
ततो वर्षायुतं तप्त्वा तपः परमदुश्चरम् ॥४४॥
हुत्वाग्निं विधिवत् सा तु पवित्रमितभोजना।
अग्निहोत्रकुशेष्वेव सुष्वाप जनमेजय ॥४५॥

अर्थ–जनमेजय! पुत्र की अभिलाषा रखनेवाली धूमिनी देवी व्रत का पालन करने लगीं। वे दस हजार वर्षों तक अत्यन्त दुष्कर तपस्या करती हुई विधिपूर्वक अग्नि में आहुति देतीं, पवित्रतापूर्वक परिमित भोजन करतीं और अग्निहोत्र के कुशों पर ही सोतीं।

धूमिन्या स तया देव्या त्वजमीढः समेयिवान्।
ऋक्षं संजनयामास धूमवर्णं सुदर्शनम् ॥४६॥

अर्थ—तदनन्तर राजा अजमीढ ने देवी धूमिनी के साथ समागम किया। इससे उन्होंने ऋक्ष नामक पुत्र को जन्म दिया। ऋक्ष धूम्र के समान वर्णवाले एवं सुन्दर दर्शनीय पुरुष थे।

ऋक्षात् संवरणो जज्ञे कुरुः संवरणात् तथा।
यः प्रयागादतिक्रम्य कुरुक्षेत्रं चकार ह ॥४७॥

अर्थ—ऋक्ष से संवरण और संवरण से कुरु उत्पन्न हुए, जिन्होंने प्रयाग से जाकर कुरुक्षेत्र की स्थापना की।

तद्वै तत्स महाभागो वर्षाणि सुबहून्यथ।
तप्यमाने तदा शक्रो यत्रास्य वरदो बभौ ॥४८॥

अर्थ—महाभाग कुरु ने उस क्षेत्र में बहुत वर्षों तक तप किया। उनके तप करते समय वरदायक भगवान् इन्द्र ने वहां जाकर उन्हें वर प्रदान किया।

पुण्यं च रमणीयं च पुण्यकृद्भिर्निषेवितम्।
तस्यान्ववायः सुमहांस्तस्य नाम्ना स्थ कौरवाः ॥४९॥

**अर्थ**—वह पवित्र एवं रमणीय क्षेत्र पुण्यात्माओं द्वारा सेवित है। कुरु का वंश बहुत बड़ा है। तुम लोग कुरु के ही नाम से कौरव कहलाते हो।

कुरोश्च पुत्राश्चत्वारः सुधन्वा सुधनुस्तथा।
परीक्षिच्च महाबाहुः प्रवरश्चारिमेजयः ॥५०॥

**अर्थ**—कुरु के चार पुत्र हुए—सुधन्वा, सुधनु, महाबाहु परीक्षित् और श्रेष्ठ वीर अरिमेजय।

सुधन्वनस्तु दायादः सुहोत्रो मतिमांस्ततः।
च्यवनस्तस्य पुत्रस्तु राजा धर्मार्थकोविदः ॥५१॥

**अर्थ**—सुधन्वा के पुत्र सुहोत्र हुए। सुहोत्र के मतिमान् तथा मतिमान् के पुत्र राजा च्यवन हुए, जो धर्म और अर्थ के ज्ञाता थे।

च्यवनात् कृतयज्ञस्तु इष्ट्वा यज्ञैः स धर्मवित्।
विश्रुतं जनयामास पुत्रमिन्द्रसमं नृपः ॥५२॥

**अर्थ**—च्यवन से कृतयज्ञ हुए। उन धर्मज्ञ नरेश ने यज्ञ करके इन्द्र के समान सुविख्यात पराक्रमी पुत्र को जन्म दिया।

चैद्योपरिचरं वीरं वसुं नामान्तरिक्षगम्।
चैद्योपरिचराज्जज्ञे गिरिका सप्त मानवान् ॥५३॥

**अर्थ**—उसका नाम था उपरिचर वसु। वे वसु चेदि देश के निवासी थे और आकाशमार्ग से चलते थे। चेदिदेशीय उपरिचर वसु से उनकी पत्नी गिरिका ने सात मनुष्यों को उत्पन्न किया।

महारथो मगधराड् विश्रुतो यो बृहद्रथः।
प्रत्यग्रहः कुशश्चैव यमाहुर्मणिवाहनम् ॥५४॥
मारुतश्च यदुश्चैव मत्स्यः काली च सत्तमः।

**अर्थ**—उनमें प्रथम सन्तान थे सुविख्यात महारथी राजा बृहद्रथ, जो मगध देश के अधिपति थे। दूसरे पुत्र का नाम प्रत्यग्रह था। तीसरे राजा कुश थे, जिन्हें मणिवाहन भी कहते हैं। चौथे मारुत, पांचवें यदु और छठे श्रेष्ठ-तम पुरुष मत्स्य थे। सातवीं सन्तान कन्या थी, जो काली (या सत्यवती) कहलायी।

बृहद्रथस्य दायदः कुशाग्रो नाम विश्रुतः ॥५५॥
कुशाग्रस्यात्मजो विद्वान् वृषभो नाम वीर्यवान्।

**अर्थ**—बृहद्रथ का पुत्र कुशाग्र नाम से विख्यात हुआ। कुशाग्र के पुत्र वृषभ थे, जो विद्वान् और बलवान् थे।

वृषभस्य तु दायादः पुष्पवान्नाम धार्मिकः ॥५६॥
दायादस्तस्य विक्रान्तो राजा सत्यहितः स्मृतः ॥५७॥

अर्थ—वृषभ का पुत्र धर्मात्मा पुष्पवान् था। उसके पुत्र पराक्रमी राजा सत्यहित हुए।

तस्य पुत्रोऽथ धर्मात्मा नाम्ना ऊर्जस्तु जज्ञिवान्।
ऊर्जस्य सम्भवः पुत्रो यस्य जज्ञे स वीर्यवान् ॥५८॥

अर्थ—सत्यहित के धर्मात्मा ऊर्ज नामक पुत्र उत्पन्न हुआ। ऊर्ज के पुत्र का नाम सम्भव था (जिसे बृहद्रथ भी कहते हैं)। इसी से पराक्रमी राजा जरासंध की उत्पत्ति हुई थी।

शकले द्वे स वै जातो जरया संधितः स तु।
जरया संधितो यस्माज्जरासंधस्तत स्मृतः ॥५९॥

अर्थ—वह आधे-आधे शरीर के दो टुकड़ों के रूप में (दो माताओं के गर्भ से) उत्पन्न हुआ था। इन दोनों टुकड़ों को जरा नामवाली राक्षसी ने जोड़ दिया। जरा से संधित (जोड़ा गया) होने से उसका नाम जरासंध हुआ।

सर्वक्षत्रस्य जेतासौ जरासंधो महाबलः।
जरासंधस्य पुत्रौ वै सहदेवः प्रतापवान् ॥६०॥

अर्थ—महाबली जरासंध ने सम्पूर्ण क्षत्रिय-समुदाय को जीत लिया था। उसका पुत्र प्रतापी सहदेव था।

सहदेवात्मजः श्रीमानुदायुः स महायशाः।
उदायुर्जनयामास पुत्रं परमधार्मिकम् ॥६१॥
श्रुतधर्मेति नामानं मगधान् योऽवसद् विभुः।

अर्थ—सहदेव के कान्तिमान् पुत्र महायशस्वी उदायु हुए। उदायु ने श्रुत-धर्मा नामक परम धर्मात्मा पुत्र को जन्म दिया, जो वैभव-सम्पन्न होकर मगध देश में निवास करता था।

परीक्षितस्तु दायादो धार्मिको जनमेजयः ॥६२॥
जनमेजयस्य दातादास्त्रय एव महारथाः।
श्रुतसेनोग्रसेनौ च भीमसेनश्च नामतः ॥६३॥
एते सर्वे महाभागा विक्रान्ता बलशालिनः।
जनमेजयस्य पुत्रौ तु सुरथो मतिमांस्तथा ॥६४॥

अर्थ—कुरु के दूसरे पुत्र परीक्षित् के आत्मज धर्मात्मा जनमेजय हुए। जनमेजय के श्रुतसेन, उग्रसेन और भीमसेन—ये तीन महारथी पुत्र थे। ये

सभी महाभाग राजकुमार पराक्रमी तथा बलशाली थे। जनमेजय के दो पुत्र हुए सुरथ और मतिमान्।

सुरथस्य तु विक्रान्तः पुत्रो जज्ञे विदूरथः।
विदूरथस्य दायाद ऋक्ष एव महारथः॥६५॥
द्वितीयः स बभौ राजा नाम्ना तेनैव संज्ञितः।

**अर्थ**—सुरथ के एक पराक्रमी पुत्र उत्पन्न हुआ, जिसका नाम था विदूरथ। विदूरथ के महारथी पुत्र का नाम भी ऋक्ष ही था। ये दूसरे राजा थे, जो उसी (ऋक्ष) नाम से प्रसिद्ध हुए।

द्वावृक्षौ तव वंशेऽस्मिन् द्वावेव तु परीक्षितौ॥६६॥
भीमसेनास्त्रयो राजन् द्वावेव जनमेजयौ।

**अर्थ**—राजन्! तुम्हारे इस वंश में दो 'ऋक्ष' और दो ही 'परीक्षित्' नाम के राजा हो गये हैं। तीन 'भीमसेन' और दो 'जनमेजय' हुए हैं।

ऋक्षस्य तु द्वितीयस्य भीमसेनोऽभवत् सुतः॥६७॥
प्रतीपो भीमसेनस्य प्रतीपस्य तु शन्तनुः।
देवापिर्बाह्लिकश्चैव त्रय एव महारथाः॥६८॥

**अर्थ**—द्वितीय ऋक्ष के पुत्र भीमसेन हुए। भीमसेन के प्रतीप और प्रतीप के पुत्र शन्तनु, देवापि तथा बाह्लिक थे। ये तीनों ही महारथी वीर थे।

शन्तनोः प्रसवस्त्वेष यत्र जातोऽसि पार्थिव।
बाह्लिकस्य तु राज्यं वै सप्तवाह्यं नरेश्वर॥६९॥

**अर्थ**—पृथ्वीनाथ! यह शन्तनु का कुल है, जिसमें तुम्हारा जन्म हुआ है। नरेश्वर! बाह्लिक का राज्य सप्तवाह्य (मन्त्री आदि सात अंगों द्वारा संचालित होने योग्य) था।

बाह्लिकस्य सुतश्चैव सोमदत्तो महायशाः।
जज्ञिरे सोमदत्तात्तु भूरिर्भूरिश्रवाः शलः॥७०॥

**अर्थ**—बाह्लिक के पुत्र महायशस्वी सोमदत्त हुए। सोमदत्त से भूरि, भूरिश्रवा और शल—ये तीन पुत्र उत्पन्न हुए।

उपाध्यायस्तु देवानां देवापिरभवन्मुनिः।
च्यवनस्य कृतः पुत्र इष्टश्चासीन्महात्मनः॥७१॥

**अर्थ**—देवापि देवताओं के उपाध्याय और मुनि हुए। महात्मा च्यवय ने उन्हें अपना प्रिय पुत्र बना लिया था।

शन्तनुस्त्वभवद् राजा कौरवाणां धुरन्धरः ।
शन्तनोः सम्प्रवक्ष्यामि यत्र जातोऽसि पार्थिव ।।७२।।

अर्थ—राजा शन्तनु कौरव कुल का भार वहन करनेवाले हुए । पृथ्वीनाथ ! अब मैं शन्तनु के वंश का वर्णन करता हूं, जिसमें तुम्हारा जन्म हुआ है ।

गाङ्गं देवव्रतं नाम पुत्रं सोऽजनयत् प्रभुः ।
स तु भीष्म इति ख्यातः पाण्डवानां पितामहः ।।७३।।

अर्थ—प्रभावशाली शन्तनु ने गंगा जी के गर्भ से देवव्रत नामक पुत्र को जन्म दिया । वे ही भीष्म नाम से विख्यात हुए, जो पाण्डवों के पितामह थे ।

काली विचित्रवीर्यं तु जनयामास भारत ।
शन्तनोर्दयितं पुत्रं धर्मात्मानमकल्मषम् ।।७४।।

अर्थ—भारत ! उनकी दूसरी पत्नी काली (सत्यवती) ने शन्तनु के प्रिय पुत्र विचित्रवीर्य को उत्पन्न किया, जो पापशून्य तथा धर्मात्मा थे ।

कृष्णद्वैपायनश्चैव क्षेत्रे वैचित्रवीर्यके ।
धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् ।।७५।।

अर्थ विचित्रवीर्य के क्षेत्र (अर्थात् उनके पत्नियों के गर्भ) से श्रीकृष्ण-द्वैपायन व्यास जी ने धृतराष्ट्र, पाण्डु और विदुर को उत्पन्न किया था ।

धृतराष्ट्रश्च गान्धार्यां पुत्रानुत्पादयच्छतम् ।
तेषां दुर्योधनः श्रेष्ठः सर्वेषामेव स प्रभुः ।।७६।।

अर्थ—धृतराष्ट्र ने गान्धारी के गर्भ से सौ पुत्र उत्पन्न किए । उन सबमें दुर्योधन ही श्रेष्ठ और प्रभावशाली था ।

पाण्डोर्धनंजयः पुत्रः सौभद्रस्तस्य चात्मजः ।
अभिमन्योः परीक्षित् तु पिता तव जनेश्वर ।।७७।।

अर्थ-पाण्डु के पुत्र धनंजय (अर्जुन) हुए । धनंजय से सुभद्रा-कुमार अभिमन्यु का जन्म हुआ । जनेश्वर ! अभिमन्यु के पुत्र तुम्हारे पिता परीक्षित् थे ।

एष ते पौरवो वंशो यत्र जातोऽसि पार्थिव ।
तुर्वसोस्तु प्रवक्ष्यामि द्रुह्योश्चानोर्यदोस्तथा ।।७८।।

अर्थ—जनमेजय ! यह तुमसे पौरववंश का वर्णन किया गया, जिसमें तुम्हारा जन्म हुआ है । अब तुर्वसु, द्रुह्यु, यदु और अनु की सन्तति का वर्णन करूंगा ।

सुतस्तु तुर्वसोर्वह्निर्वह्नेर्गोभानुरात्मजः ।
गोभानोस्तु सुतो राजा त्रैसानुरपराजितः ।।७९।।

**अर्थ** – तुर्वसु के पुत्र वह्नि और वह्नि के गोभानु हुए। गोभानु के पुत्र राजा त्रैसानु थे, जो कभी परास्त नहीं होते थे।

करन्धमस्तु त्रैसानोर्मरुत्तस्तस्य चात्मजः।
अन्यस्त्वावीक्षितो राजा मरुत्तः कथितस्तव ॥८०॥

**अर्थ**—त्रैसानु के करन्धम और करन्धम के पुत्र मरुत्त हुए। अविक्षित् के पुत्र राजा मरुत्त दूसरे हैं। उनका परिचय तुम्हें दिया जा चुका है।

अनपत्योऽभवद् राजा यज्वा विपुलदक्षिणः।
दुहिता सम्मता नाम तस्यासीत् पृथिवीपते ॥८१॥

**अर्थ**—ये करन्धम-पुत्र राजा मरुत्त पुत्रहीन थे। ये बड़े-बड़े यज्ञ करते और उनमें प्रचुर दक्षिणाएं देते थे। पृथ्वीनाथ! उनके एक पुत्री थी, जिसका नाम सम्मता था।

दक्षिणार्थं स्म वै दत्ता संवर्ताय महात्मने।
दुष्यन्तं पौरवं चापि लेभे पुत्रमकल्मषम् ॥८२॥

**अर्थ**—उन्होंने महात्मा संवर्त को अपनी वह कन्या ही दक्षिणारूप में दे दी थी। (फिर संवर्त ने दुष्यन्त के पिता को वह कन्या अर्पित कर दी। उनके संयोग से) सम्मता ने पुरुवंशी दुष्यन्त को पुत्ररूप में प्राप्त किया। दुष्यन्त निष्पाप राजा थे।

एवं ययातेः शापेन जरासंक्रमणे तदा।
पौरवं तुर्वसोर्वंशः प्रविवेश नृपोत्तम ॥८३॥

**अर्थ**—नृपश्रेष्ठ! इस प्रकार पुत्रों को अपना बुढ़ापा लेने के लिए कहते समय ययाति ने जो शाप दिया था, उसके अनुसार तुर्वसु का वंश समाप्त होकर पौरववंश में विलीन होगया।

दुष्यन्तस्य तु दायादः करुत्थामः प्रजेश्वरः।
करुत्थामात् तथाऽऽक्रीडश्चत्वारस्तस्य चात्मजाः ॥८४॥
पाण्ड्यश्च केरलश्चैव कोलश्चोलश्च पार्थिवः।
तेषां जनपदाः स्फीताः पाण्ड्याश्चोलाः सकेरलाः ॥८५॥

**अर्थ**—दुष्यन्त के (शकुन्तला से भिन्न दूसरी रानी के गर्भ से) राजा करुत्थाम हुए। करुत्थाम से आक्रीड का जन्म हुआ। उसके चार पुत्र थे—पाण्ड्य, केरल, कोल तथा राजा चोल। उनके समृद्धिशाली प्रदेश भी उन्हीं के नाम पर पाण्ड्य, चोल और केरल कहलाये।

द्रुह्योश्च तनयो राजन् बभ्रुः सेतुश्च पार्थिवः।
अङ्गारसेतुस्तत्पुत्रो मरुतां पतिरुच्यते ॥८६॥

**अर्थ**—राजन्! ययातिकुमार द्रुह्यु के पुत्र राजा बभ्रु और सेतु हुए। सेतु के पुत्र अंगारसेतु हुए। इन्हें मरुत्पति भी कहा जाता है।

यौवनाश्वेन समरे कृच्छ्रेण निहतो बली।
युद्धं सुमहदस्यासीन्मासान्परि चतुर्दश ॥८७॥

**अर्थ**—युवनाश्व के पुत्र मान्धाता के साथ इनका चौदह महीनों तक बड़ा भारी युद्ध हुआ। उस समरांगण में बलवान् अंगारसेतु शत्रु द्वारा बड़ी कठिनाई से मारे गये।

अङ्गारस्य तु दायादो गान्धारो नाम भारत।
ख्यायते तस्य नाम्ना वै गाधारविषयो महान् ॥८८॥
गान्धारदेशजाश्चैव तुरगा वाजिनां वराः।

**अर्थ**—भरतनन्दन! अंगार के पुत्र गान्धार हुए। उन्हीं के नाम से महान् गान्धार देश की ख्याति हुई। गान्धार देश के घोड़े सब घोड़ों से श्रेष्ठ माने गये हैं।

अनोस्तु पुत्रो धर्मोऽभूद् धृतस्तस्यात्मजोऽभवत् ॥८९॥
धृतात् तु दुदुहो जज्ञे प्रचेतास्तस्य चात्मजः।
प्रचेतसः सुचेतास्तु कीर्तितो ह्यानवो मया ॥९०॥

**अर्थ**—ययाति पुत्र अनु के पुत्र धर्म हुए और धर्म के पुत्र धृत, धृत से दुदुह का जन्म हुआ। दुदुह के पुत्र प्रचेता और प्रचेता के पुत्र सुचेता हुए। इस प्रकार मैंने (संक्षेप से) अनु वंश का वर्णन किया है।

यदोर्वंशं प्रवक्ष्यामि ज्येष्ठस्योत्तमतेजसः।
विस्तरेणानुपूर्व्यात्तु गदतो मे निशामय ॥९१॥

**अर्थ**—अब मैं ययाति के ज्येष्ठ पुत्र उत्तम तेजस्वी यदु के वंश का क्रमशः विस्तारपूर्वक वर्णन करूंगा। तुम मेरे मुख से इसको सुनो।

इति हरिवंशे पूरुवंशानुकीर्तने द्वात्रिंशोऽध्यायः॥३२॥

---

# १५. यदुवंशानुचरितम् (हैहयार्जुनचरितम्)

**वैशम्पायन उवाच—**

बभूवुस्तु यदोः पुत्राः पञ्च देवसुतोपमाः।
सहस्रदः पयोदश्च क्रोष्टा नीलोऽञ्जिकस्तथा ॥१॥

**अर्थ—वैशम्पायन जी कहते हैं**—जनमेजय यदु के पांच देवोपम पुत्र हुए—सहस्रद, पयोद, क्रोष्टु, नील और अंजिक।

सहस्रदस्य दायादास्त्रयः परमधार्मिकाः।
हैहयश्च हयश्चैव राजन् वेणुहयस्तथा ॥२॥

**अर्थ**—राजन्! सहस्रद के तीन परम धर्मात्मा पुत्र हुए—हैहय, हय और वेणुहय।

हैहयस्याभवत् पुत्रो धर्मनेत्र इति स्मृतः।
धर्मनेत्रस्य कार्तस्तु साहञ्जस्तस्य चात्मजः ॥३॥

**अर्थ**—हैहय का पुत्र धर्मनेत्र हुआ। धर्मनेत्र के कार्त और कार्त के साहञ्ज नामक पुत्र हुए।

साहञ्जनी नाम पुरी येन राज्ञा निवेशिता।
साहञ्जस्य तु दायादो महिष्मान् नाम पार्थिवः ॥४॥
माहिष्मती नाम पुरी येन राज्ञा निवेशिता।

**अर्थ**—राजा साहञ्ज ने साहञ्जनी नामक पुरी बसायी। साहञ्ज के पुत्र राजा महिष्मान् हुए, जिन्होंने माहिष्मती नामक नगरी बसायी थी।

आसीन्महिष्मतः पुत्रो भद्रश्रेण्यः प्रतापवान् ॥५॥
वाराणस्यधिपो राजा कथितः पूर्वमेव तु।

**अर्थ**—महिष्मान् के पुत्र प्रतापी भद्रश्रेण्य थे, जो वाराणसीपुरी के अधिपति कहे गये हैं। राजा भद्रश्रेण्य का परिचय तुम्हें पहले ही दे दिया गया है।

भद्रश्रेण्यस्य पुत्रस्तु दुर्दमो नाम विश्रुतः ॥६॥
दुर्दमस्य सुतो धीमान् कनको नाम वीर्यवान्।

**अर्थ**—भद्रश्रेण्य के पुत्र का नाम दुर्दम था, जो भूमण्डल के विख्यात राजा थे। दुर्दम के पुत्र कनक हुए, जो बुद्धिमान् और बलवान् थे।

कनकस्य तु दायादाश्चत्वारो लोकविश्रुताः ॥७॥
कृतवीर्यः कृतौजाश्च कृतवर्मा तथैव च।
कृताग्निस्तु चतुर्थोऽभूत् कृतवीर्यात् तथार्जुनः ॥८॥

अर्थ—कनक के चार पुत्र हुए, जो सम्पूर्ण विश्व में विख्यात थे। उनके नाम इस प्रकार हैं— कृतवीर्य, कृतौजा, कृतवर्मा और कृताग्नि। कृताग्नि कनक के चौथे पुत्र थे। कृतवीर्य से अर्जुन की उत्पत्ति हुई।

यस्तु बाहुसहस्रेण सप्तद्वीपेश्वरोऽभवत्।
जिगाय पृथिवीमेको रथेनादित्यवर्चसा।।९।।

अर्थ—अर्जुन सहस्र भुजाओं से युक्त हो सातों द्वीपों का राजा हुआ। उसने अकेले ही सूर्य के समान तेजस्वी रथ द्वारा सम्पूर्ण पृथ्वी को जीत लिया था।

स हि वर्षायुतं तप्त्वा तपः परमदुश्चरम्।
दत्तमाराधयामास कार्तवीर्योऽत्रिसम्भवम्।।१०।।

अर्थ—कृतवीर्यकुमार अर्जुन ने दस हजार वर्षों तक अत्यन्त दुष्कर तपस्या करके अत्रि-पुत्र दत्त (दत्तात्रेय) की आराधना की।

तस्मै दत्तो वरान् प्रादाच्चतुरो भूरितेजसः।
पूर्वं बाहुसहस्रं तु प्रार्थितं सुमहद्वरम्।।११।।

अर्थ—दत्तात्रेय जी ने उसे परम तेजस्वी चार वर प्रदान किये। पहले तो उसने बहुत बड़ा वर यह मांगा था कि 'युद्ध में मेरी सहस्र भुजाएं हो जायें।'

अधर्मे वर्तमानस्य सद्भिस्तत्र निवारणम्।
उग्रेण पृथिवीं जित्वा स्वधर्मेणानुरञ्जनम्।।१२।।

अर्थ—दूसरा वर यह मांगा था कि 'यदि कभी मैं अधर्म-कार्य में प्रवृत्त होऊं तो वहां साधु पुरुष आकर मुझे रोक दें।' तीसरे वर के रूप में उसने यह प्रार्थना की कि 'मैं युद्ध के द्वारा पृथ्वी को जीतकर स्वधर्म-पालन के द्वारा प्रजा को प्रसन्न रक्खूं।'

संग्रामान् सुबहून् कृत्वा हत्वा चारीन् सहस्रसः।
संग्रामे वर्तमानस्य वधं चाप्यधिकाद् रणे।।१३।।

अर्थ—चौथा वर इस प्रकार है—'मैं बहुत-से संग्राम करके सहस्रों शत्रुओं को मौत के घाट उतारकर संग्राम में ही रहते समय जो युद्ध में मुझसे अधिक शक्तिशाली हो, उसके द्वारा वध को प्राप्त होऊं।'

तस्य बाहुसहस्रं तु युध्यतः किल भारत।
योगाद् योगेश्वरस्येव प्रादुर्भवति मायया।।१४।।

अर्थ—भरतनन्दन! युद्ध करते समय किसी योगेश्वर की भांति योगबल और संकेतमात्र से उसके एक सहस्र भुजाएं प्रकट हो जाती थीं।

तेनेयं पृथिवी सर्वा सप्तद्वीपा सपत्तना।
ससमुद्रा सनगरा उग्रेण विधिना जिता ॥१५॥

**अर्थ**—राजा अर्जुन ने द्वीप, समुद्र, पत्तन और नगरों सहित सारी पृथ्वी को उग्रकर्म (युद्ध) के द्वारा जीता था।

तेन सप्तसु द्वीपेषु सप्त यज्ञशतानि वै।
प्राप्तानि विधिना राज्ञा श्रूयन्ते जनमेजय ॥१६॥

**अर्थ**—जनमेजय ! उस राजा ने सातों द्वीपों में विधिपूर्वक सात सौ यज्ञ किए थे, ऐसा सुना जाता है।

सर्वे यज्ञा महाबाहोस्तस्यासन् भूरिदक्षिणाः।
सर्वे काञ्चनयूपाश्च सर्वे काञ्चनवेदयः ॥१७॥

**अर्थ**—महाबाहु अर्जुन के वे समस्त यज्ञ प्रचुर दक्षिणा देकर सम्पन्न किए गए थे। सबमें सोने के यूप गड़े थे और सोने की ही वेदियां बनायी गयी थीं।

सर्वैर्देवैर्महाराज विमानस्थैरलंकृताः।
गन्धर्वैरप्सरोभिश्च नित्यमेवोपशोभिताः ॥१८॥

**अर्थ**—महाराज ! विमानों पर बैठे हुए सम्पूर्ण देवता, गन्धर्व और अप्सराएं सदा ही उन यज्ञों को अलंकृत एवं सुशोभित करती थीं।

यस्य यज्ञे जगौ गाथां गन्धर्वो नारदस्तथा।
वरीदासात्मजो विद्वान् महिम्ना तस्य विस्मितः ॥१९॥

**अर्थ**—कार्तवीर्य के यज्ञ में उसकी महिमा से चकित होकर वरीदास के विद्वान् पुत्र नारद नामक गन्धर्व ने इस गाथा का गान किया था।

**नारद उवाच**—

न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः।
यज्ञैर्दानैस्तपोभिर्वा विक्रमेण श्रुतेन च ॥२०॥

**अर्थ—नारद बोले**—अन्य राजा लोग यज्ञ, दान, तपस्या, पराक्रम और शास्त्र-ज्ञान में कार्तवीर्य अर्जुन की स्थिति को नहीं पहुंच सकते।

स हि सप्तसु द्वीपेषु खड्गी चर्मी शरासनी।
रथी द्वीपाननुचरन् योगी संदृश्यते नृभिः ॥२१॥

**अर्थ**—वह योगी था। इसलिए मनुष्यों को सातों द्वीपों में ढाल—तलवार, धनुष-बाण और रथ लिए सदा सब ओर विचरता दिखायी देता था।

अनष्टद्रव्यता चैव न शोको न च विभ्रमः।
प्रभावेण महाराज्ञः प्रजा धर्मेण रक्षतः ॥२२॥

**अर्थ**—धर्मपूर्वक प्रजा की रक्षा करनेवाले महाराज कार्तवीर्य के प्रभाव से किसी का धन नष्ट नहीं होता था। न तो किसी को शोक होता और न कोई भ्रम में ही पड़ता था।

पञ्चाशीतिसहस्राणि वर्षाणि वै नराधिपः।
स सर्वरत्नभाक् सम्राट चक्रवर्ती बभूव ह ॥२३॥

**अर्थ**—वह पचासी हजार वर्षों तक सब प्रकार के रत्नों से सम्पन्न चक्रवर्ती सम्राट् रहा।

स एव यज्ञपालोऽभूत् क्षेत्रपालः स एव च।
स एव वृष्ट्यां पर्जन्यो योगित्वादर्जुनोऽभवत् ॥२४॥

**अर्थ**—योगी होने के कारण राजा अर्जुन ही यज्ञों और खेतों की रक्षा करता था और वही वर्षाकाल में मेघ बन जाता था।

स वै बाहुसहस्रेण ज्याघातकठिनत्वचा।
भाति रश्मिसहस्रेण शरदीव दिवाकरः ॥२५॥

अर्थ—जैसे शरदृतु में भगवान् भास्कर अपनी सहस्रों किरणों से शोभा पाते हैं, उसी प्रकार राजा कार्तवीर्य अर्जुन प्रत्यञ्चा की रगड़ से जिनकी त्वचा कठोर हो गयी थी, उन सहस्रों भुजाओं से सुशोभित होता था।

स हि नागान् मनुष्येषु माहिष्मत्यां महाद्युतिः।
कर्कोटकसुताञ्जित्वा पुर्यां तस्यां न्यवेशयत् ॥२६॥

**अर्थ**—महातेजस्वी अर्जुन ने कर्कोटक नाग के पुत्रों को जीतकर उन्हें अपनी नगरी माहिष्मती पुरी में मनुष्यों के बीच बसाया था।

स वै वेगं समुद्रस्य प्रावृट्कालेऽम्बुजेक्षणः।
क्रीडन्निव भुजोद्भिन्नं प्रतिस्रोतश्चकार ह ॥२७॥

**अर्थ**—कमलनयन कार्तवीर्य वर्षाकाल में जल-क्रीडा करते समय समुद्र की जलराशि के वेगों को अपनी भुजाओं के आघात से रोककर पीछे की ओर लौटा देता था।

लुण्ठिता क्रीडिता तेन फेनस्रग्दाममालिनी।
चलदूर्मिसहस्रेण शङ्किताभ्येति नर्मदा ॥२८॥

**अर्थ**—फेनरूपी पुष्पहारों से अलंकृत नर्मदा की जलराशि में जब वह लोटता और क्रीडा करता था, तब वह परम पुरुष के उपभोग में आयी हुई नारी के समान शङ्कित-सी होकर अपनी सहस्रों चञ्चल लहरों के साथ अपने पति समुद्र के निकट जाती थी।

तस्य बाहुसहस्रेण क्षुभ्यमाणे महोदधौ।
भयान्निलीना निश्चेष्टाः पातालस्था महासुराः ॥२९॥

**अर्थ**—महासागर में घुसकर जब वह अपनी सहस्रों भुजायें पटकता, उस समय समुद्र विक्षुब्ध हो उठता था और पाताल-निवासी महादैत्य निश्चेष्ट होकर भय से छिप जाते थे।

चूर्णीकृतमहावीचिं चलन्मीनमहातिमिम्।
मारुताविद्धफेनौघमावर्तक्षोभदुःसहम् ॥३०॥
प्रावर्तयत् तदा राजा सहस्रेण च बाहुना।
देवासुरसमाक्षिप्तः क्षीरोदमिव मन्दरः ॥३१॥

**अर्थ**—जब राजा अर्जुन अपनी सहस्र भुजाओं से समुद्र को मथने लगता, उस समय उसकी उठती हुई उत्ताल तरंगें चूर-चूर हो जाती थीं। बड़े-बड़े तिमि और मीन आदि जल-जन्तु छटपटाने लगते थे। भुजाओं के वेग से उठी हुई वायु से टकराकर उसकी फेनराशि छिन्न-भिन्न हो जाती थी और समुद्र बड़ी-बड़ी भंवरों के कारण क्षुब्ध एवं दुःसह दिखायी देता था। देवताओं और असुरों के द्वारा डाले हुए मन्दराचल ने क्षीर-समुद्र की जो दशा कर दी थी, वैसी ही दशा उसकी भुजाओं से मथित हुए महासागर की हो रही थी।

मन्दरक्षोभचकिता अमृतोद्भवशङ्किताः।
सहसोत्पतिता भीता भीमं दृष्ट्वा नृपोत्तमम् ॥३२॥
नता निश्चलमूर्धानो बभूवुस्ते महोरगाः।
सायाह्ने कदलीखण्डाः कम्पितास्तस्य वायुना ॥३३॥

**अर्थ**—उस समय मन्दराचल के द्वारा समुद्रमन्थन की आशङ्का से चकित और अमृत की उत्पत्ति से भयभीत हुए बड़े-बड़े नाग सहसा उछलकर देखते और भयंकर नृपश्रेष्ठ कार्तवीर्य पर दृष्टि पड़ते ही मस्तक झुकाकर पत्थर के समान निश्चेष्ट हो जाते थे। जैसे सन्ध्या के समय वायु के झोंके से कदलीखण्ड (केलों के बगीचे) कांपने लगते हैं, उसी प्रकार उसके शरीर से उठी हुई वायु के द्वारा वे नाग भी हिलने लगते थे।

स वै बद्ध्वा धनुर्ज्याभिरुत्सिक्तं पञ्चभिः शरैः।
लङ्केशं मोहयित्वा तु सबलं रावणं बलात्।।
निर्जित्यैव समानीय माहिष्मत्यां बबन्ध तम् ॥३४॥

**अर्थ**—राजा कार्तवीर्य ने अभिमान से भरे हुए लङ्कापति रावण को अपने पांच ही बाणों द्वारा सेना सहित मूर्छित और पराजित करके धनुष की प्रत्यञ्चा से बांध लिया और माहिष्मतीपुरी में लाकर बन्दी बना लिया।

श्रुत्वा तु बद्धं पौलस्त्यं रावणं त्वर्जुनेन तु।
ततो गत्वा पुलस्त्यस्तमर्जुनं ददृशे स्वयम्।
मुमोच रक्षः पौलस्त्यं पुलस्त्येनानुयाचितः ॥३५॥

अर्थ—अर्जुन ने मेरे वंशज रावण को कैद कर लिया है, यह सुनकर महर्षि पुलस्त्य स्वयं वहां गये और अर्जुन से मिले। पुलस्त्य के प्रार्थना करने पर उसने पौत्र राक्षस रावण को मुक्त कर दिया।

यस्य बाहुसहस्रस्य बभूव ज्यातलस्वनः।
युगान्ते त्वम्बुदस्येव स्फुटतो ह्यशनेरिव ॥३६॥

अर्थ— अर्जुन की हजार भुजाओं में धारण किये गये धनुषों की प्रत्यञ्चा का ऐसा घोर शब्द होता था, मानो प्रलयकाल के मेघ गरजते हों, अथवा वज्र फट पड़ा हो।

अहो बत मृधे वीर्यं भार्गवस्य यदच्छिनत्।
राज्ञो बाहुसहस्रं तु हैमं तालवनं यथा ॥३७॥

अर्थ—अहो! भृगुवंशी परशुराम जी का पराक्रम धन्य है, जिससे उन्होंने युद्ध में सुवर्णमय तालवन के समान राजा कार्तवीर्य की सहस्रों भुजाओं को काट डाला था।

तृषितेन कदाचित् स भिक्षितश्चित्रभानुना।
स भिक्षामददाद् वीरः सप्तद्वीपान् विभावसोः ॥३८॥
पुराणि ग्रामघोषांश्च विषयांश्चैव सर्वशः।
जज्वाल तस्य सर्वाणि चित्रभानुर्दिधक्षया ॥३९॥
स तस्य पुरुषेन्द्रस्य प्रभावेण महात्मनः।
ददाह कार्तवीर्यस्य शैलांश्चैव वनानि च ॥४०॥

अर्थ—एक दिन की बात है—भूखे-प्यासे अग्निदेव ने राजा कार्तवीर्य से भिक्षा मांगी। तब उस वीर राजा ने सातों द्वीप, नगर, गांव गोष्ठ तथा सारा राज्य अग्निदेव को भिक्षा में दे दिये। अग्निदेव सर्वत्र प्रज्वलित हो उठे और पुरुषप्रवर महात्मा कार्तवीर्य के प्रभाव से समस्त पर्वतों एवं वनों को जलाने लगे।

स शून्यमाश्रयं रम्यं वरुणस्यात्मजस्य वै।
ददाह वनवद् भीतश्चित्रभानुः सहैहयः ॥४१॥

अर्थ—कार्तवीर्य की सहायता से अग्नि ने दूसरे साधारण वनों की भांति वरुण पुत्र के रमणीय आश्रम को भी सूना पाकर डरते-डरते जला दिया।

यं लेभे वरुणः पुत्रं पुरा भास्वन्तमुत्तमम् ।
वसिष्ठं नाम स मुनिः ख्यात आपव इत्युत ।।४२।।

**अर्थ**—पूर्वकाल में वरुण ने जिन तेजस्वी एवं श्रेष्ठ महर्षि को पुत्ररूप में प्राप्त किया था, उनका नाम वशिष्ठ है। वे ही मुनि आपव नाम से भी विख्यात हैं।

यत्रापवस्तु तं क्रोधाच्छप्तवानर्जुनं विभुः ।
यस्मान्न वर्जितमिदं वनं ते मम हैहय ।।४३।।
तस्मात् ते दुष्करं कर्म कृतमन्यो हनिष्यति ।

**अर्थ** महर्षि वसिष्ठ का सूना आश्रम जलाया गया था, इसलिए उन ऐश्वर्यशाली आपव ने अर्जुन को क्रोधपूर्वक शाप दिया—'हैहय ! तूने मेरे इस वन को भी जलाये बिना न छोड़ा, इसलिए तेरे द्वारा जो विश्व-विजय आदि यशोवर्द्धक दुष्कर कर्म किया गया है, उसे दूसरा वीर (तुझे पराजित करके) नष्ट कर डालेगा।

रामो नाम महाबाहुर्जामदग्न्यः प्रतापवान् ।।४४।।
छित्त्वा बाहुसहस्रं ते प्रमथ्य तरसा बली ।
तपस्वी ब्राह्मणश्च त्वां वधिष्यति स भार्गव ।।४५।।

**अर्थ**—'जमदग्नि के प्रतापी पुत्र महाबाहु परशुराम बलवान् और तपस्वी ब्राह्मण हैं। वे भृगुवंशी वीर तुझे बलपूर्वक मथ डालेंगे और तेरी इन सहस्र भुजाओं को काटकर तुझे भी मौत के घाट उतार देंगे।'

**वैशम्पायन उवाच—**

अनष्टद्रव्यता यस्य बभूवामित्रकर्शन ।
प्रभावेण नरेन्द्रस्य प्रजा धर्मेण रक्षतः ।।४६।।

**अर्थ—वैशम्पायन जी कहते हैं**—शत्रुसूदन जनमेजय ! धर्मपूर्वक प्रजा की रक्षा करनेवाले राजा कार्तवीर्य के प्रभाव से उसके राज्य में किसी की धन-सम्पत्ति या दूसरी कोई वस्तु नष्ट नहीं होती थी।

रामात् ततोऽस्य मृत्युर्वै तस्य शापान्मुनेर्नृप ।
वरश्चैष हि कौरव्य स्वयमेव वृतः पुरा ।।४७।।

**अर्थ**—कुरुवंशी नरेश ! वसिष्ठ मुनि के शाप से ही परशुराम के हाथ से उसकी मृत्यु हुई थी। उसने स्वयं ही पहले इसी तरह का वर मांगा था।

तस्य पुत्रशतस्यासन् पञ्च शेषा महात्मनः ।
कृतास्त्रा बलिनः शूरा धर्मात्मानो यशस्विनः ।।४८।।

अर्थ—महामना कार्तवीर्य के सौ पुत्र थे, किंतु उनमें पांच ही शेष बचे। वे सभी अस्त्र-शस्त्रों के ज्ञाता, बलवान्, शूर, धर्मात्मा और यशस्वी थे।

शूरसेनश्च शूरश्च धृष्टोक्तः कृष्ण एव च।
जयध्वजश्च नाम्नाऽऽसीदावन्त्यो नृपतिर्महान् ॥४९॥

अर्थ—उनके नाम ये हैं—शूरसेन, शूर, धृष्ट, कृष्ण और जयध्वज। इनमें जयध्वज अवन्ती देश के महाराज थे।

कार्तवीर्यस्य तनया वीर्यवन्तो महारथाः।
जयध्वजस्य पुत्रस्तु तालजङ्घो महाबलः ॥५०॥

अर्थ—कार्तवीर्य के ये सभी पुत्र बलवान् और महारथी थे। जयध्वज के पुत्र महाबली तालजङ्घ हुए।

तस्य पुत्राः शतं ख्यातास्तालजङ्घा इति श्रुताः।
तेषां कुले महाराज हैहयानां महात्मनाम् ॥५१॥
वीतिहोत्राः सुजाताश्च भोजाश्चावन्तयः स्मृताः।
तौण्डिकेरा इति ख्यातास्तालजङ्घास्तथैव च ॥५२॥
भरताश्च सुता जाता बहुत्वान्नानुकीर्तिताः।
वृषप्रभृतयो राजन् यादवाः पूर्णकर्मिणः ॥५३॥

अर्थ—तालजङ्घ के सौ पुत्र थे, जो तालजङ्घ नाम से ही विख्यात थे। महाराज! महामनस्वी हैहयों के कुल में वीतिहोत्र, सुजात, भोज, अवन्ति, तौण्डिकेर, तालजङ्घ तथा भरत आदि क्षत्रियों के समुदाय उत्पन्न हुए। इनकी संख्या बहुत होने के कारण इनके पृथक्-पृथक् नाम नहीं बताए गए। राजन्! वृष आदि बहुत से पुण्यात्मा यादव इसी पृथ्वी पर उत्पन्न हुए थे।

वृषो वंशधरस्तत्र तस्य पुत्रोऽभवन्मधुः।
मधोः पुत्रशतं त्वासीद् वृषणस्तस्य वंशभाक् ॥५४॥

अर्थ—उनमें वृष वंशप्रवर्तक हुए। वृष के पुत्र मधु थे। मधु के सौ पुत्र हुए, जिनमें वृषण वंश चलानेवाले हुए।

वृषणाद् वृष्णयः सर्वे मधोस्तु माधवाः स्मृताः।
यादवा यदुना चाग्रे निरुच्यन्ते च हैहयाः ॥५५॥

अर्थ—वृषण से जो संतान-परम्परा चली, उसके अन्तर्गत सभी क्षत्रिय वृष्णि कहलाये और मधु के वंशज माधव नाम से प्रसिद्ध हुये। इसी प्रकार यदु के नाम पर उस वंश के लोग यादव कहलाते हैं तथा आगे होनेवाले हैहय के वंशज हैहय कहे जाते हैं।

न तस्य वित्तनाशोऽस्ति नष्टं प्रतिलभेच्च स।
कार्तवीर्यस्य यो जन्म कीर्तयेदिह नित्यशः ॥५६॥

**अर्थ**—जो यहां प्रतिदिन कार्तवीर्य अर्जुन के जन्म का वृत्तान्त कहता या सुनता है, उसके धन का नाश नहीं होता और उसकी खोयी हुई वस्तु भी उसे मिल जाती है।

एते ययातिपुत्राणां पञ्च वंशा विशाम्पते।
कीर्तिता लोकवीराणां ये लोकान् धारयन्ति वै ॥५७॥
भूतानीव महाराज पञ्च स्थावरजङ्गमान्।

**अर्थ**—प्रजानाथ! इस प्रकार ये विश्वविख्यात वीर ययाति पुत्रों के पांच वंश यहां बतलाये गये हैं! महाराज! जैसे पांचों भूत स्थावर, जङ्गम प्राणियों के शरीरों को धारण करते हैं, उसी प्रकार ये पांचों वंश समस्त लोकों को धारण करते हैं।

श्रुत्वा पञ्चविसर्गं तु राजा धर्मार्थकोविदः ॥५८॥
वशी भवति पञ्चानामात्मजानां तथेश्वरः।

**अर्थ**—इन पांचों वंशों की सृष्टि का वर्णन सुनकर राजा धर्म और अर्थ के तत्त्व का ज्ञाता होता है, अपनी पांचों इन्द्रियों को वश में रखता है तथा अपने पुत्रों पर प्रभुत्व स्थापित कर लेता है।

लभेत् पञ्च वरांश्चैव दुर्लभानिह लौकिकान् ॥५९॥
आयुः कीर्तिं तथा पुत्रानैश्वर्यं भूमिमेव च।
धारणाच्छ्रवणाच्चैव पञ्चवर्गस्य भारत ॥६०॥

**अर्थ**—भरतनन्दन! इन पांचों वंशों के श्रवण और धारण से मनुष्य इस जगत् में आयु, कीर्ति, पुत्र, ऐश्वर्य तथा भूमि—इन पांच लोकोपयोगी दुर्लभ वरों को प्राप्त कर लेता है।

क्रोष्टोस्तु शृणु राजेन्द्र वंशमुत्तमपौरुषम्।
यशोवंशधरस्याथ यज्वनः पुण्यकर्मणः ॥६१॥
क्रोष्टोर्हि वंशं श्रुत्वेमं सर्वपापैः प्रमुच्यते।
यस्यान्ववायजो विष्णुर्हरिर्वृष्णिकुलोद्वहः ॥६२॥

**अर्थ**—राजेन्द्र! अब तुम उत्तम पुरुषार्थ से युक्त क्रोष्टुवंश का वर्णन सुनो। राजा क्रोष्टु यदु के वंशधर, यज्ञ करनेवाले तथा पुण्यकर्मा थे। उनके इस वंश का वर्णन सुनकर मनुष्य सब पापों से मुक्त हो जाता है। राजा क्रोष्टु वे ही हैं, जिनके कुल में सर्वव्यापी भगवान् श्रीहरि ने वृष्णिवंशावतंश श्रीकृष्ण के रूप में अवतार लिया था।

इति हरिवंशे त्रयस्त्रिंशोऽध्यायः ॥३३॥

# २०. वृष्णिवंशानुचरितम्

**वैशम्पायन उवाच—**

गान्धारी चैव माद्री च क्रोष्टोर्भार्ये बभूवतुः।
गान्धारी जनयामास अनमित्रं महाबलम् ॥१॥

**अर्थ—वैशम्पायन जी कहते हैं**—जनमेजय! क्रोष्टा की गान्धारी और माद्री नाम की दो भार्याएं थीं। गान्धारी के गर्भ से महाबली अनमित्र उत्पन्न हुए।

माद्री युधाजितं पुत्रं ततोऽन्यं देवमीढुषम्।
तेषां वंशस्त्रिधा भूतो वृष्णीनां कुलवर्धनः ॥२॥

**अर्थ**—माद्री के पुत्र युधाजित् और दूसरे पुत्र देवमीढुष हुए, वृष्णिओं के कुल को बढ़ानेवाला उनका वंश तीन शाखाओं में बंट गया।

माद्रयाः पुत्रस्य जज्ञाते सुतौ वृष्ण्यन्धकावुभौ।
जज्ञाते तनयौ वृष्णेः श्वफल्कश्चित्रकस्तथा ॥३॥

**अर्थ**—माद्री के पुत्र (युधाजित्) के वृष्णि और अन्धक नाम के दो पुत्र हुए और वृष्णि के पुत्र श्वफल्क तथा चित्रक हुए।

श्वफल्कस्तु महाराज धर्मात्मा यत्र वर्तते।
नास्ति व्याधिभयं तत्र नावर्षभयमप्युत ॥४॥

**अर्थ**—महाराज! धर्मात्मा श्वफल्क जहां रहते थे, वहां व्याधि और अनावृष्टि का भय नहीं होता था।

कदाचित् काशिराजस्य विभोर्भरतसत्तम।
त्रीणि वर्षाणि विषये नावर्षत पाकशासनः ॥५॥

**अर्थ**—भरतसत्तम! एक समय शक्तिशाली काशिराज के देश में इन्द्र ने तीन वर्ष तक पानी नहीं बरसाया।

स तत्र वासयामास श्वफल्कं परमार्चितम्।
श्वफल्कपरिवर्ते च ववर्ष हरिवाहनः ॥६॥

**अर्थ**—तब उन्होंने परम पूज्य श्वफल्क को बुलाकर अपने यहां ठहराया और श्वफल्क के पधारते ही इन्द्र ने जल बरसाना आरम्भ कर दिया।

श्वफल्कः काशिराजस्य सुतां भार्यामविन्दत।
गान्दिनीं नाम सा गां तु ददौ विप्रेषु नित्यशः ॥७॥

अर्थ—श्वफल्क का काशिराज की गान्दिनी नामवाली पुत्री से विवाह हो गया। वह ब्राह्मणों को नित्यप्रति गौओं का दान देती रहती थी (इसलिए उसका नाम गान्दिनी पड़ा था)।

सा मातुरुदरस्था तु बहून् वर्षगणान् किल।
निवसन्ती न वै जज्ञे गर्भस्थां तां पिताब्रवीत् ॥८॥

अर्थ—वह अपनी माता के उदर में बहुत वर्षों तक रही थी और उत्पन्न नहीं होती थी, तब गर्भ में स्थित कन्या से उसके पिता ने कहा—

जायस्व शीघ्रं भद्रं ते किमर्थमिह तिष्ठसि।
प्रोवाच चैनं गर्भस्था कन्या गां च दिने दिने ॥९॥
यदि दद्यां ततोऽद्याहं जाययिष्यामि तां पिता।
तथेत्युवाच तं चास्याः पिता काममपूरयत् ॥१०॥

अर्थ—'(भद्रे!) तेरा कल्याण हो, तू शीघ्र ही उत्पन्न हो, तू (इतने वर्षों से) किसलिए गर्भ में पड़ी हुई हैं!' तब उस गर्भ में स्थित कन्या ने कहा—'यदि आप प्रतिदिन मुझसे गोदान कराने का संकल्प करें तो मैं आज ही उत्पन्न हो जाऊं।' तब पिता ने उससे 'तथास्तु' कहकर उसकी कामना को पूर्ण किया।

दाता यज्वा च धीरश्च श्रुतवानतिथिप्रियः।
अक्रूरः सुषुवे तस्माच्छ्वफल्काद् भूरिदक्षिणः ॥११॥

अर्थ—इन श्वफल्क (और गान्दिनी) के यहां दान देनेवाले, यज्ञ करनेवाले धैर्यवान्, शास्त्रों के ज्ञाता, अतिथियों से प्रेम करनेवाले तथा प्रचुर दक्षिणाएं देनेवाले अक्रूर उत्पन्न हुए।

उपासङ्गस्तथा मद्गुर्मृदुरश्चारिमेजयः।
अविक्षिपस्तथोपेक्षः शत्रुघ्नोऽथारिमर्दनः ॥१२॥
धर्मधृग् यतिधर्मा च गृध्रो भोजोऽन्धकस्तथा।
आवाहप्रतिवाहौ च सुन्दरी च वराङ्गना ॥१३॥

अर्थ—तब उपासङ्ग, मद्गु, मृदुर, अरिमेजय, अविक्षिप, उपेक्ष, शत्रुघ्न, अरिमर्दन, धर्मधृक्, यतिधर्मा, गृध्र, भोज, अन्धक, आवाह और प्रतिवाह (नामक अक्रूर जी के भाई) तथा वराङ्गना नाम की सुन्दरी कन्या (भी) उत्पन्न हुई।

अक्रूरेणोग्रसेनायां सुगात्र्यां कुरुनन्दन।
प्रसेनश्चोपदेवश्च जज्ञाते देववर्चसौ ॥१४॥

अर्थ—कुरुनन्दन ! इन अक्रूर जी से सुन्दराङ्गी उग्रसेना के द्वारा देवताओं के समान कान्तिवाले प्रसेन तथा उपदेव नाम के दो पुत्र उत्पन्न हुए ।

चित्रकस्याभवन् पुत्राः पृथुर्विपृथुरेव च ।
अश्वग्रीवोऽश्वबाहुश्च सुपार्श्वकगवेषणौ ॥१५॥
अरिष्टनेमिरश्वश्च सुधर्मा धर्मभृत् तथा ।
सुबाहुर्बहुबाहुश्च श्रविष्ठाश्रवणे स्त्रियौ ॥१६॥

अर्थ—(अक्रूर जी के भाई) चित्रक के श्रविष्ठा और श्रवणा नाम की दो धर्मपत्नियां थीं, जिनसे पृथु, विपृथु, अश्वग्रीव, अश्वबाहु, सुपार्श्वक, गवेषण, अरिष्टनेमि, अश्व, सुधर्मा, धर्मभृत्, सुबाहु तथा बहुबाहु नामक पुत्र उत्पन्न हुए ।

अश्मक्यां जनयामास शूरं वै देवमीढुषः ।
महिष्यां जज्ञिरे शूरान् भोज्यायां पुरुषा दश ॥१७॥

अर्थ—(क्रोष्टा के तृतीय पुत्र) देवमीढुष के अश्मकी नाम की पत्नी से शूर नामक पुत्र उत्पन्न हुआ । शूर के भोजराज कुमारी से दस पुत्र उत्पन्न हुए ।

वसुदेवो महाबाहुः पूर्वमानकदुन्दुभिः ।
जज्ञे यस्य प्रसूतस्य दुन्दुभ्यः प्राणदन् दिवि ॥१८॥

अर्थ—पहले महाबाहु वसुदेव जी उपनाम आनकदुन्दुभि उत्पन्न हुए, इनके उत्पन्न होने पर स्वर्ग में—आकाश में दुन्दुभियां बजी थीं ।

आनकानां च संह्लादः सुमहानभवद् दिवि ।
पपात पुष्पवर्षं च शूरस्य भवने महत् ॥१९॥

अर्थ—तथा स्वर्ग में—आकाश में नगारों का बड़ा भारी शब्द हुआ था । (इसी से वसुदेव जी का नाम आनकदुन्दुभि पड़ा ।) साथ ही इनके उत्पन्न होने पर शूर के घर में पुष्पों की बड़ी भारी वर्षा हुई थी ।

मनुष्यलोके कृत्स्नेऽपि रूपे नास्ति समो भुवि ।
यस्यासीत् पुरुषाग्रयस्य कान्तिश्चन्द्रमसो यथा ॥२०॥

अर्थ—पुरुषों में अग्रगण्य वसुदेव जी की कान्ति चन्द्रमा के समान थी, इनके समान रूपवान् सम्पूर्ण मनुष्यलोक में और कोई नहीं था ।

देवभागस्ततो जज्ञे तथा देवश्रवाः पुनः ।
अनाधृष्टिः कनवको वत्सावानथ गृञ्जिमः ॥२१॥
श्यामः शमीको गण्डूषः पञ्च चास्य वराङ्गनाः ।
पृथुकीर्तिः पृथा चैव श्रुतदेवा श्रुतश्रवाः ॥२२॥

राजाधिदेवी च तथा पञ्चैता वीरमातरः ।
पृथां दुहितरं वव्रे कुन्तिस्तां कुरुनन्दन ॥२३॥
शूरः पूज्याय वृद्धाय कुन्तिभोजाय तां ददौ ।
तस्मात् कुन्तीति विख्याता कुन्तिभोजात्मजा पृथा ॥२४॥

अर्थ—कुरुनन्दन ! वासुदेव जी के बाद (शूर के यहां) देवभाग, देवश्रवा अनाधृति, कनवक, वत्सावान्, गृञ्जिम, श्याम, शमीक और गण्डूष नामक पुत्र तथा पृथुकीर्ति, पृथा, श्रुतदेवा, श्रुतश्रवा और राजाधिदेवी नाम की पांच कन्याएं उत्पन्न हुई थीं, जो रमणियों में रत्न के समान थीं। ये पांचों कन्यायें वीरपुत्रों की माता थीं। राजा कुन्ति ने पृथा को अपनी पुत्री बनाने के लिए मांग लिया। (इस पर) शूरसेन ने पृथा को पूज्य तथा वृद्ध राजा कुन्तिभोज को दे दिया। इस कारण पृथा कुन्तिभोज की पुत्री और कुन्ती नाम से विख्यात हुई।

अन्त्यस्य श्रुतदेवायां जगृहुः सुषुवे सुतः ।
श्रुतश्रवायां चैद्यस्य शिशुपालो महाबलः ॥२५॥
हिरण्यकशिपुर्योऽसौ दैत्यराजोऽभवत् पुरा ।

अर्थ—अन्त्य के श्रुतदेवा से जगृहु नामक पुत्र उत्पन्न हुआ तथा चेदिवंशी दमघोष के श्रुतश्रवा से महाबली शिशुपाल उत्पन्न हुआ, यह पहले जन्म में दैत्यराज हिरण्यकशिपु था।

पृथुकीर्त्यां तु तनयः संजज्ञे वृद्धशर्मणः ॥२६॥
करूषाधिपतिर्वीरो दन्तवक्रो महाबलः ।

अर्थ—वृद्धशर्मा से पृथुकीर्ति के करूष देश का स्वामी महाबली वीर दन्तवक्र उत्पन्न हुआ।

पृथां दुहितरं चक्रे कुन्तिस्तां पाण्डुरावहत् ॥२७॥
यस्यां स धर्मविद् राजा धर्माज्जज्ञे युधिष्ठिरः ।
भीमसेनस्तथा वातादिन्द्राच्चैव धनंजयः ॥२८॥
लोकेऽप्रतिरथो वीरः शक्रतुल्यपराक्रमः ।

अर्थ—कुन्तिभोज ने जिन पृथा को अपनी पुत्री बना लिया था, उनका विवाह पाण्डु के साथ हुआ। उन पृथा के धर्म के जाननेवाले राजा युधिष्ठिर धर्म से उत्पन्न हुए और वायु से भीमसेन तथा इन्द्र से संसार के अनुपम वीर, इन्द्र के समान पराक्रमी धनंजय (अर्जुन) उत्पन्न हुए।

अनमित्राच्छिनिर्जज्ञे कनिष्ठाद् वृष्णिनन्दनात् ॥२९॥
शैनेयः सत्यकस्तस्माद् युयुधानश्च सात्यकिः ।

असङ्गो युयुधानस्य भूमिस्तस्याभवत् सुतः ॥३०॥
भूमेर्युगधरः पुत्र इति वंशः समाप्यते।

**अर्थ**—क्रोष्टा के सबसे छोटे पुत्र, सकल वृष्णिवंशियों को प्रसन्न करनेवाले अनमित्र से शिनि उत्पन्न हुए, उनसे शैनेय उपनाम सत्यक हुए और उनसे युयुधान उपनामवाले सात्यकि हुए। युयुधान के पुत्र असङ्ग हुए और असंग के पुत्र भूमि हुए। भूमि के पुत्र युगधर हुए। यहां पर क्रोष्टा का वंश समाप्त होता है।

उद्धवो देवभागस्य महाभागः सुतोऽभवत्।
पण्डितानां परं प्राहुर्देवश्रवसमुद्धवम् ॥३१।

**अर्थ**—(वसुदेव जी के भ्राता) देवभाग के उद्धव नामक महाभाग्यवान् पुत्र उत्पन्न हुए। ये उद्धव देवताओं के समान कीर्तिवाले एवं परम पण्डित के रूप में प्रसिद्ध हुए।

अश्मक्यां प्राप्तवान् पुत्रमनाधृष्टिर्यशस्विनम्।
निवृत्तशत्रुं शत्रुघ्नं देवश्रवा व्यजायत ॥३२॥

**अर्थ**—(वसुदेव जी के तीसरे भाई) अनाधृष्टि ने अश्मकी से यशस्वी नामक पुत्र को उत्पन्न किया तथा दूसरे भाई देवश्रवा ने शत्रुओं को हटानेवाले शत्रुघ्न नामक पुत्र को उत्पन्न किया।

देवश्रवाः प्रजातस्तु नैषादिर्यः प्रतिश्रुतः।
एकलव्यो महाराज निषादैः परिवर्धितः ॥३३॥

**अर्थ**--महाराज! (किसी कारणवश बालकपन में ही त्याग दिये जाने के कारण) इस देवश्रवा के पुत्र को निषादों ने पालकर बड़ा किया था, इसलिये यह निषादवंशी एकलव्य के नाम से प्रसिद्ध हुआ।

वत्सावते त्वपुत्राय वसुदेवः प्रतापवान्।
अद्भिर्ददौ सुतं वीरं शौरिः कौशिकमौरसम् ॥३४॥

**अर्थ**—शूरनन्दन प्रतापी वसुदेव जी ने (अपने छोटे भाई) पुत्रहीन वत्सावान् को अपना औरस पुत्र कौशिक जल से संकल्प करके दे दिया।

गण्डूषाय त्वपुत्राय विष्वक्सेनो ददौ सुतान्।
चारुदेष्णं सुचारुं च पञ्चालं कृतलक्षणम् ॥३५॥

**अर्थ**—(इसी प्रकार) श्रीकृष्ण ने (वसुदेव जी के दूसरे छोटे भाई) अपुत्र गण्डूष को चारुदेष्ण, सुचारु, पञ्चाल और कृतलक्षण नाम के अपने चार पुत्र दे दिये।

असंग्रामेण यो वीरो नावर्तत कदाचन ।
रौक्मिणेयो महाबाहुः कनीयान् पुरुषर्षभ ।।३६।।

अर्थ—पुरुषर्षभ ! रुक्मिणी के छोटे पुत्र महाभुज चारुदेष्ण युद्ध किए बिना (रणभूमि से) कभी नहीं लौटते थे ।

वायसानां सहस्राणि यं यान्तं पृष्ठतोऽन्वयुः ।
चारुमांसानि भोक्ष्यामश्चारुदेष्णहतानि तु ।।३७।।

अर्थ – उनके पीछे हजारों कौए इस इच्छा से जाते थे कि इनके द्वारा मारे गये शत्रुओं का चारु (स्वादिष्ट) मांस हम खायेंगे, (इस प्रकार कौओं को) चारु (स्वादिष्ट) भोजन देनेवाले होने से ये चारुदेष्ण कहलाये ।

तन्द्रिजस्तन्द्रिपालश्च सुतौ कनवकस्य तु ।
वीरश्चाश्वहनश्चैव वीरौ तावथ गृञ्जिमौ ।।३८।।

अर्थ - (वसुदेव जी के भाई) कनवक के तन्द्रिज और तन्द्रिपाल नामक दो पुत्र हुए तथा गृञ्जिम के वीर और अश्वहन नामक दो वीर पुत्र उत्पन्न हुए ।

श्यामपुत्रः शमीकस्तु शमीको राज्यमावहत् ।
जुगुप्समानो भोजत्वाद् राजसूयमवाप सः ।
अजातशत्रुः शत्रूणां जज्ञे तस्य विनाशनः ।।३९।।

अर्थ—(वसुदेव जी के भाई श्याम अपने छोटे भाई शमीक को अपने पुत्र के समान मानते थे । इस कारण) श्याम के पुत्र शमीक हुए । इन शमीक ने राज्य किया था, उन्होंने भोज होने के कारण (अर्थात् भोजवंशी एक वंश के और एक देश के ही राजा हैं—यह) निन्दा मानकर उन्होंने राजसूय (साम्राज्य) पाया था । शमीक के शत्रुनाशक अजातशत्रु नामक पुत्र हुआ ।

वसुदेवसुतान् वीरान् कीर्तयिष्यामि ताञ्छृणु ।।४०।।

अर्थ - अब मैं वसुदेव जी के वीर पुत्रों का वर्णन करता हूं, उसको आप सुनिये ।

वृष्णेस्त्रिविधमेतत् तु बहुशाखं महौजसम् ।
धारयन् विपुलं वंशं नानर्थैरिह युज्यते ।।४१।।

अर्थ—जो मनुष्य वृष्णि के बहुत-सी शाखाओंवाले, महापराक्रमी पुरुषों से सुशोभित इस तीन प्रकार के बड़े विशाल वंश के वृत्तान्त को मन में धारण करता हैं, वह इस संसार के अनर्थों से मुक्त रहता है ।

इति हरिवंशे वृष्णिवंशकीर्तनं नाम चतुस्त्रिंशोऽध्यायः ।। ३४।।

---

**वैशम्पायन उवाच—**

याः पत्न्यो वसुदेवस्य चतुर्दश वराङ्गनाः ।
पौरवी रोहिणी नाम इन्दिरा च तथा वरा ॥१॥
वैशाखी च तथा भद्रा सुनाम्नी चैव पञ्चमी ।
सहदेवा शान्तिदेवा श्रीदेवा देवरक्षिता ॥२॥
वृकदेव्युपदेवी च देवकी चैव सप्तमी ।
सुतनुर्वडवा चैव द्वे एते परिचारिके ॥३॥

**अर्थ—वैशम्पायन जी कहते हैं**—जनमेजय ! वसुदेव जी की जो चौदह सुन्दराङ्गी पत्नियां थीं, उनमें रोहिणी और रोहिणी से छोटी इन्दिरा, वैशाखी, भद्रा तथा पांचवीं सुनाम्नी—ये पांच पौरववंश की थीं तथा सहदेवा, शान्तिदेवा, श्रीदेवा, देवरक्षिता, वृकदेवी, उपदेवी और सातवीं देवकी—ये सात देवल की पुत्रियां थीं तथा सुतनु और वडवा—ये दो उनकी परिचर्या करनेवाली स्त्रियां थीं ।

पौरवी रोहिणी नाम बाह्लिकस्यात्मजाभवत् ।
ज्येष्ठा पत्नी महाराज दयिताऽऽनकदुन्दुभेः ॥४॥

**अर्थ**—महाराज ! पौरव-वंश की कुमारी रोहिणी (महाराज शन्तनु के बड़े भाई) बाह्लिक की पुत्री थीं, वे वसुदेव जी की प्रियतमा बड़ी पत्नी थीं ।

लेभे ज्येष्ठं सुतं रामं सारणं शठमेव च ।
दुर्दमं दमनं श्वभ्रं पिण्डारकमुशीनरम् ॥५॥
चित्रां नाम कुमारीं च रोहिणीतनया दश ।
चित्रा सुभद्रेति पुनर्विख्याता कुरुनन्दन ॥६॥

**अर्थ**—कुरुनन्दन ! रोहिणी के ज्येष्ठ पुत्र बलराम और (उनसे छोटे) सारण, शठ, दुर्दम, दमन, श्वभ्र, पिण्डारक और उशीनर हुए तथा चित्रा नाम की पुत्री उत्पन्न हुई । (यह चित्रा एक अप्सरा थी, जो रोहिणी के गर्भ से उत्पन्न होते ही मर गयी थी । इसने मरते समय अपने को धिक्कारा था कि मैं यादवकुल में जन्म धारण करके भी यदुवंश में उत्पन्न होनेवाले भगवान् की लीला को न देख सकी । इस वासना के कारण) यह चित्रा ही दूसरी बार सुभद्रा बनकर उत्पन्न हुई थी । इस प्रकार रोहिणी के दस सन्तानें उत्पन्न हुईं ।

वसुदेवाच्च देवक्यां जज्ञे शौरिर्महायशाः ।
रामाच्च निशठो जज्ञे रेवत्यां दयितः सुतः ॥७॥

**अर्थ**—वसुदेव से देवकी में महायशस्वी श्रीकृष्ण उत्पन्न हुए और बलराम जी से रेवती के द्वारा उनके प्रियपुत्र निशठ उत्पन्न हुए ।

सुभद्रायां रथी पार्थादभिमन्युरजायत ।
अक्रूरात् काशिकन्यायां सत्यकेतुरजायत ॥८॥

**अर्थ**—अर्जुन से सुभद्रा में रथी अभिमन्यु उत्पन्न हुए और अक्रूर से काशिराजकुमारी में सत्यकेतु उत्पन्न हुए ।

वसुदेवस्य भार्यासु महाभागासु सप्तसु ।
ये पुत्रा जज्ञिरे शूरा नामतस्तान् निबोध मे ॥९॥

**अर्थ**—वसुदेव जी की सात महाभाग्यवती पत्नियों में जो शूरवीर पुत्र उत्पन्न हुए, उनके नाम मैं आपसे कहता हूं, सुनिये ।

भोजश्च विजयश्चैव शान्तिदेवासुतावुभौ ।
वृकदेवः सुनामायां गदश्चास्तां सुतावुभौ ॥१०॥

**अर्थ**—भोज और विजय—ये दोनों शान्तिदेवा के पुत्र थे तथा वृकदेव और गद—ये दो सुनाम्नी के पुत्र थे ।

उपासङ्गवरं लेभे तनयं देवरक्षिता ।
अगावहं महात्मानं वृकदेवी व्यजायत ॥११॥

**अर्थ**—देवरक्षिता का पुत्र उपासंगवर हुए और वृकदेवी के पुत्र महात्मा अगावह हुए ।

कन्या त्रिगर्तराजस्य भर्ता वै शैशिरायणः ।
जिज्ञासां पौरुषे चक्रे न चस्कन्देऽथ पौरुषम् ॥१२॥

**अर्थ**—वृकदेवी त्रिगर्तराज की कन्या थीं । त्रिगर्तराज का भर्ता (पुरोहित) गर्गगोत्री शैशिरायण था । उसके साले ने, जो यादवों का पुरोहित था, यह जानना चाहा कि इसमें पुंस्त्व है अथवा नहीं, परन्तु (व्रतधारी होने से) उसका वीर्य स्खलित नहीं हुआ (इस पर उसके साले ने हास्यवश उसको मिथ्या ही नपुंसक घोषित कर दिया ।

कृष्णायससमप्रख्यो वर्षे द्वादशमे तथा ।
मिथ्याभिशप्तो गार्ग्यस्तु मन्युनाभिसमीरितः ॥१३॥

**अर्थ**—बारह वर्ष का नियम पूर्ण होने पर मिथ्या ही नपुंसकता का दोष लगाये जाने के कारण गर्गगोत्री शैशिरायण क्रोध में भर गये, इससे उनके शरीर का वर्ण लोहे के समान काला दीखने लगा ।

गोपकन्यामुपादाय मैथुनायोपचक्रमे ।
गोपाली त्वप्सरास्तस्य गोपस्त्रीवेषधारिणी ॥१४॥

अर्थ—उन्होंने एक गोपकन्या के साथ सहवास किया। वह स्त्री गोप-स्त्री का वेश धारण करनेवाली गोपाली नाम की अप्सरा थी।

धारयामास गार्ग्यस्य गर्भं दुर्धरमच्युतम्।
मानुष्यां गार्ग्यभार्यायां नियोगाच्छूलपाणिनः ॥१५॥
स कालयवनो नाम जज्ञे राजा महाबलः।
वृषपूर्वार्धकायास्तमवहम् वाजिनो रणे ॥१६॥

अर्थ—उसने गार्ग्य शैशिरायण के अच्युत और दुर्धर वीर्य को धारण कर लिया। उस मनुष्य का वेश धारण करनेवाली गार्ग्य की भार्या से शिव जी की आज्ञा से कालयवन नामक प्रसिद्ध महाबली राजा उत्पन्न हुआ था, बैलों के समान आधे शरीरवाले घोड़े युद्ध में उसके वाहन बनते थे।

अपुत्रस्य स राज्ञस्तु ववृधेऽन्तःपुरे शिशुः।
यवनस्य महाराज स कालयवनोऽभवत् ॥१७॥

अर्थ—महाराज! एक यवन राजा सन्तानहीन था, उसके अन्तःपुर में वह बालक पलने लगा। इस प्रकार वह कालयवन के नाम से प्रसिद्ध हुआ।

स युद्धकामी नृपतिः पर्यपृच्छद् द्विजोत्तमान्।
वृष्ण्यन्धककुलं तस्य नारदोऽकथयद् विभुः ॥१८॥

अर्थ—वह राजा युद्ध करने की इच्छा से प्रेरित हो ब्राह्मणों से (अपने समान योद्धाओं को) पूछने लगा। सब जगह पहुंचनेवाले नारद जी ने उसे वृष्णि और अन्धककुल के वीरों को उसके समान योद्धा बताया।

अक्षौहिण्या तु सैन्यस्य मथुरामभ्ययात् तदा।
दूतं सम्प्रेषयामास वृष्ण्यन्धकनिवेशनम् ॥१९॥

अर्थ—तब वह एक अक्षौहिणी सेना लेकर मथुरापुरी पर चढ़ आया। उसने वृष्णि और अन्धकों के भवन में दूत को भेजा।

ततो वृष्ण्यन्धकाः कृष्णं पुरस्कृत्य महामतिम्।
समेता मन्त्रयामासुर्यवनस्य भयात् तदा ॥२०॥

अर्थ—तब कालयवन के डर से वृष्णि और अन्धकों ने महामति श्रीकृष्ण के सभापतित्व में इकट्ठे होकर मन्त्रणा की।

कृत्वा च निश्चयं सर्वे पलायनपरायणाः।
विहाय मथुरां रम्यां मानयन्तः पिनाकिनम् ॥२१॥
कुशस्थलीं द्वारवतीं निवेशयितुमीप्सवः।

**अर्थ**—तब वे सब निश्चय करके शिव जी की मनौती मानते हुए कुशस्थली द्वारका को बसाने की इच्छा से रमणीय मथुरापुरी को त्यागकर भाग खड़े हुए।

इति कृष्णस्य जन्मेदं यः शुचिर्नियतेन्द्रियः।
पर्वसु श्रावयेद् विद्वाननृणः स सुखी भवेत् ॥२२॥

**अर्थ**—जो विद्वान् पुरुष इन्द्रियों को वश में करके पवित्र होकर श्रीकृष्ण के जन्म की इस कथा को पर्व के समय सुनाता है, उसका ऋण चुक जाता है और उसको परम सुख की प्राप्ति होती है।

इति हरिवंशे श्रीकृष्णजन्मानुकीर्तनं नाम पञ्चत्रिंशोऽध्यायः ॥३५॥

————

# २१. क्रोष्टुवंशानुचरितम्

**वैशम्पायन उवाच—**

क्रोष्टोरेवाभवत् पुत्रो वृजिनीवान् महायशाः।
वृजिनीवत्सुतश्चापि स्वाहिः स्वाहाकृतां वरः ॥१॥

**अर्थ—वैशम्पायन जी कहते हैं**—जनमेजय ! (यदु के पुत्र) क्रोष्टा के ही एक वृजिनीवान् नामक महायशस्वी पुत्र हुए, वृजिनीवान् के पुत्र स्वाहि हुए, वे स्वाहा अर्थात् होम करनेवालों में श्रेष्ठ थे (जिस प्रकार क्रोष्टा के वंश में श्रीकृष्ण उत्पन्न हुए, उसी प्रकार क्रोष्टा के वंश में सत्यभामा आदि भी हुईं; क्षत्रियों में एक कुल के होने पर भी सात पीढ़ियां बीत जाने के बाद पुरोहित के गोत्र से यजमान क्षत्रिय का भी गोत्र बदल जाता है और इस प्रकार गोत्र-भेद से उनमें विवाह हो जाते हैं। इस अध्याय में क्रोष्टा के वंश की उस शाखा का वर्णन किया जायेगा, जिसमें महालक्ष्मी की अवतार ईश्वरी-शक्ति श्री रुक्मिणी जी उत्पन्न हुई थीं।

स्वाहिपुत्रोऽभवद् राजा रुषद्गुर्वदतां वरः।
महाक्रतुभिरीजे यो विविधैर्भूरिदक्षिणैः ॥२॥
सुतप्रसूतिमन्विच्छन् रुषद्गुः सोऽग्र्यमात्मजम्।
जज्ञे चित्ररथस्तस्य पुत्रः कर्मभिरन्वितः ॥३॥

अर्थ—स्वाहि के पुत्र रुषद्गु हुए, वे अच्छे बोलनेवाले थे और बड़ी-बड़ी दक्षिणावाले अनेक प्रकार के महायज्ञ करते रहते थे। उनकी यह इच्छा थी कि मेरे यहां पुत्र-पौत्रोंवाला श्रेष्ठ पुत्र उत्पन्न हो; इस प्रकार पुत्रेष्टि आदि यज्ञ कर्म करते-करते उनके यहां चित्ररथ नामक पुत्र उत्पन्न हुआ।

आसीच्चैत्ररथिर्वीरो यज्वा विपुलदक्षिणः।
शशबिन्दुः परं वृत्तं राजर्षीणामनुष्ठितः ॥४॥

अर्थ—चित्ररथ के पुत्र वीर शशबिन्दु हुए, वे बड़ी-बड़ी दक्षिणावाले यज्ञ करके राजर्षियों के श्रेष्ठ आचरण का पालन करते रहते थे।

पृथुश्रवाः पृथुयशा राजाऽऽसीच्छशबिन्दुजः।
शंसन्ति च पुराणज्ञाः पार्थश्रवसमुत्तरम् ॥५॥

अर्थ—शशबिन्दु के पुत्र महायशस्वी राजा पृथुश्रवा हुए, पुराणों के जाननेवाले कहते हैं कि पृथुश्रवा के पुत्र उत्तर हुए।

अनन्तरं सुयज्ञस्तु सुयज्ञतनयोऽभवत्।
उशतो यज्ञमखिलं स्वधर्ममुशतां वरः ॥६॥

अर्थ—उत्तर के पुत्र सुयज्ञ हुए, सुयज्ञ के पुत्र उशत हुए, कामना करनेवालों में श्रेष्ठ उशत अपने सम्पूर्ण धर्मों और यज्ञ का अनुष्ठान सदा करना चाहते थे।

शिनेयुरभवत् सूनुरुशतः शत्रुतापनः।
मरुत्तस्तस्य तनयो राजर्षिरभवन्नृप ॥७॥

अर्थ—राजन्! उशत के पुत्र शत्रुओं को संतप्त करनेवाले शिनेयु हुए, उनके पुत्र राजर्षि मरुत्त हुए।

मरुत्तोऽलभत ज्येष्ठं सुतं कम्बलबर्हिषम्।
चचार विपुलं धर्मममर्षात् प्रेत्यभागपि ॥८॥

अर्थ—मरुत्त के ज्येष्ठ पुत्र कम्बलबर्हिष हुए। जो धर्म मरण के अनन्तर फल देता है, अपने जीवन में ही वह उस महान् धर्म का आचरण करने लगे।

सुतप्रसूतिमिच्छन् वै सुतं कम्बलबर्हिषः।
बभूव रुक्मकवचः शतप्रसवतः सुतः ॥९॥

अर्थ—कम्बलबर्हिष बेटों-पोतों से समृद्ध पुत्र पाना चाहते थे, उस धर्मानुष्ठान के फलरूप उनके रुक्मकवच नाम का पुत्र उत्पन्न हुआ, जो सौ बालकों में अकेला बचा था।

निहत्य रुक्मकवचः शतं कवचिनां रणे ।
धन्विनां निशितैर्बाणैरवाप श्रियमुत्तमाम् ।।१०।।

**अर्थ**—रुक्मकवच ने युद्ध में धनुष और कवच को धारण करनेवाले सौ योद्धाओं को मारकर बड़ी भारी कीर्ति पायी थी ।

जज्ञेऽथ रुक्मकवचात् पराजित् परवीरहा ।
जज्ञिरे पञ्च पुत्रास्तु महावीर्याः पराजितः ।।११।।

**अर्थ**—रुक्मकवच के पुत्र शत्रुवीरनाशक पराजित् हुए, पराजित् के महावीर्यवान् पांच पुत्र हुए ।

रुक्मेषुः पृथुरुक्मश्च ज्यामघः पालितो हरिः ।
पालितं च हरिं चैव विदेहेभ्यः पिता ददौ ।।१२।

**अर्थ**—(उनके नाम इस प्रकार हैं—) रुक्मेषु, पृथुरुक्म, ज्यामघ, पालित और हरि । उनके पिता पराजित् ने पालित और हरि को विदेह देश का पालन करने के लिए वहां के राजा को दे दिया था ।

रुक्मेषुरभवद् राजा पृथुरुक्मस्य संश्रितः ।
ताभ्यां प्रव्राजितो राज्याज्ज्यामघोऽवसदाश्रमे ।।१३।।

**अर्थ**—रुक्मेषु पृथुरुक्म का आश्रय लेकर राजा बन गया था, उन दोनों ने ज्यामघ को राज्य से निकाल दिया, तब ज्यामघ आश्रम में रहने लगा ।

प्रशान्तः स वनस्थस्तु ब्राह्मणैश्चावबोधितः ।
जिगाय रथमास्थाय देशमन्यं ध्वजी रथी ।।१४।।

**अर्थ**—वह (वृद्ध होने से) शान्त होकर वन में पड़ा रहता था, परन्तु ब्राह्मणों ने तप आदि के द्वारा उसको बलवान् बना दिया, तब रथी ज्यामघ ने एक ध्वजावाले रथ में वैठकर एक-दूसरे देश को जीत लिया ।

नर्मदाकूलमेकाकी नगरीं मृत्तिकावतीम् ।
ऋक्षवन्तं गिरिं जित्वा शुक्तिमत्यामुवास सः ।।१५।।

**अर्थ** - उसने अकेले ही नर्मदा के किनारे की मृत्तिकावती नगरी और ऋक्षवान् पर्वत को जीतकर शुक्तिमतीपुरी में अपना निवास-स्थान बनाया ।

ज्यामघस्याभवद् भार्या शैब्या बलवती सती ।
अपुत्रोऽपि च राजा स नान्यां भार्यामविन्दत ।।१६।।

**अर्थ**—जामघ की भार्या सती शैव्या बड़ी बलवती थी, इसलिये ज्यामघ ने पुत्रहीन होने पर भी दूसरा विवाह नहीं किया ।

तस्यासीद् विजयो युद्धे तत्र कन्यामवाप सः।
भार्यामुवाच संत्रस्तः स्नुषेति स नरेश्वरः ॥१७॥

अर्थ—उसने एक युद्ध में विजय होने पर एक कन्या प्राप्त की, उस नरेश्वर ने डरकर अपनी भार्या से उस कन्या को स्नुषा (पुत्रवधू) कह दिया।

एतच्छ्रुत्वाब्रवीद् देवी कस्य चेयं स्नुषेति वै।
अब्रवीत् तदुपश्रुत्य ज्यामघो राजसत्तमः ॥१८॥

अर्थ—यह सुनकर पत्नी ने पूछा—'यह किसकी पुत्रवधू है ?' तब राजसत्तम ज्यामघ ने प्रतिज्ञा करके कहा—

यस्ते जनिष्यते पुत्रस्तस्य भार्योपदानवी।
उग्रेण तपसा तस्याः कन्यायाः सा व्यजायत।
पुत्रं विदर्भं सुभगा शैब्या परिणता सती ॥१९॥

अर्थ—तेरे जो पुत्र उत्पन्न होगा, यह उपदानवी कन्या उसकी भार्या होगी। उस उपदानवी कन्या की उग्र तपस्या के प्रभाव से सौभाग्यवती शैब्या के बूढ़ी होने पर भी उसके विदर्भ नाम का एक पुत्र उत्पन्न हुआ।

राजपुत्र्यां तु विद्वांसौ स्नुषायां क्रथकौशिकौ।
पश्चाद् विदर्भोऽजनयच्छूरौ रणविशारदौ ॥२०॥

अर्थ—तदनन्तर विदर्भ ने उस राजकुमारी से शूरवीर एवं रणविशारद क्रथ और कौशिक नाम के दो विद्वान्-पुत्रों को उत्पन्न किया।

लोमपादं तृतीयं तु पुत्रं परमधार्मिकम्।
लोमपादात्मजो बभ्रुराहृतिस्तस्य चात्मजः ॥२१॥

अर्थ—तथा लोमपाद नामक एक तीसरे परमधार्मिक पुत्र को भी उत्पन्न किया। लोमपाद के पुत्र बभ्रु हुए और उनके पुत्र हुए आहृति।

आहृतेः कौशिकश्चैव विद्वान् परमधार्मिकः।
चेदिः पुत्रः कौशिकस्य तस्माच्चैद्या नृपाः स्मृताः ॥२२॥

अर्थ—आहृति के पुत्र कौशिक हुए, वे विद्वान् और परमधार्मिक थे। कौशिक के पुत्र चेदि हुए, इस कारण उनके वंश के राजा चैद्य कहलाते हैं।

भीमो विदर्भस्य सुतः कुन्तिस्तस्यात्मजोऽभवत्।
कुन्तेर्धृष्टसुतो जज्ञे रणधृष्टः प्रतापवान्।
धृष्टस्य जज्ञिरे शूरास्त्रयः परमधार्मिकाः ॥२३॥
आवन्तश्च दशार्हश्च बली विषहरश्च यः।
दशार्हस्य सुतो व्योमा व्योम्नो जीमूत उच्यते ॥२४॥

**अर्थ**—विदर्भ का (चौथा) पुत्र भीम हुआ, भीम के पुत्र कुन्ति हुए, कुन्ति के रण में ढीठ एवं प्रतापवान् धृष्ट नामक पुत्र हुए। धृष्ट के शूरवीर एवं परम-धार्मिक आवन्त, दशार्ह और बलवान् विषहर नामक तीन पुत्र उत्पन्न हुए। दशार्ह के पुत्र व्योम हुए और व्योम के पुत्र जीमूत हुए।

जीमूतपुत्रो बृहतिस्तस्य भीमरथः सुतः।
अथ भीमरथस्यासीत् पुत्रो नवरथस्तथा ॥२५॥

**अर्थ**—जीमूत के पुत्र बृहति और उनके पुत्र भीमरथ हुए, भीमरथ के पुत्र नवरथ हुए।

तस्य चासीद् दशरथः शकुनिस्तस्य चात्मजः।
तस्मात् करम्भः कारम्भिर्देवरातोऽभवन्नृपः ॥२६॥

**अर्थ**—नवरथ के पुत्र दशरथ हुए और दशरथ के पुत्र शकुनि हुए। शकुनि के पुत्र करम्भ हुए और करम्भ के पुत्र राजा देवरात हुए।

देवक्षत्रोऽभवत् तस्य दैवक्षत्रिर्महायशाः।
देवगर्भसमो जज्ञे देवक्षत्रस्य नन्दनः ॥२७॥
मधूनां वंशकृद् राजा मधुर्मधुरवागपि।
मधोर्जज्ञेऽथ वैदर्भ्यां पुत्रो मरुवसास्तथा ॥२८॥

**अर्थ**—देवरात के पुत्र देवक्षत्र हुए। देवक्षत्र को आनन्द देनेवाले महा-यशस्वी दैवक्षत्रि हुए, वे देवताओं के बालकों के समान तेजस्वी थे। उनका नाम मधु था, उनकी वाणी भी मधुर थी, वह मधु-वंश के प्रवर्तक राजा थे। मधु के वैदर्भी से मरुवस नामक पुत्र उत्पन्न हुए।

आसीन्मरुवसः पुत्रः पुरुद्वान् पुरुषोत्तमः।
मधुर्जज्ञेऽथ वैदर्भ्यां भद्रवत्यां कुरूद्वहः ॥२९॥
ऐक्ष्वाकी चाभवद् भार्या सत्त्वांस्तस्यामजायत।
सत्त्वान् सर्वगुणोपेतः सात्त्वतां कीर्तिवर्धनः ॥३०॥

**अर्थ** मरुवस के पुत्र पुरुषोत्तम पुरुद्वान् हुए। उन्हीं के विदर्भ-राजकुमारी भद्रवती से कुरुवंश की वृद्धि करनेवाला मधु नामक पुत्र हुआ और इक्ष्वाकुवंश की भार्या से सत्त्वान् नामक पुत्र उत्पन्न हुआ। सत्त्वान् सर्वगुणसम्पन्न थे और अपने वंश में सात्त्वतों की कीर्ति को बढ़ानेवाले थे।

इमां विसृष्टिं विज्ञाय ज्यामघस्य महात्मनः।
युज्यते परया कीर्त्या प्रजावांश्च भवेन्नरः ॥३१॥

**अर्थ**—मनुष्य महात्मा ज्यामघ के इस वंश का परिचय प्राप्त कर परम-कीर्ति पाता है और संतानवान् हो जाता है।

इति हरिवंशे षट्त्रिंशोऽध्यायः ॥३६॥

**वैशम्पायन उवाच—**

सत्त्वतात्सत्त्वसम्पन्नान् कौशल्या सुषुवे सुतान् ।
भजिनं भजमानं च दिव्यं देवावृधं नृपम् ॥१॥
अन्धकं च महाबाहुं वृष्णिं च यदुनन्दनम् ।
तेषां विसर्गाश्चत्वारो विस्तरेणेह ताञ्छृणु ॥२॥

अर्थ—वैशम्पायन जी कहते हैं—जनमेजय ! सत्त्वान् उपनामवाले सत्त्वत से कौशिल्या ने भजिन, भजमान, दिव्य राजा देवावृध, महाभुज अन्धक और यदुनन्दन वृष्णि नामक सत्त्वसम्पन्न पुत्रों को उत्पन्न किया । उनके चार वंश चले, उनको आप विस्तारपूर्वक सुनिये ।

भजमानस्य सृंजय्यौ बाह्यकाथोपबाह्यका ।
आस्तां भार्ये तयोस्तस्माज्जज्ञिरे बहवः सुताः ॥३॥

अर्थ—भजमान के सृञ्जय की पुत्री बाह्यका और उपबाह्यका नामवाली दो स्त्रियां थीं । उनसे उसके बहुत से पुत्र उत्पन्न हुए ।

कृमिश्च क्रमश्चैव धृष्टः शूरः पुरंजयः ।
एते बाह्यकसृञ्जय्यां भजमानाद् विजज्ञिरे ॥४॥

अर्थ—भजमान के सृञ्जय की पुत्री बाह्यका से कृमि, क्रम, धृष्ट, शूर और पुरंजय नामक पुत्र उत्पन्न हुए ।

अयुताजित्सहस्राजिच्छताजिच्चाथ दाशकः ।
उपबाह्यकसृञ्जय्यां भजमानाद् विजज्ञिरे ॥५॥

अर्थ—उन्हीं भजमान के सृञ्जय की दूसरी पुत्री उपबाह्यका से अयुताजित्, सहस्राजित्, शताजित् और दाशक नामक पुत्र उत्पन्न हुए ।

यज्वा देवावृधो राजा चचार विपुलं तपः ।
पुत्रः सर्वगुणोपेतो मम स्यादिति निश्चितः ॥६॥

अर्थ—यज्ञ करनेवाले राजा देवावृध ने 'मेरे सर्वगुणसम्पन्न पुत्र हो' इस निश्चय के साथ बड़ा भारी तप किया ।

संयुज्यात्मानमेवं तु पर्णाशाया जलं स्पृशन् ।
सदोपस्पृशतस्तस्य चकार प्रियमापगा ॥७॥

अर्थ—वे राजा अपने चित्त में ऐसा निश्चय करके पर्णाशा नदी के जल में खड़े होकर तप करते थे । अपने जल में सदा खड़े रहनेवाले राजा का नदी ने प्रिय करना चाहा ।

चिन्तयाभिपरीता सा जगामैकाभिनिश्चयम् ।
कल्याणत्वान्नरपतेस्तस्य सा निम्नगोत्तमा ॥८॥
नाध्यगच्छत तां नारीं यस्यामेवंविधः सुतः ।
जायेत तस्मात् स्वयं हन्त भवाम्यस्य सहव्रता ॥९॥

**अर्थ**—उसको ऐसी कोई स्त्री नहीं दीखी, जिसके द्वारा ऐसा पुत्र उत्पन्न हो सके। तब चिन्ता से व्याप्त होकर नदियों में श्रेष्ठ पर्णाशा ने उस राजा का कल्याण करने के लिए एकान्त में यह विचार किया कि 'मैं ही इनकी सहचारिणी बन जाऊं।'

अथ भूत्वा कुमारी सा बिभ्रती परमं वपुः ।
वरयामास नृपतिं तामियेष च स प्रभुः ॥१०॥

**अर्थ**—तदनन्तर उसने कुमारी बनकर श्रेष्ठ रूप धारण करके राजा को वरना चाहा और राजा ने भी उसको पत्नी बनाना चाहा।

तस्यामाधत्त गर्भं च तेजस्विनमुदारधीः ।
अथ सा दशमे मासि सुषुवे सरितां वरा ॥११॥
पुत्रं सर्वगुणोपेतं बभ्रुं देवावृधान्नृपात् ।

**अर्थ**—तदनन्तर उस महाबुद्धिमान् राजा ने उसमें तेजस्वी गर्भ को स्थापित किया, तब उस नदियों में श्रेष्ठ पर्णाशा ने राजा देवावृध के वीर्य से दसवें महीने में सर्वगुणसम्पन्न बभ्रु नामक पुत्र उत्पन्न किया।

अत्र वंशे पुराणज्ञा गायन्तीति परिश्रुतम् ॥१२॥
गुणान् देवावृधस्याथ कीर्तयन्तो महात्मनः ।
यथैवाग्रे समं दूरात् पश्याम च तथान्तिके ॥१३॥

**अर्थ**—सुना है कि इस वंश के प्राचीन इतिहास को जाननेवाले लोग महात्मा देवावृध के गुणों का इस प्रकार कीर्तन करते थे, 'महात्मा देवावृध को हम जैसे दूर देश में देखते थे, वैसे ही उनको समीप में देखते थे अर्थात् उनको योगबल से अनेक रूप धारण कर सर्वत्र एक रूप में विराजमान देखते थे।

बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ।
षष्टिश्च षट् च पुरुषाः सहस्राणि च सप्त च ॥१४॥
एतेऽमृतत्वं सम्प्राप्ता बभ्रुर्देवावृधावपि ।

**अर्थ**—बभ्रु मनुष्यों में श्रेष्ठ हैं और देवावृध देवता के समान हैं, सात हजार छासठ पुरुषों सहित बभ्रु और देवावृध अमृतत्व को प्राप्त हो गये अर्थात् संग्रामभूमि में अपने प्राणों को त्यागकर ब्रह्मलोक में पहुंच गये।

यज्वा दानपतिर्विद्वान् ब्रह्मण्यः सुदृढायुधः ॥१५॥
कीर्तिमांश्च महातेजाः सात्त्वतानां महावरः ।
तस्यान्ववायः सुमहान् भोजा ये मार्तिकावताः ॥१६॥

**अर्थ**—राजा बभ्रु दानियों में श्रेष्ठ, यज्ञ करनेवाले, विद्वान् और ब्राह्मण-भक्त थे। उनके आयुध बड़े दृढ़ थे। वे कीर्तिमान्, महातेजस्वी तथा सात्त्वत-वंशियों में परमश्रेष्ठ थे। उन बभ्रु का वंश बहुत बड़ा है, मार्तिकावतभोज उनकी ही सन्तानों में हैं।

अन्धकात् काश्यदुहिता चतुरोऽलभतात्मजान् ।
कुकुरं भजमानं च शमिं कम्बलबर्हिषम् ॥१७॥

**अर्थ**—अन्धक से काशिराज (दृढाश्व) की पुत्री के द्वारा कुकुर, भजमान, शमि और कम्बलबर्हिष नामक चार पुत्र उत्पन्न हुए।

कुकुरस्य सुतो धृष्णुर्धृष्णोस्तु तनयस्तथा ।
कपोतरोमा तस्याथ तैत्तिरिस्तनयोऽभवत् ॥१८॥

**अर्थ**—कुकुर के पुत्र धृष्णु और धृष्णु के पुत्र कपोतरोमा हुए तथा उनके पुत्र तैत्तिरि हुए।

जज्ञे पुनर्वसुस्तस्मादभिजित् तु पुनर्वसोः ।
तस्य वै पुत्रमिथुनं बभूवाभिजितः किल ॥१९॥

**अर्थ**—तैत्तिरि के पुत्र पुनर्वसु हुए, पुनर्वसु के पुत्र अभिजित् हुए, उन अभिजित् के एक पुत्र और एक पुत्री – ये दो जुड़वां सन्तानें हुईं, ऐसी बात सुनी जाती है।

आहुकश्चाहुकी चैव ख्यातौ ख्यातिमतां वरौ ।
इमां चोदाहरन्त्यत्र गाथां प्रति तमाहुकम् ॥२०॥

**अर्थ**—ख्यातिप्राप्त लोगों में श्रेष्ठ वे दोनों आहुक और आहुकी के नाम से प्रसिद्ध हुए। इन आहुक के सम्बन्ध में (मनुष्य) इस गाथा को गाया करते हैं।

श्वेतेन परिवारेण किशोरप्रतिमो महान् ।
अशीतिचर्मणा युक्तः स नृपः प्रथमं व्रजेत् ॥२१॥

**अर्थ**—वह तरुण घोड़े के समान उत्साही राजा जब अपने विशुद्ध परिवार के साथ चलते थे, तब उनके (काठ के बने) राजसिंहासन को अस्सी मनुष्य उठाया करते थे।

नापुत्रवान् नाशतदो नासहस्रसतायुषः ।
नाशुद्धकर्मा नायज्वा यो भोजमभितो व्रजेत् ॥२२॥

**अर्थ**—उन भोज के साथ उन्हें घेरकर चलनेवाले लोगों में ऐसा कोई नहीं था, जो पुत्रहीन हो अथवा सैकड़ों की दक्षिणा देनेवाला न हो अथवा सैकड़ों-सहस्रों वर्षों की आयुवाला न हो अथवा अशुद्ध-कर्म करनेवाला हो तथा यज्ञ करनेवाला न हो।

पूर्वस्यां दिशि नागानां भोजस्येत्यनुमोदनम् ।
सोपासङ्गानुकर्षाणां ध्वजिनां सवरूथिनाम् ॥२३॥
रथानां मेघघोषाणां सहस्राणि दशैव तु ।
रूप्यकाञ्चनकक्षाणां सहस्राणि दशापि च ॥२४॥

**अर्थ**—पूर्व दिशा में राजा भोज (आहुक) का अभिनन्दन करने के लिये चांदी और सोने की सांकलों से बांधे जानेवाले दस हजार हाथी आते थे तथा उपासङ्ग (जुआ), अनुकर्ष (रथ के नीचे का काष्ठ) और वरूथ (रथत्राण कवच) वाले एवं मेघों की भांति घोष करनेवाले ध्वजाधारी दस हजार रथ उनका स्वागत करने के लिये आते थे ।

तावन्त्येव सहस्राणि उत्तरस्यां तथा दिशि ।
आ भूमिपालान् भोजाः स्वानुपतिष्ठन्किङ्किणीकिणः ॥२५॥

**अर्थ**—उतते ही हजार रथ और हाथी उत्तर तथा अन्य दिशाओं में भी राजा आहुक का अभिनन्दन करने के लिए आते थे । भोजवंशी यादव सब सामन्तों को वश में करके आहुक की उपासना करते थे । राजा आहुक ने उन सबके रथ सोने की घंटियों-घुंघुरुओंवाले बनवा दिये थे ।

आहुकीं चाप्यवन्तिभ्यः स्वसारं ददुरन्धकाः ।
आहुकस्य तु काश्यायां द्वौ पुत्रौ सम्बभूवतुः ॥२६॥
देवकश्चोग्रसेनश्च देवपुत्रसमावुभौ ।

**अर्थ**—अन्धकवंशियों ने आहुक की बहन आहुकी को अवन्ति से राजवंश में ब्याह दी । आहुक के काशिराज की पुत्री से देवकुमारों के समान सुन्दर देवक और उग्रसेन नामक दो पुत्र उत्पन्न हुए ।

देवकस्याभवन्पुत्राश्चत्वारस्त्रिदशोपमाः ॥२७॥
देववानुपदेवश्च सुदेवो देवरक्षितः ।

**अर्थ**—देवक के देवकुमारों–जैसे देववान्, उपदेव, सुदेव और देवरक्षित नाम के चार पुत्र थे ।

कुमार्यः सप्त चाप्यासन् वसुदेवाय ता ददौ ॥२८॥
देवकी शान्तिदेवा च सुदेवा देवरक्षिता ।
वृकदेव्युपदेवी च सुनासी चैव सप्तमी ॥२९॥

**अर्थ**—उन्हीं के देवकी, शान्तिदेवा, सुदेवा, देवरक्षिता, वृकदेवी, उपदेवी और सातवीं सुनासी—इस प्रकार सात पुत्रियां थीं, देवक ने उन सबका विवाह वसुदेव जी के साथ कर दिया था ।

नवोग्रसेनस्य सुतास्तेषां कंसस्तु पूर्वजः ।
न्यग्रोधश्च सुनामा च कङ्कः शङ्कुः सुभूमिपः ॥३०॥
राष्ट्रपालोऽथ सुतनुरनाधृष्टिश्च पुष्टिमान् ।
तेषां स्वसारः पञ्चाऽऽसन् कंसा कंसवती तथा ॥३१॥

सुतनू राष्टपाली च कङ्का चैव वराङ्गना।
उग्रसेनः सहापत्यो व्याख्यातः कुकुरोद्भवः ॥३२॥

अर्थ—उग्रसेन के नौ पुत्र थे, उनमें कंस सबसे बड़ा था। शेष के नाम इस प्रकार हैं - न्यग्रोध, सुनामा, कङ्क. सुभूमिप, शङ्कु, राष्ट्रपाल, सुतनु, अनाधृष्टि और पुष्टिमान्। इनकी कंसा, कंसवती, सुतनू, राष्ट्रपाली और कङ्का नाम की पांच सुन्दराङ्गी बहिनें थीं। इस प्रकार कुकुरवंश में उत्पन्न हुए उग्रसेन और उनकी सन्तान का वर्णन किया गया।

कुकुराणामिमं वंशं धारयन्नमितौजसाम्।
आत्मनो विपुलं वंशं प्रजावानाप्नुयान्नरः ॥३३॥

अर्थ—जो मनुष्य इन अमिततेजस्त्री कुकुरों के वंश का वर्णन सुनता है, वह सन्तान पाता है तथा उसके वंश की बड़ी वृद्धि होती है।

इति हरिवंशे सप्तत्रिंशोऽध्यायः ॥३७॥

---

**वैशम्पायन उवाच—**

भजमानस्य पुत्रोऽथ रथमुख्यो विदूरथः।
राजाधिदेवः शूरस्तु विदूरथसुतोऽभवत् ॥१॥

अर्थ—**वैशम्पायन जी कहते हैं**—राजन्! अन्धक पुत्र भजमान के रथियों में मुख्य विदूरथ नामक पुत्र हुआ। विदूरथ के पुत्र शूरवीर राजाधिदेव हुए।

राजाधिदेवस्य सुता जज्ञिरे वीर्यवत्तराः।
दत्तातिदत्तबलिनौ शोणाश्वः श्वेतवाहनः ॥२॥
शमी च दण्डशर्मा च दण्डशत्रुश्च शत्रुजित्।
श्रवणा च श्रविष्ठा च स्वसारौ सम्बभूवतुः ॥३॥

अर्थ—राजाधिदेव के बलवान् दत्त और अधिदत्त, श्रोणाश्व, श्वेतवाहन, शमी, दण्डशर्मा, दण्डशत्रु और शत्रुजित् नामक परम बलवान् पुत्र उत्पन्न हुए और श्रवणा तथा श्रविष्ठा नाम की दो कन्याएं हुई थीं।

शमीपुत्रः प्रतिक्षत्रः प्रतिक्षत्रस्य चात्मजः।
स्वयंभोजः स्वयंभोजाद्धृदीकः सम्बभूव ह ॥४॥

अर्थ—शमी के पुत्र प्रतिक्षत्र हुए, प्रतिक्षत्र के पुत्र स्वयंभोज और स्वयंभोज के पुत्र हृदीक हुये।

तस्य पुत्रा बभूवुर्हि सर्वे भीमपराक्रमाः।
कृतवर्माग्रजस्तेषां शतधन्वाथ मध्यमः ॥५॥

अर्थ—हृदीक के सभी पुत्र भयंकर पराक्रमी थे, उनमें कृतवर्मा सबसे पहले उत्पन्न हुए और शतधन्वा उनके मझले पुत्र थे।

देवर्षेर्वचनात् तस्य भिषग् वैतरणश्च यः।
सुदान्तश्च विदान्तश्च कामदा कामदन्तिका ॥६॥

**अर्थ**—देवर्षि च्यवन के वचन से शतधन्वा के भिषक्, वैतरण, सुदान्त एवं विदान्त नामक चार पुत्र उत्पन्न हुए तथा कामदा और कामदन्तिका नाम की दो पुत्रियां उत्पन्न हुईं।

देववांश्चाभवत् पुत्रो विद्वान् कम्बलबर्हिषः।
असमौजास्तथा वीरो नासमौजाश्च तावुभौ ॥७॥

**अर्थ**—(अन्धक-पुत्र) कम्बलबर्हिष के पुत्र विद्वान् देववान् हुए तथा वीर असमौजा तथा नासमौजा नामक दो पुत्र और हुए।

अजातपुत्राय सुतान् प्रददावसमौजसे।
सुदंष्ट्रं चारुरूपं च कृष्णमित्यन्धकास्त्रयः ॥८॥

**अर्थ**—अन्धक के (कुकुर आदि के अतिरिक्त) सुदंष्ट्र, चारुरूप और कृष्ण नाम के तीन पुत्र (और) थे। अन्धक ने उन तीनों पुत्रों को पुत्रहीन असमौजा को दे दिया।

एते चान्ये च बहवो अन्धकाः कथितास्तव।
अन्धकानामिमं वंशं धारयेद् यस्तु नित्यशः ॥९॥
आत्मनो विपुलं वंशं लभते नात्र संशयः।

**अर्थ**—इनका तथा और भी बहुत-से अन्धकवंशी राजाओं का आपसे वर्णन कर दिया। जो पुरुष नित्यप्रति अन्धकों के इस वंश का वर्णन सुनता है, उसका वंश अति विस्तृत हो जाता है, इसमें कुछ सन्देह नहीं है।

गान्धारी चैव माद्री च क्रौष्टुभार्ये बभूवतुः ॥१०॥
गान्धारी जनयामास अनमित्रं महाबलम्।
माद्री युधाजितं पुत्रं ततो वै देवमीढुषम् ॥११॥

**अर्थ**—यदुपुत्र क्रोष्टा के गान्धारी और माद्री नाम की दो भार्याएं थीं। गान्धारी के पुत्र बहाबली अनमित्र हुए तथा माद्री के पुत्र युधाजित् और देवमीढ्वान् हुए।

अनमित्रममित्राणां जेतारमपराजितम्।
अनमित्रसुतो निघ्नो निघ्नतो द्वौ बभूवतुः ॥१२॥
प्रसेनश्चाथ सत्राजिच्छत्रुसेनाजितावुभौ।

**अर्थ**—अपराजित् अनमित्र शत्रुओं को जीतनेवाले थे। अनमित्र के पुत्र निघ्न हुए, निघ्न के प्रसेन और सत्राजित् नाम के दो पुत्र उत्पन्न हुए, वे दोनों शत्रुओं की सेनाओं को जीतनेवाले थे।

प्रसेनो द्वारवत्यां तु निवसन्त्यां महामणिम् ॥१३॥
दिव्यं स्यमन्तकं नाम समुद्रादुपलब्धवान्।
तस्य सत्राजितः सूर्यः सखा प्राणसमोऽभवत् ॥१४॥

**अर्थ**—द्वारकापुरी में बसते समय प्रसेन को स्यमन्तक नाम की दिव्य मणि समुद्र के तट पर परम्परा से प्राप्त हुई थी। प्रसेन के भाई सत्राजित् के सूर्यनारायण प्राण के समान प्रिय मित्र थे।

इति हरिवंशे अष्टात्रिंशोऽध्यायः ॥३८॥

# १

# षोडशराजोपाख्यानम्

**संजय उवाच**

श्रुत्वा मृत्युसमुत्पत्तिं कर्माण्यनुपमानि च ।
धर्मराजः पुनर्वाक्यं प्रसाद्यैनमथाब्रवीत् ।। १ ।।

संजय कहते हैं—राजन् ! मृत्यु की उत्पत्ति और अनुपम कर्म सुन कर धर्मराज युधिष्ठिर ने पुनः व्यासजी को प्रसन्न करके उनसे यह बात कही ।। १ ।।

**युधिष्ठिर उवाच**

भुयश्चः पुण्यकर्माणः शक्रप्रतिमविक्रमाः ।
स्थाने राजर्षयो ब्रह्मन्ननघाः सत्यवादिनः ।। २ ।।

युधिष्टर बोले—ब्रह्मन् ! इन्द्र के समान पराक्रमी, मेल पुण्यकर्मा, निष्पाप तथा सत्यवादी राजर्षिगण अपने श्रेष्ठ उत्तम स्थान (लोक) में निवास करते हैं ।। २ ।।

भूयः एव तु मां तथ्यैर्वचोभिरभिबृंहय ।
राजर्षीणां पुराणानां समाश्वासय कर्मभिः ।। ३ ।।

अतः आप पुनः उन प्राचीन राजर्षियों के सत्कर्मोंका श्रेष्ठ ठहराने वाले अपने यथार्थ वचनों द्वारा मेरा सौभाग्य करके और मुझे आश्वासन दीजिये ।। ३ ।।

कियन्त्यो दक्षिणा दत्ताः कैश्च दत्ता महात्मभिः ।
राजर्षिभिः पुण्यकृद्भिस्तद् भवान् प्रब्रवीतु मे ।। ४ ।।

पूर्वकालके किन-किन महामनस्वी पुण्यात्मा राजर्षियोंने यज्ञोंमें कितनी-कितनी दक्षिणाएँ दी थीं । यह सब आप मुझे बताइये ।। ४ ।।

व्यास उवाच

## नारद और सृंजय

शैब्यस्य नृपतेः पुत्रः सृञ्जयो नाम नामतः ।
सखायौ तस्य चैवोभौ ऋषी पर्वतनारदौ ।। ५ ।।

व्यासजीने कहा—राजन् ! राजाशैव्यके सृजय नामसे प्रसिद्ध एक पुत्र था । उसके पर्वत और नारद—ये दो ऋषि मित्र थे ।। ५ ।।

तौ कदाचिद् गृहं तस्य प्रविष्टौ तद्दिदृक्षया ।
विधिवच्चार्चितौ तेन प्रीतौ तत्रोषतुः सुखम् ।। ६ ।।

एक दिन वे दोनों महर्षि सृंजयसे मिलनेके लिये उसके घर पधारे । उसने विधिपूर्वक उनकी पूजा की और वे दोनों वहीं सुखपूर्वक रहने लगे ।। ६ ।।

तं कदाचित् सुखासीनं ताभ्यां सह शुचिस्मिता ।
दुहिताभ्यागमत् कन्या सृजयं वरवर्णिनी ।। ७ ।।

एक समय उन दोनों ऋषियोंके साथ राजा सृंजय सुखपूर्वक बैठे थे । उसी समय पवित्र मुसकानवाली परम सुन्दरी सृंजयकी कुमारी पुत्री वहाँ आयी ।। ७ ।।

तयाभिवादितः कन्यामभ्यनन्दद् यथाविधि ।
तत्सलिङ्गाभिराशीर्भिरिष्टाभिरभितः स्थिताम् ।। ८ ।।

आकर उसने राजाको प्रणाम किया । राजाने उसके अनुरूप अभीष्ट आशीर्वाद देकर अपने पार्श्वभागमें खड़ी हुई उस कन्याका विधिपूर्वक अभिनन्दन किया ।। ८ ।।

तां निरीक्ष्याब्रवीद् वाक्यं पर्वतः प्रहसन्निव ।
कस्येयं चञ्चलापाङ्गी सर्वलक्षणसम्मता ।। ९ ।।

तब महर्षि पर्वतने उस कन्याकी ओर देखकर हँसते हुए-से कहा—'राजन् ! यह समस्त शुभ लक्षणोंसे सम्मानित चञ्चल कटाक्षवाली कन्या किसकी पुत्री है ? ।। ९ ।।

उताहो भाः स्विदर्कस्य ज्वलनस्य शिखा त्वियम् ।
श्रीर्ह्रीः कीर्तिर्धृतिः पुष्टिः सिद्धिश्चन्द्रमसः प्रभा ।। १० ।।

'अहो ! यह सूर्यकी प्रभा है या अग्निदेवीकी शिखा है अथवा श्री, ह्री, कीर्ति, धृति, पुष्टि, सिद्धि या चन्द्रमाकी प्रभा है ?' ।। १० ।।

एवं ब्रुवाणं देवर्षिं नृपतिः सृञ्जयोऽब्रवीत् ।
ममेयं भगवन् कन्या मत्तो वरमभीप्सति ।। ११ ।।

इस प्रकार पूछते हुए देवर्षि पर्वतसे राजा सृंजयने कहा—'भगवन् ! यह मेरी कन्या है, जो मुझसे वर प्राप्त करना चाहती है' ।। ११ ।।

नारदस्त्वब्रवीदेनं देहि मह्यमिमां नृप ।
भार्यार्थे सुमहच्छ्रेयः प्राप्तुं चेदिच्छसे नृप ।। १२ ।।

इसी समय नारदजी राजासे बोले—'नरेश्वर ! यदि तुम परम कल्याण प्राप्त करना चाहते हो तो अपनी इस कन्याको धर्मपत्नी बनानेके लिये मुझे दे दो' ।। १२ ।।

ददानीत्येव संहृष्टः सृञ्जयः प्राह नारदम् ।
पर्वतस्तु सुसंक्रुद्धो नारदं वाक्यमब्रवीत् ।। १३ ।।

तब सृंजयने अत्यन्त प्रसन्न होकर नारदजीसे कहा—'दे दूँगा' । यह सुनकर पर्वत अत्यन्त कुपित हो नारदजी बोले—।। १३ ।।

हृदयेन मया पूर्वं वृतां वै वृतवानसि ।
यस्माद् वृता त्वया विप्र मा गाः स्वर्गं यथेप्सया ।। १४ ।।

'ब्रह्मन् ! मैंने मन-ही-मन पहले ही जिसका वरण कर लिया था, उसीका तुमने वरण किया है । अतः तुमने मेरी मनोनीत पत्नीको वर लिया है, इसलिये अब तुम इच्छानुसार स्वर्गमें नहीं जा सकते' ।। १४ ।।

एवमुक्तो नारदस्तं प्रत्युवाचोत्तरं वचः ।
मनोवाग्बुद्धिसम्भाषा दत्ता चोदकपूर्वकम् ।। १५ ।।

पाणिग्रहणमन्त्राश्च प्रथितं वरलक्षणम् ।
न त्वेषा निश्चिता निष्ठा निष्ठा सप्तपदी स्मृता ।। १६ ।।

उनके ऐसा कहनेपर नारदजीने उन्हें यह उत्तर दिया—'मनसे संकल्प करके, वाणीद्वारा प्रतिज्ञा करके, बुद्धिके द्वारा पूर्ण निश्चयके साथ, परस्पर

सम्भाषणपूर्वक तथा संकल्पका जल हाथमें लेकर जो कन्यादान किया जाता है, वरके द्वारा जो कन्याका पाणिग्रहण होता है और वैदिक मन्त्रके पाठ किये जाते हैं, यही विधि-विधान कन्या-परिग्रहके साधकरूपसे प्रसिद्ध है; परंतु इतनेसे ही पाणिग्रहणकी पूर्णताका निश्चय नहीं होता है। उसकी पूर्ण निष्ठा तो सप्तपदी ही मानी गयी है ।। १५-१६ ।।

अनुत्पन्ने च कार्यार्थे मां त्वं व्याहृतवानसि ।
तस्मात् त्वमपि न स्वर्गे गमिष्यसि मया विना ।। १८ ।।

'अतः इस कन्याके ऊपर पतिरूपसे तुम्हारा अधिकार नहीं हुआ है—ऐसी अवस्थामें भी तुमने मुझे शाप दे दिया है, इसलिये तुम भी मेरे बिना स्वर्ग नहीं जा सकोगे' ।। १७ ।।

अन्योन्यमेवं शप्त्वा वै तस्थतुस्तत्र तौ तदा ।
अथ सोऽपि नृपो विप्रान् पानाच्छादनभोजनैः ।। १८ ।।

पुत्रकामः परं शक्त्या यत्नाच्चोपाचरच्छुचिः ।

इस प्रकार एक दूसरेको शाप देकर वे दोनों उस समय वहीं ठहर गये। इधर राजा सृंजयने पुत्रकी इच्छासे पवित्र हो पूरी शक्ति लगाकर बड़े यत्नसे भोजन, पीने योग्य पदार्थ तथा वस्त्र आदि देकर ब्राह्मणोंकी अराधना की ।। १८/१-२ ।।

तस्य प्रसन्ना विप्रेन्द्राः कदाचित् पुत्रमीप्सवः ।। १९ ।।

तपः स्वाध्यायनिरता वेदवेदाङ्गपारगाः ।
सहिता नारदं प्राहुर्देह्यस्मै पुत्रमीप्सितम् ।। २० ।।

एक दिन राजापर प्रसन्न होकर उन्हें पुत्र देनेकी इच्छा वाले सभी श्रेष्ठ ब्राह्मण, जो तपस्या और स्वाध्यायमें संलग्न रहनेवाले तथा वेद-वेदाङ्गोंके पारंगत विद्वान् थे, एक साथ नारदजीसे बोले—'देवर्षे ! आप इन राजा सृंजयको अभीष्ठ पुत्र प्रदान कीजिये' ।। १९-२० ।।

तथेत्युक्त्वा द्विजैरुक्तः सृञ्जयं नारदोऽब्रवीत् ।
तुभ्यं प्रसन्ना राजर्षे पुत्रमीप्सन्ति ब्राह्मणाः ।। २१ ।।

ब्राह्मणोंके ऐसा कहनेपर नारदजीने 'तथास्तु' कहकर उनका अनुरोध स्वीकार कर लिया। फिर वे सृंजयसे इस प्रकार बोले—'राजर्षे ! ये ब्राह्मण लोग प्रसन्न होकर तुम्हारे लिए अभीष्ट पुत्र प्राप्त करना चाहते हैं ।। २१ ।।

वरं वृणीष्व भद्रं ते यादृशं पुत्रमीप्सितम् ।
तथोक्तः प्राञ्जली राजा पुत्रं वव्रे गुणान्वितम् ।। २२ ।।

यशस्विनं कीर्तिमन्तं तेजस्विनमरिंदमम् ।
यस्य मूत्रं पुरीषं च क्लेदः स्वेदश्च काञ्चनम् ।। २३ ।।

सर्वं भवेत् प्रसादाद् वै तादृशं तनयं वृणे ।

'तुम्हारा कल्याण हो । तुम्हें जैसा पुत्र अभीष्ट हो, उसके लिये वर मांगो' । नारदजीके ऐसा कहनेपर राजाने हाथ जोड़कर उनसे एक सद्गुण-सम्पन्न, यशस्वी, कीर्तिमान्, तेजस्वी तथा शत्रुदमन पुत्र मांगा । वह बोला—'मुने । मैं ऐसे पुत्रकी याचना करता हूँ, जिसका मल, मूत्र, थूक और पसीना सब कुछ आपके कृपाप्रसादसे सुवर्णमय हो जाय' ।। २२-२३ ।।

**व्यास उवाच**

तथा भविष्यतीत्युक्ते जज्ञे तस्येप्सितः सुतः ।।

काञ्चनस्याकरः श्रीमान् प्रसादाच्च सुकाङ्क्षितः ।
अपतत् तस्य नेत्राभ्यां रुदतस्तस्य नेत्रजम् ।।

सुवर्णष्ठीविरित्येवं तस्य नामाभवत् कृतम् ।
तस्मिन् वरप्रदानेन वर्धयत्यमित धनम् ।। २४ ।।

व्यासजी कहते हैं—राजन् । तब मुनिने कहा—'ऐसा ही होगा' । उनके ऐसा कहनेपर राजाको मनोवाञ्छित पुत्र प्राप्त हुआ । मुनिके प्रसादसे वह शोभाशाली पुत्र सुवर्णकी खान निकला । राजा वैसा ही पुत्र चाहते थे । रोते समय उसके नेत्रोंसे सुवर्णमय आँसू गिरता था । इसीलिये उस पुत्रका नाम सुवर्णष्ठीवि प्रसिद्ध हो गया । वरदानके प्रभावसे वह अनन्त धनराशकी वृद्धि करने लगा ।। २४ ।।

कारयामास नृपतिः सौवर्णं सर्वमीप्सितम् ।
गृहप्राकारदुर्गाणि ब्राह्मणावसथान्यपि ।। २५ ।।
शय्यासनास्थानानि स्थालीपिठरभाजनम् ।
तस्य राजाऽपियद् वेश्म बाह्याश्चोपस्कराश्च ये ।। २६ ।।
सर्वं तत् काञ्चनमयं कालेन परिवर्धितम् ।

राजाने घर, परकोटे, दुर्ग एवं ब्राह्मणोंके निवासस्थान सारी अभीष्ट वस्तुएँ सोनेका बनवा लीं । शय्या, आसन, सवारी, बटलोई, थाली, अन्य

वर्तन, उस राजाका महल तथा बाह्य उपकरण—ये सब कुछ सुवर्णमय बन गये थे, जो समयके अनुसार बढ़ रहे थे ।। २५-२६ ।।

अथ दस्युगणाः श्रुत्वा दृष्ट्वा चैनं तथाविधम् ।। २७ ।।
सम्भूय तस्य नृपतेः समारब्धाश्चिकीर्षितुम् ।

तदनन्तर दस्युओंने राजाके वैभवकी बात सुनकर तथा उन्हें वैसा ही सम्पन्न देखकर संगठित हो उनके यहाँ लूट-पाट आरम्भ कर दी ।। २७ ।।

केचित् तदाब्रुवन् राज्ञः पुत्रं गृह्णीम वै स्वयम् ।। २८ ।।
सोऽस्याकरः काञ्चनस्य तस्य यत्नं चरामहे ।

उन डाकुओंमेंसे कोई-कोई इस प्रकार बोले—'हम सब लोग इस राजाके पुत्रको अधिकारमें कर लें; क्योंकि वही इस सुवर्णकी खान है । अतः हम उसीको पकड़नेका यत्न करें' ।। २८ ।।

ततस्ते दस्यवो लुब्धाः प्रविश्य नृपतेर्गृहम् ।। २९ ।।
राजपुत्रं तथा जह्रुः सुवर्णष्ठीविनं बलात् ।

तब उन लोभी लुटेरोंने राजमहलमें प्रवेश करके राजकुमार सुवर्णष्ठीवीको बलपूर्वक हर लिया ।। २९ ।।

गृह्यैनमनुपायज्ञा नीत्वारण्यमचेतसः ।। ३० ।।
हत्वा विशस्य चापश्यन् लुब्धा वसु न किञ्चन ।
तस्य प्राणैर्विमुक्तस्य नष्टं तद् वरदं वसु ।। ३१ ।।

योग्य उपायको न जानने वाले उन विवेकशून्य डाकुओंने उसे वनमें ले जाकर मार डाला और उसके शरीरके टुकड़े-टुकड़े करके देखा, परंतु उन्हें थोड़ा-सा भी धन नहीं दिखाई दिया । उसके प्राणशून्य होते ही वह वरदायक वैभव नष्ट हो गया ।। ३०-३१ ।।

दस्यवश्च तदान्योन्यं जघ्नुर्मूर्खा विचेतसः ।
हत्वा परस्परं नष्टाः कुमारं चाद्भुतं भुवि ।। ३२ ।।
असम्भाव्यं गता घोरं नरकं दुष्टकारिणः ।

उस समय वे विचारशून्य मूर्ख एवं दुराचारी दस्यु भूमण्डलके उस अद्भुत और असम्भव कुमारका वध करके परस्पर एक दूसरेको मारने लगे । इस प्रकार मार-पीट करके वे भी नष्ट हो गये और भयंकर नरकमें पड़ गये ।। ३२ ।।

तं दृष्टा निहतं पुत्रं वरदत्तं महातपाः ॥ ३३ ॥
विललाप सुदुःखार्तो बहुधा करुणं नृपः ।

मुनिके वरसे प्राप्त हुए उस पुत्रको मारा गया देख वे महातपस्वी नरेश अत्यन्त दुःखसे आतुर हो नाना प्रकारसे करुणाजनक विलाप करने लगे ॥ ३२ ॥

विलपन्तं निशम्याथ पुत्रशोकहतं नृपम् ॥ ३४ ॥
प्रत्यदृश्यत देवर्षिर्नारदस्तस्य संनिधौ ।

पुत्रशोकसे पीड़ित हुए राजा सृजय विलाप कर रहे हैं——यह सुनकर देवर्षि नारद उनके समीप दिखायी दिये । ३४ ।

उवाच चैन दुःखार्तं विलपन्तमचेतसम् ॥ ३५ ॥
सृञ्जयं नारदोऽभ्येत्य तन्निबोध युधिष्ठर ।

युधिष्ठिर ! दुःखसे पीड़ित हो अचेत होकर विलाप करते हुए राजा सृञ्जयके निकट आकर नारदजीने जो कुछ कहा था, वह सुनो ॥ ३५ ॥

**नारद उवाच**

त्यज शोकं महाराज वैक्लव्य त्यज बुद्धिमन् ।
न मृतः शोचतो जीवेन्मुह्यतो वा जनाधिप ॥

नारदजी बोले—महाराज ! शोकका त्याग करो ! बुद्धिमान् नरेश ! व्याकुलता छोड़ो । जनेश्वर ! कोई कितना ही शोक क्यों न करे या दुःखसे मूर्छित क्यों न हो जाय, इससे मरा हुआ मनुष्य जीवित नहीं हो सकता ॥

त्यज मोहं नृपश्रेष्ठ न हि मुह्यन्ति त्वद्विधाः ।
धीरो भव महाराज ज्ञानवृद्धोऽसि मे मतः ॥

नृपश्रेष्ठ ! मोह त्याग दो ! तुम्हारे-जैसे पुरुष मोहित नहीं होते हैं । महाराज ! धैर्य धारण करो ! मैं तुम्हें ज्ञानमें बढ़ा-चढ़ा मानता हूँ ॥

कामानामवितृप्तस्त्वं सृञ्जयेह मरिष्यसि ॥ ३६ ॥
यस्य चैते वयं गेहे उषिता ब्रह्मवादिनः ।

सृंजय । जिसके धरमें ये हम-जैसे ब्रह्मवादी मुनि निवास करते हैं, वह तुम भी यहाँ एक दिन भोगोंसे अतृप्त रहकर ही मर जाओगे ॥ ३६ ॥

**आविक्षित मरुत**

आविक्षितं मरुतं च मृतं सृञ्जय शुश्रुम ॥ ३७ ॥

संवर्तो याजसामास स्पर्धया वै बृहस्पतेः ।
यस्मै राजर्षये प्रादाद् धनं स भगवान् प्रभुः ।। ३८ ।।

हैमं हिमवतः पादं यियक्षोर्विविधैः स वै ।
यस्य सेन्द्राऽमरगणा बृहस्पतिपुरोगमाः ।। ३९ ।।

देवा विश्वसृजः सर्वे यजनान्ते समासते ।
यज्ञवाटस्य सौवर्णाः सर्वे चासन् परिच्छदाः ।। ४० ।।

यस्य सवे तदा ह्यन्नं मनोऽभिप्रायगं शुचि ।
कामतो बुभुजुर्विप्रा सर्वे चान्नार्थिनो द्विजाः ।। ४१ ।।

पयोदधि घृतं क्षौद्रं भक्ष्यं भोज्यं च शोभनम् ।
यस्य यज्ञेषु सर्वेषु वासांस्याभरणानि च ।। ४२ ।

ईप्सितान्युपतिष्ठन्ते प्रहृष्टान् वेदपारगान् ।
मरुतः परिवेष्टारो मरुत्तस्याभवन् गृहे ।। ४३ ।।

आविक्षितस्य राजर्षेर्विश्वेदेवाः सभासदः ।
यस्य वीर्यवतो राज्ञः सुवृष्टया सस्यसम्पदः ।। ४४ ।।

हविर्भिस्तर्पिता येन सम्यक् क्लृप्तैर्दिवौकसः ।
ऋषीणां च पितॄणां च देवानां सुखजीविनाम् ।। ४५ ।।

ब्रह्मचर्यश्रुतिमुखैः सर्वैर्दानैश्च सर्वदा ।
शयनासनयानानि स्वर्णराशीश्च दुस्त्यजाः ।। ४६ ।।

तत् सर्वममितं वित्तं दत्तं विप्रेभ्य इच्छया ।
सोऽनुध्यातस्तु शक्रेण प्रजाः कृत्वानिरामयाः ।। ४७ ।।

श्रद्दधानोजिताँल्लोकान् गतःपुण्यदुहोऽक्षयान् ।

सृंजय ! अविक्षितके पुत्र राजा मरुत भी मर गए, ऐसा हमने सुना है। बृहस्पतिजीके साथ स्पर्धा रखनेके कारण उनके भाई संवर्तने जिन राजर्षि मरुतका यज्ञ कराया था, भांति-भाँतिके यज्ञों द्वारा भगवान्‌का यजन करने की इच्छा होनेपर जिन्हें साक्षात् भगवान् शङ्करने प्रचुर धनराशिके रूपमें हिमालयका एक सुवर्णमय शिखर प्रदान किया था तथा प्रतिदिन यज्ञकार्यके अन्त में जिनकी सभामें इन्द्र आदि देवता और बृहस्पति आदि समस्त प्रजापतिगण सभासद्‌के रूपमें बैठा करते थे, जिनके यज्ञमण्डपकी सारी साम-ग्रियाँ सोनेकी बनी हुई थीं, जिनके यहाँ उन दिनों सब प्रकार का अन्न, मनकी इच्छाके अनुरूप और पवित्ररूप में उपलब्ध होता था और सभी

भोजनार्थी ब्राह्मण एवं द्विज जहाँ अपनी इच्छाके अनुसार दूध, दही, घी, मधु एवं सुन्दर भक्ष्य-भोज्य पदार्थ भोजन करते थे, जिसके सम्पूर्ण यज्ञोंमें प्रसन्नतासे भरे हुए वेदों के पारंगत विद्वान् ब्राह्मणों को अपनी रुचिके अनुसार वस्त्र एवं आभूषण प्राप्त होते थे, जिन अविक्षितकुमार (राजर्षि मरुत्त) के घरमें मरुद्गण रसोई परोसनेका काम करते थे और विश्वेदेवगण सभासद् थे, जिन पराक्रमी नरेशके राज्यमें उत्तम वृष्टिके कारण खेतीकी उपज बहुत होती थी, जिन्होंने उत्तम विधिसे समर्पित किये हुए हविष्योंद्वारा देवताओंको तृप्त किया था, जो ब्रह्मचर्यपालन और वेदपाठ आदि सत्कर्मों द्वारा तथा सब प्रकारके दानोंसे सदा ऋषियों, पितरों एवं सुखजीवी देवताओंको भी संतुष्ट करते थे तथा जिन्होंने इच्छानुसार ब्राह्मणोंको शय्या, आसन, सवारी और दुस्त्यज स्वर्णराशि आदि वह सारा अपरिमित धन दान कर दिया था, देवराज, इन्द्र जिनका सदा शुभ चिन्तन करते थे, वे श्रद्धालु नरेश मरुत्त अपनी प्रजा को नीरोग करके अपने सत्कर्मों द्वारा जीते हुए पुण्यफलदायक अक्षय लोकोंमें चले गये ।। ३७-३७ ।।

सप्रजः सनृपामात्यः सदारापत्यबान्धवः ।। ४८ ।।
यौवनेन सहस्राब्दं मरुत्तो राज्यमन्वशात् ।

राजा मरुत्तने युवावस्थामें रहकर प्रजा, मन्त्री, धर्म पत्नी, पुत्र और भाईयोंके साथ एक हजार वर्षोंतक राज्य शासन किया था ।। ४८ ।।

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।। ४९ ।।

पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येत्युदाहरत् ।। ५० ।।

श्वैत्य सृंजय ! धर्म, ज्ञान, वैराग्य तथा ऐश्वर्य इन चारों बातोंमें राजा मरुत्त तुमसे बढ़कर थे और तुम्हारे पुत्रसे भी अधिक पुण्यात्मा थे । तुम्हारे पुत्र ने तो कोई यज्ञ किया था और न उसमें उसमें कोई उदारता ही थी। अतः उसको लक्ष्य करके तुम चिन्ता न करो—नारदजीने राजा सृंजयसे यही बात कही ।। ४९-५० ।।

षोडशराजकीये पञ्चपञ्चशत्तमोऽध्यायः ।। ५५ ।।

षोडशराजकीयोपाख्यानविषयक पचपनवाँ अध्याय ।। ५५ ।।

